बिरजनाम्नीं च । ( या समं उषहिनसंध्यया समकार्यिणी या च संचयान् धान्यानां प्रवर्धयति या मनुष्येषु मध्ये सत्कार्यिणी ये नगरेन्यायानां अधिष्ठातारः ) । माननाम्नीं च[29] पुण्यात्मनीं पुण्यगुर्वीं ( या मनुष्येषु गृहैवर्तिषु मध्ये सत्कार्यिणी ) आ० न० मा० प्र० ॥

श्रोशस्य ( पुण्यात्मकस्य ) भक्तिशीलस्य दृढस्य तनोः आदेशपतेः चमत्कारस्य शस्त्रस्य स्वामिनः ( अर्जहीदीपस्य[30]) आनंदनाय आराधनाय नमस्करणाय माननाय प्रकाशनाय ॥

"यथा स्वामिनः कामः" ( किल यथा अहुर्मिज्दाभिलाषः ) हे योत[31] प्रकृष्टं मे ब्रूहि ॥ "एवं आदेशः पुण्यात् यस्मात् कस्माचित्" प्रकृष्टं पुण्यात्मन् विज्ञाय ब्रवीमि । ( किल सर्वं कार्यं पुण्यं एवं आदेशः कर्तुं[32] यथा अहुर्मज्दस्य कामः ) ॥

श्रोशं भक्तिशीलं शुभोदितं विजयिनं वृद्धिदं पृथिवीविभूतेः पुण्यात्मानं पुण्यगुरुं आराधये ( आदेशपतिं ) ।

॥ २ ॥ अहुनवरं ( आराधये ) ( स्वामिनोऽभिलाषलक्षणं ) तनुप्रहरकम्[33] ॥

के मह्यं[34] महाज्ञानिन् मदीयेभ्यश्च पातारो दत्ताः ( शिष्येभ्यश्च मदीयेभ्यः )

यतो मयि दुर्गतिः ( आस्मोगः[35] ) विदित्वा दधाति द्वेषम् ( किल मया[36] सह द्वेषं दधाति मे रक्षां के कुर्वंति )

अन्यास्त्वत्तोऽग्नेश्च ग्वह्मनाच्च[37] ( यत् युष्मान् वेद्मि किल मे रक्षां कुरुथ )

येषां कर्मभिः पुण्यं पालयामि स्वामिन् । ( किल कार्यं पुण्यं करोमि मे रक्षां के[38] कुर्वंति ) ।

तान् मे आदेशेन दीनौ प्रकृष्टं ब्रूहि । ( इदं ब्रूहि यत् दीनिगुरुं गृहाण ) ॥ ( प्रकृष्टवाक् जरथुश्त्रस्य ) ॥

के[39] विजयितया हंतारः । तव रक्षया शिक्षार्याः । ( किल ते शिक्षया ते दीन्या पापकर्मिणो निघ्नंति[40] रक्षां च सृष्टेः के कुर्वंति ) ॥

ये संति प्रकटतया मे सृष्टये भुवनद्वये गुरुतां आस्वादयितारः[41] ( आदेशं इहलोकीयं परलोकीयं च ये ज्ञापयंति )[१४]

---

३. $K_1$, $K_3$ ग्रहवर्तिनिषु. ग्रहवर्तिषु corrected into गृहवर्तिषु from ग्रहवर्तिनिषु of the text. ४. अहुर्मिज्दाभिलाषः corrected from अहुर्मिज्दा अभिलाषः ५. $H_1 K_1 K_3$ ज्योतिःस्वरूपः $K_4$ योतिस्वरूपं. ६. सर्वं corrected from $K_1$ सर्वे. ७. पुण्यात्मानं corrected from $K_1$ पुण्यात्मनं which is very often the reading.

॥ २ ॥ १. ( स्वामिनोऽभिलाषलक्षणं ) तनुप्रहरकं corrected from $K_1$ स्वामिनोऽभिलाषलक्षणतनुप्रहरकं· २. प्रहरक [=पातृ] meaning guarding, protecting. ३. दत्ताः corrected from दत्तः. ४. दुर्गती corrected into दुर्गतिः. ५. ग्वह्मनात् corrected from $K_1$ ग्वहमना. ६. Some MSS. कुरुषे. ७. Sp. दीनिं गुरुणा ग्रह्णामि instead of दीनिगुरुं गृहाण. गृहाण corrected from $K_1$ ग्रहणा. ८. प्रकृष्टावाक instead of प्रकृष्टवाक्. ९. Corrected from विजयतया and $K_1$ हेतार. १०. Sp. तव रक्षया शिक्षायाः, $NMRL_1$,$EMU_4$,$K_3$,$EMU_2$,$K_1$,$H_1$ ते पातारः शिक्षया. ११. Sp. किल ( ये संति ) दीन्या ते पापकर्मिणो निग्रहं के कुर्वंति instead of $K_1$ किल ते &c. of the text. १२. Sp. प्रकटतया corrected from $K_1$ प्रकृष्टतया. १३. Sp. द्वयेऽपि, $EMU_4$,$K_3$,$NMRL_1$,$K_1$,$H_1$ द्वये or द्वयेन. १४. Sp. किल इहलोकीये परलोकीयेच गुरुतया गृहीतोऽस्मि.

[15]एवं तस्य उत्तमेन श्रोशस्य समागमनं मनसा । ( किल[16] श्रोशस्य इति गुस्तास्पस्य[42] उत्तमेन मनसा दीनौ समागमनम् ) ।

[17]महाज्ञानिनः तस्य (मे कामः) यस्य कामः केभ्यश्चित् । (किल[18] मे समागमनं सओशिओसस्य[43] रोचते यस्य कामः [ अयं यत् ] केभ्यश्चित् सर्वेभ्यः अन्यायो यस्मात् विलीयते ) ॥

॥ ३ ॥ ..........................[43a] नमो या स्पंदारमदा[44] महत्तरा! (किल या संपूर्णमानसा पृथ्वी महत्तरा तस्यै नमः ) । [ अशेम्वोहू १ अहुनवर २ ]

॥ ४ ॥ इजिस्नि[45] च नमस्कृतिं च शक्तिं च प्राणं[46] च आशीर्वादयामि श्रोशस्य (पुण्यात्मकस्य) भक्तिशीलस्य दृढस्य तनोः आदेशपतेः चमत्कारस्य शस्त्रस्य स्वामिनः । [ अशेम्वोहू १ ]

॥ ५ ॥ अस्माकं शुद्धयश्च श्रियश्च । अस्माकं तनोरुपप्रवृत्तिः[1] । अस्माकं तनोः पीवरता । अस्माकं तनोः विजयः । अस्माकं लक्ष्मीः संपूर्णा शुभा ( किल सदाचारात् उपार्जिता ) । अस्माकं सहजशीलः पुत्रः । अस्माकं दीर्घात् दीर्घं जीवितम्[2] । अस्माकं अतःपरं भुवनं मुक्तात्मनां सदोद्द्योतं समस्तशुभम् । एवं संप्राप्नोतु यथा आशीर्वादयामि । [ अशेम्वोहू १ ]

सहस्रं आरोग्यतानां दशसहस्रं आरोग्यतानाम्[47] ॥ [ अशेम्वोहू १ ]

एहि मे सहायतायै महाज्ञानिन् ॥ उत्साहिनं च सुघटितं शुभोदितं विजयं च होर्मिज्द्दत्तं ढालनांच या उपरि प्रवृत्त्या । ( बहरामइअज्दम् ) ।

आनंदनिर्भयत्वं आस्वादं च । ( स ईअज्दः येन मनुष्याः खाद्यस्य स्वादुं [स्वादं] जानंति ) । पक्षिण उपरिकार्यस्य विनष्टं क्रियते सर्वस्य सृष्टेः । एवं ते पक्षिणो यतः ते संति दादारस्य सृष्टेः ।

शुभं चक्रं स्वयमेवदत्तं कालः अनंतः समयो दीर्घराजा । [ अशेम्वोहू १ ]

........................[48]एवं संप्राप्नोतु यथा आशीर्वादयामि[49] ॥

---

## [ होषबाम[1] इति प्राभातिकपूजावचनम् ][50]

॥ १ ॥ अत्र इमां वाचं [इदं वचः] आघोषयेत् । विजयितया हंतृतमं च आरोग्यकारितमं च । पंच अहुनवरम् । [ अहुनवर ५ पूर्वोक्तवत् । अहुनवरं (आराधये) पूर्वोक्तवत् । के मह्यं महाज्ञानिन् पूर्वोक्तवत् । अहनुवर २ पूर्वोक्तवत् ]

---

१५. $H_1$,$K_1$,$NMRL_1$,$EMU_2$,$EMU_4$ एवं सा उत्तमेन श्रोशस्य संप्राप्तिर्मनसा. १६. $K_1$,$EMU_2$,$EMU_4$,$K_3$ किल उत्तमेन मनसा सह श्रोशस्य इति गुस्तास्पस्य संप्राप्तिः सहायतया मम सृष्टौ; $EMU_2$ सृष्टेः. १७. $H_1$,$K_1$,$EMU_4$,$K_3$ अहुर्मिज्दः तस्य यस्य कामः कस्यैचित्; $EMU_2$ अहुरमज्दस्य मे सहायस्य कामः केभ्यश्चित्. १८. $K_1$, $NMRL_1$ किल सर्वान् कांश्चित् [$EMU_2$ कामान्] अभिलाषति अन्यायो यस्मात् अपागच्छति.

॥ ५ ॥ १. $H_1$,$K_4$,$EMU_2$, तनोः रूपप्रवृत्तिः=[correctly उपवृत्ति]. २. $K_4$,$EMU_2$ दीर्घं दीर्घतरं; $EMU_4$ दीर्घांदीर्घजीवितं [जीविर्तिं ?].

॥ १ ॥ १ होषबाम is found only in $K_1$,$K_3$.

॥ २ ॥ नमस्ते चैतन्यप्रत्युषसे[१] तेजसे ॥ अत्र तं विश्वेभ्यो महत्तरं संगृह्णामि स्वामिनं गुरुं च यं अहुर्मज्दम् ॥ शस्त्रं[51] हंतेरि[२] अदृश्ये दुर्गतिमति आहर्मने । शस्त्रं[३] क्रोधे हिंसाशस्त्रिणि । शस्त्रं माजन्दरदेशीयेषु[52] देवेषु । शस्त्रं विश्वेषु देवेषु विभ्रमकरेषु ।

॥ ३ ॥ वृद्धिदानं[53] स्वामिनो महाज्ञानिनः । वृद्धिदानं अमरेभ्यो महत्तरेभ्यो । वृद्धिदानं तिश्त्राय[54] तारकाय शुद्धिमते श्रीमते । वृद्धिदानं नराय मुक्तात्मने । वृद्धिदानं विश्वाभ्यो स्पनामिनिउस्सृष्टिभ्यः[55] पुण्यात्मनीभ्यः ॥ [ अहुनवर २ ]

॥ ४ ॥A. उत्तमा[१] नराणां उत्तमा नारीणां ( तेषां ) आशीर्वादयामि यत् सर्वेषां मुक्तात्मनां पंक्तये ( ये[२] संजाताः) । वर्तमानानां च अतीतानां च भविष्याणां च ॥

लक्ष्मीं[३] चक्रस्थितां[56] । (उत्तमां दक्षिणां) । दीर्घां अभिलाषये । यत् [या] सदैव उदयसहाय्यः [°य्या] शुभस्य उपरि आस्ते उदयसहाय्यः[३] [°य्या] सदैव शिर्ष्यां[४] [शिष्याणां] दातुं शक्यते[57] ॥

भवंतु सर्वे आरोग्यकराः यत् आपः गावः पशवश्च वनस्पतयश्च ॥

विनाशं पीडां[५] करोमि सर्वेषां बहूनां देवीयानां मनुष्याणाम् ॥ अच्छेदं कुरु अंतरेऽस्मिन् गृहे अपरेषां गृहे गृहपतीनाम् ॥

उत्तमां[६] दातिं[58] उत्तमं पुण्यं ( देहि ) ॥ शोभनं प्राक्तनं ( पर्वद्)[59] उत्तमं [च] नरं शिर्ष्यं[७] चक्रस्थितं उत्तमं दीर्घं समीहे ॥

यत् अस्माकं उत्तमं अतःपरं शुभतरं पुण्यं कुरु । अमिशास्पितानां[60] आराधनाय नमस्करणाय माननाय प्रकाशनाय । वृद्धिदानं अस्मिन् गृहे [कुरु[८]] वृद्धिदानं सर्वेषां मुक्तात्मनां पंक्तये ॥ विपक्षं करोमि सर्वेषां दुर्गतिमतां पंक्तये ( सृष्टये ) ॥

B.स्तौमि पुण्यं (यत् इजिश्निं करोमि)......(अहुर्मज्दस्य स्वीयां[९] आराधनां करोमि) ॥

C.स्वेच्छया त्वं अहुर्मज्द शुभेन[१०] च स्वामितया स्वीयाः सृष्टेः ( किल स्वीयानां सृष्टीनां स्वेच्छया शुभेन च स्वामित्वं कुरु ) ।

स्वेच्छया अपः स्वेच्छया वनस्पतीन् स्वेच्छया समग्रा विभूतीः पुण्यात् प्रकटाः [ तासां स्वामित्वं कुरु ] ॥ पार्थिवत्वं मुक्तात्मनां देहि अपार्थिवत्वं दुर्गतिमताम् ॥ कामराजानोऽभवंतु पुण्यात्मानः अकामराजानो भवंतु दुर्गतिमंतः ॥ प्राप्तो मृत्युः अपव्रजतु स्पनामिनीउस्सृष्टिभ्यः विपर्ययतां[११] च अकामराज्यं च ॥ उत्तिष्ठामि[61] अहंचित् यो जरथुश्त्रः प्रकृष्टतमेभ्यो [गृहेभ्यो] वीसेभ्यश्च[62] जंदेभ्यश्च[63] ग्रामेभ्यश्च[64] अस्यां दीनौ उत्कृष्टेन मनसा उत्कृष्टेन वचसा उत्कृष्टेन कर्मणा या [दीनिः] अहुर्मिज्दीया जरथुश्त्रिया[64a] ॥

---

॥ २ ॥ १. Corrected of $K_1$ चैतन्यप्रत्युषे तेजासि. २. Corrected from $K_1$ शस्त्रं हेतारि &c. ३. Corrected from $K_1$ शस्त्रं क्रोधे यं हिंसाशस्त्रिणः.

॥ ४ ॥ १. उत्तमा नरा उत्तमा नार्यः is another reading. २. Sp. ये संजाताः; $K_1$ येषां संजाता. ३. उत्तमसाहाय्या in both places would be better. ४. शिक्षां is perhaps the reading ?. ५. $K_1$ विनाशपीडा. ६. उत्तमां corrected from उत्तमं. ७ $K_1$ शिर्ष्यं. ८. कुरु is understood after वृद्धिदानं आस्मिन्गृहे. ९. Corrected from $K_1$ स्वीयं. १०. Corrected from शोभन. ११. Corrected from $K_1$ विप्रयता.

॥ ५ ॥ यत् अस्माकं अमीषां अपरं साहाय्यं आत्मनां ( देहि ) । ..............पुण्यं अतःपरं पुण्यं शुभम् ।.........

## [ खुरशेद-न्यायश्नि ]

## [ "खुरशेद" इति सूर्यः "न्यायश्नि" इति स्तोत्रं ]

॥ ० ॥[१] ..............[65] [समस्तेभ्यः पापेभ्यः इत्यादि पूर्वोक्तवत्]

॥ १ ॥ नमस्ते स्वामिन् ( गुरो[१] ) महाज्ञानिन् त्रिधा ( किल मनसा वचसा कर्मणा च ) पूर्वं अन्यायाः[२] सृष्टेः ॥ नमो युष्मभ्यं हे अमिशास्पिताः सर्वे एकाभिलाषाः[66] । ( अभिशाः इति अमराः । स्पिताः इति गुरुतराः । सप्तमूर्तयः स्वामिनः )॥ अत्र संप्राप्नोतु स्वामी महाज्ञानी[३] । अत्र अमरा गुरुतराः ( सप्तमूर्तयः स्वामिनः ) । अत्र मुक्तात्मनां वृद्धयः[67] । अत्र रामो[68] दीर्घ राजा ॥

॥ २ ॥ सत्कारये[१] स्वामिनं महाज्ञानिनम् । (किल सानंदं करोमि) । क्षीणयामि[२] आहमनम् यथा प्रकटकर्मिणां यः अभिलाषः प्रकृष्टतरः । (अपापानाम्) ॥[69]

स्तौमि[३] पुण्यम् । [पुण्यं समृद्धिः उत्कृष्टतरा इत्यादि पूर्वोक्तवत्]

॥ ३ ॥ ४ ॥ प्रकृष्टं स्तौमि सुमतानि च सूक्तानि च सुकृतानि च । मनसा च वचसाच कर्मणा च ॥

अधिकं ग्रहणं करोमि समस्तानां सुमतानां सूक्तानां सुकृतानां च ॥ परित्यागं करोमि समस्तानां दुर्मतानां दुरुक्तानां दुःकृतानां च ॥

प्रकृष्टं युष्मभ्यं दक्षिणयामि (किल दाक्षिणीकरोमि) हे अमिशास्पिता[१] इजिस्नीं च नमस्कृतिं च । प्रकृष्टेन मनसा प्रकृष्टेन वचसा प्रकृष्टेन कर्मणा प्रकृष्टेन ऊहेन[70] (किल प्रज्ञोन्मेषेण[२]) । प्रकृष्टं तनोश्च[३] निजं जीवम् (किल सत्कम्[71] स्वाधीनतया युष्माकं धारयामि ) । ( स्वाधीनतया युष्माकं धारणं एवं किल यदि दातुं योग्यं तत्[४] विशेषेण ददामि )[72] स्तौमि पुण्यम् [ अशेम्वोहू १ ] ॥

॥ ५ ॥ नमः स्वामिने महाज्ञानिने नमोऽमरेभ्यो गुरुतरेभ्यः । नमो मिहिराय[73] नि-

---

॥ ५ ॥ १. From this line there is a blank, so nothing can be made out.

॥ ० ॥ १. $EMU_1$, $EMU_{12}$, and $K_5$ have only the Gujerâti translation of this Nyâesh. $EMU_3$ has none.

॥ १ ॥ १. Corrected from FBV, $K_2$ गुरोः. २. $K_4$, $EMU_2$ अन्यस्याः. ३. $K_8$, $H_1$, FBV स्वामिमहाज्ञानी; $NMRL_1$ स्वामीमहाज्ञानी.

॥ २ ॥ १. $EMU_4$ सन्मानंकृता[°त्या]. २. $K_4$ षिणयामि (ष for क्ष). ३. $K_4$ स्तउमि.

॥ ३ ॥ ४ ॥ १. $K_1$, $H_1$, $K_2$, $K_3$, $K_4$, $EMU_2$, $NMRL_1$ omit हे अमिशास्पिता. २. $K_1$, $H_1$, $K_2$, $K_3$, $K_4$, $EMU_2$, $NMRL_1$ प्रज्ञोन्मेषेण. Sp. प्रज्ञान्वेषणेन. $EMU_4$ omits, but in Gujerâti gives प्रज्ञानउलटेंकरी knowingly and willingly. ३. $H_1$, $K_2$, $EMU_4$, $NMRL_1$ तनुष्च; $K_4$, $EMU_2$ प्रकृष्टं तनुं च. ४. $EMU_4$ तं.

वासितारण्याय। नमः सूर्याय तेजस्विने वेगवदश्वाय। नमः तेभ्यो लोचनेभ्यो यानि[१] स्वामिनो महाज्ञानिनः। नमो गोमूर्तये (प्राक्सृष्टये[२])। नमो गइओमर्दाय[74] (आद्यपुरुषाय)। नमो जरथुश्त्रस्य स्पितमपुत्रस्य मुक्तात्मनो वृद्धये[३]। नमः समग्रायै मुक्तात्मनां सृष्टये[४]। वर्तमानानां च अतीतानां च भविष्याणां च।

[हावनसमये वक्तव्यं यथा]

उत्तमं[५] वर्धय मनः स्वामिन् (किल मे मनः सदाचारितरं कुरु) पुण्यात् च शुभं तनोः (किल[६] कार्यं पुण्यं च यन्मया कृतमस्ति तस्मात् च शुभं वपुषि मे देहि)[75] ॥

[रपीथ्विनसमये वक्तव्यं यथा]

अयं (आत्मा तस्मिन्) तेजसि यत् उच्चानां उच्चम् (किल मे आत्मा सूर्योच्छ्रयपदे[७] प्राप्नोतु)[76] ॥

[उजइरइरिन समये वक्तव्यं यथा]

त्वया गुरुतर अदृश्यरूपिन् परिभ्रामता[८] प्राप्नोति (निकृष्टतायाः[९] उत्तमतां तनोः अक्षयताम्) [एवं महत्तर त्वयि अदृश्यमूर्ते परिभ्रामता प्राप्नोति (निकृष्टत्वात् उत्तमत्वे[१०])[77]] [अशेम् वोहू ३]

॥ ६ ॥ मिहिरं (मैत्रि-अधिपतिं) निवासितारण्यं आराधये। सत्यवाचम्[१]। हुंजमनिकम्[78]। सहस्रकर्णम्। (तस्य सहस्रकर्णता च एवं किल सहस्रं ईअज्दानां समं अनेन नियुक्तं अस्ति[२] ते च मिहिरं प्रति ब्रुवंति यत् इदं च शृणु इदं च शृणु)। सुघटरूपम्। दशसहस्रलोचनम्। (अस्य दशसहस्रलोचनता च एवं किल दशसहस्रं ईअज्दानां समं अनेन नियुक्तं अस्ति ते च मिहिरं प्रति ब्रुवंति यत् इदं च पश्य इदं च पश्य)। महत्तरं संपूर्ण-वेत्तारं[३] (कार्यन्यायानाम्) साधकं अनिद्रं बलिष्ठभुजम्[79] ॥

॥ ७ ॥ मिहिरं सर्वेषां ग्रामाणां राजानं आराधये यं प्राददत्[१][80] स्वामी महाज्ञानी श्रीमत्तमं अदृश्यरूपेभ्यो इअज्देभ्यः ॥

तद् अस्माकं एहि सहायतायै मिहिरं[२] च स्वामिन् महत्तर ॥

सूर्यं तेजस्विनं अमरं शुद्धिमंतं वेगवदश्वं आराधये ॥

---

॥ ५ ॥ १. $K_4$, $EMU_2$ यानि, several MSS. ये. २. $H_1$ प्राक्सृष्टायो (?), $EMU_2$ प्राक्सृष्टाय. ३. वृद्धये corrected from FBV वृध्धयः. ४. $K_1$ अष्टये (?), $K_1$, $EMU_4$ पंक्तये corrected *seconda manu*. ५. उत्तमं वर्धय मनः corrected from FBV उत्तमाः वृध्धयः मनः, $EMU_2$ वर्धये. ६. किल कार्यं......देहि taken from Sp., omitted in $K_1$, $H_1$, $K_2$, $K_3$, $K_4$, $EMU_2$, $EMU_4$, $NMRL_1$. ७. $K_4$, $EMU_2$ सूर्योच्छ्रयपदे; $EMU_4$ सूर्योच्चयपदे; FBV सूर्योश्रयपदे. ८. [परिभ्राम्यता ?] ९. $K_1$, $K_3$, $EMU_4$ निकृष्टातायाः; corrected from निकृष्टतया. १०. Thus Spiegel, $EMU_4$.

॥ ६ ॥ १. $K_1$, $K_3$, $EMU_2$ सत्यवाच्यं. २. $K_3$, $K_4$, $H_1$ आस्ते; $EMU_4$ अस्ते; FBV अस्ति. ३. $K_4$, $EMU_2$ संपूर्णवेतारं; $K_1$, $H_1$, $K_3$, $NMRL_1$, FBV संपूर्णवेत्तारं.

॥ ७ ॥ १. Thus all. २. मिहिरच corrected from मित्रःच, मिहिरःच; $K_1$, $H_1$, $K_3$, $K_2$, $NMRL_1$ मिहिरस्य; FBV., $K_3$ मिहिरश्च. $K_4$, $EMU_2$ correctly मिहिर स्वामिन् महत्तर.

॥ ८ ॥ तिस्तरतारकस्य रूपवतीं दृष्टिं आराधये ॥ तिस्तरतारकं[81] आराधये । ( तिस्तरं इति वृष्टिनक्षत्रम् ) ॥ तिस्तरतारकस्य वृष्टीः आराधये ॥ तिस्तरतारकस्य शुद्धीः श्रियश्च आराधये ॥ वनंतं[82] तारकं महाज्ञानिना दत्तं आराधये ॥ तिस्तरतारकं शुद्धिमंतं[४] श्रीमंतं[५] आराधये ॥ शुभचक्रं[82a] स्वयं संतिष्ठमानं आराधये ॥ कालं अनंतं आराधये ॥ समयं दीर्घराजानं[६] आराधये ॥ वातं[७] महत्तरं उत्तमदानिनं[८] आराधये ॥ शुद्धां निर्वाणज्ञानितां[82b] महाज्ञानिना निर्मितां पुण्यात्मनीं आराधये ॥ दीनिं उत्तमां माज्दइअस्नीं आराधये ॥ पंथानं[83] अभिलाषिणं आराधये ॥ सुवर्णमयं शस्त्रं[84] आराधये । (किल सौकंतपर्वतोपरि पृथिवीमूलादारभ्य सुवर्णमयनलिका निर्मिता अस्ति तेन छिद्रेणे[९] पृथिवीतलस्थं उदकं आकाशे आरोहति तत् च वाताहतं[१०] सर्वत्र प्रसरति अतएव तुषारोदकं जायते[११] तत् च शस्त्रं सुवर्णमयं आराधये ) ॥ सौकंतं[85] गिरिं महाज्ञानिना दत्तं आराधये ॥

॥ ९ ॥ समग्रं[१] च पुण्यात्मकं परलोकचारिणं ईअज्द्गणं आराधये समग्रं च पुण्यात्मकं पृथिवीचारिणं ईअज्द्गणं आराधये ॥ स्वीयं आत्मानं आराधये । स्वीयां[२] वृद्धिं आराधये ॥

एहि मे सहायतायै महाज्ञानिन् ॥

सूर्यं तेजस्विनं अमरं शुद्धिमंतं[३] वेगवदश्वं आराधये ॥

॥ १० ॥ [ अशेम्वोहू ३ ][86] प्रब्रवीमि माज्दइअस्नीं जरथुश्त्रियां विभिन्नदेवां होर्मिज्दन्यायवतीम् । (किलमध्ये पापकर्मणां[१] ब्रवीमि ) ।

हाउअननाम्न्याः ( प्रातःसंध्यायाः ) पुण्यात्मकायाः पुण्यगुर्व्याः आराधनाय नमस्करणाय[२] माननायै[३] प्रकाशनाय । साउअंघनाम्नी (समं हाउअनसंध्यया एककार्यिणी या पशुयूथानां[४] वृद्धिकारिणी) वीसिनाम्नी[५] च तस्याः[६] पुण्यात्मकायाः पुण्यगुर्व्याः आराधनाय नमस्करणाय माननाय प्रकाशनाय ।[७]

सूर्यस्य तेजस्विनोऽमरस्य शुद्धिमतो वेगवदश्वस्य आनंदनाय आराधनाय नमस्करणाय माननाय प्रकाशनाय ।

"यथा स्वामिनः कामः" (किल यथा अहुर्मज्दाभिलाषः) हे जउत प्रकृष्टं मे ब्रूहि[८] ।

---

॥ ८ ॥ १. Corrected from EMU$_2$ रूपश्विनीं पृष्टं or दृष्टं; K$_1$, H$_1$, NMRL$_1$, EMU$_4$, K$_3$, FBV. रूपस्विनीं. २. Corrected from EMU$_2$, NMRL$^1$, EMU$_4$, K$_1$ वृष्टं or दृष्टं. ३. Correced from EMU$_2$, K$_1$, H$_1$, NMRL$_1$, EMU$_4$ शुध्धि. ४. K$_1$, H$_1$, K$_3$, EMU$_4$, NMRL, शुध्धिमत्तरं; K$_4$ शुध्धिमंत्यं. ५. K$_1$, H$_1$, K$_3$, EMU$_4$, NMRL$_1$ श्रीमत्तरं; K$_4$ श्रीमंत्यं. ६. K$_1$, H$_1$, K$_3$, K$_4$, EMU$_2$, EMU$_4$ दीर्घं राजानं or राजानां. ७. Corrected from K$_1$, H$_1$, NMRL$_1$, EMU$_4$, K$_4$, FBV वात्यं. ८. K$_1$, K$_3$, उत्तमदीनिनं. ९. K$_1$, H$_1$, K$_2$, K$_3$, EMU$_2$, EMU$_4$ तेनच्छिद्रेण. १०. K$_1$, H$_1$, K$_2$, K$_3$, K$_4$, EMU$_2$, EMU$_4$ वाताहतं or वातहतं. ११. K$_1$, H$_1$, K$_4$ यांयते.

॥ ९ ॥ १. EMU$_4$ समस्तं. २. Corrected from K$_4$ स्वीयं. ३. FBV श्रीमंतं which is not in the original Irânian text.

॥ १० ॥ The same as in श्रोशबाज *mutatis mutandis*. १. H$_1$, EMU$_4$, NMRL$_1$ पुण्यकर्मिणां, K$_1$ ऽपापकर्मिणां; K$_4$, EMU$_2$, K$_3$, पापकर्मिणां; NMRL$_1$ अपापकर्मिणां. २. NMRL$_1$, EMU$_4$ नमस्कारणाय. ३. K$_1$, H$_1$. K$_3$ माननयनाय. ४. H$_1$, K$_1$, K$_4$, EMU$_2$ °जूथानां. ५. K$_4$ EMU$_2$ after वीसिनाम्नीच या मनुष्येषु मोइबदेषु मध्ये सत्कार्यवती तस्याः &c. ६. K$_1$, H$_1$ तस्याः तस्याः. [ ७. K$_4$ gives Rapithvina and Uzayeirina after Hâvani, but without any translation ]. ८. हे योतिस्वरूपं; EMU$_4$ हेजोत; K$_3$ हे जोऊत; EMU$_2$ omits हे जउत प्रकृष्टं मे ब्रूहि.

"एवं आदेशः पुण्यात् यस्मात् कस्मात् चित्" प्रकृष्टं पुण्यात्मनं विज्ञाय ब्रवीमि[१०] (किल सर्वं कार्यं पुण्यं एवं आदेशः कर्तुं यथा अहुर्मज्दस्य कामः) ॥

॥ ११ ॥ सूर्यं तेजस्विनं अमरं शुद्धिमंतं वेगवदश्वं आराधये ॥

[१]ततो यत्[२] सूर्यः रोचिष्मान् तपते (किल ऊर्ध्वं एति) यत्[३] सूर्यस्य परिवेषः[86a] तपते तिष्ठंति अदृश्याः ईजद्‌दाः शतधा च सहस्रधा च ॥ ततः श्रियं[87] संमेलयंति[४] (एकत्र)। ततः श्रियं प्रचालयंति[५] (वा एकहेलया)। ततः श्रियं वर्षन्ति[६] जगत्यां उपरि अहुर्मिज्दद्‌त्तायां (स्वामिनिर्मितायाम्) वृद्धिदात्या च पुण्यात्मकायाः पृथिवीविभूतेः[७]। वृद्धिदात्या च पुण्यात्मकानां शरीरिणाम्। वृद्धिदात्या च सूर्यस्य[87a] यः अमरः शुद्धिमान् वेगवदश्वः ॥

॥ १२ ॥ ततो यत् सूर्यः ऊर्ध्वं आरोहति भवति पृथिवी होर्मिज्दद्‌त्ता पवित्रतरा (तस्मात् कुत्सितात्[१] [कुथितात्] यत् रात्रौ देवाः उपरि क्षिपंति[२]) उदकं प्रवाहाणां पवित्रतरं उदकं कूपकानां पवित्रतरम् उदकं समुद्राणां पवित्रतरं उदकं स्थावराणां[३] पवित्रतरम् (तडागादीनां च[88])। भवति सृष्टिः पुण्यात्मका पवित्रतरा याऽस्ति गुरुतरस्य अदृश्यमूर्तेः स्वामिनः ॥

॥ १३ ॥ यतो यदि सूर्यः नो[88a] ऊर्ध्वं उदेति[१] (किल कियन्मात्रं अपि कालं चेद्विलंबयति) ततो देवाः सर्वाण्यपि[२] विनाशयंति यानि संति सप्त द्वीपानि [सप्तद्वीपेषु]। न केचन[३] शून्यचारिणो[४] ईजद्‌दाः भुवनस्य सृष्टिमतः उपरिधारणायै न च उपरिस्थितये दृश्यंते। (किल ते न प्रतिकुर्वंति। अथ केचित् प्रतिकुर्वंति ते च न धर्तुं[५] शक्ता भवंति) ॥[89]

॥ १४ ॥ यः आराधयति सूर्यं अमरं शुद्धिमंतं वेगवदश्वं अन्यथा-स्थित्या तिमिरौघानां[१] विना-स्थित्या तमोबीजानां देवानां विना-स्थित्या चौराणां च बलात्कारिणां च विना-स्थित्या

---

९. EMU₂ पुण्यात्मनं; EMU₄ omits प्रकृष्टं पुण्यात्मन्. १०. EMU₂ ब्रवीमि जरथुस्त्रियां विभिन्नदेवां होर्मज्दन्यायवतीं किल मयि[ मध्ये ] पापकर्मिणां ब्रवीमि.(?)

॥ ११ ॥ १. K₁, K₃ यतः. २. सूर्यः corrected from सूर्यस्य of the text. ३. K₁, H₁, K₂, K₃ give ततो before यत्. ४. K₁, EME₂, K₄ संमेलयति; FBV, H₁, NMRL₁, EMU₄, K₃ संमेलियंति. ५. K₁, H₁, K₃ प्रचालयंति; FBV प्रचालयती. ६. K₁, EMU₂, NMRL₁, EMU₄ वर्षति; H₁, K₃ वर्षते. ७. K₁, EMU₂, EMU₄, K₄ पृथ्वीविभूतेः; H₁, NMRL₁ K₃ पृथ्वीभूतेः ८. EMU₂ सूर्यस्य अमरस्य शुध्धिमतः वेगवदश्वस्य.

॥ १२ ॥ १. H₁, K₂, K,₃ K₄, EMU₂, NMRL₁ कुत्सितात्; FBV कुत्स्थित्. २. K₁, EMU₂ क्षिपंति, प्रक्षिपंति; FBV, H₁, K₁, K₃, K₄, EMU₄, NMRL₁ क्षिप्यंति प्रक्षिप्यंति. ३. FBV. स्थवराणां; K₁, H₁, K₂, K₃, K₄, NMRL₁, EMU₂, EMU₄ स्थावराणां.

॥ १३ ॥ १. FBV, K₁ K₃, EMU₂, EMU₄, NMRL₁ उदिति; others have the correct form उदेति which is adopted in the text. २. K₁, EMU₄, EMW₂, NMRL₁, K₄ सर्वाण्यपि; FBV सर्वाः अपि. ३. FBV, K₁, K₃, NMRL₁, नकेचतः; नकेचन is the correct form found in K₄; EMU₄. ४. FBV, K₁, EMU₄ शून्यचारिणाः; सून्यचारिणः is the correct form in K₁; K₄ शून्यचारिणां; H₁, K₂ omit this. ५. K₁, K₃ कर्तुं; EMU₂, EMU₄, NMRL₁, K₄ धर्तुं.

॥ १४ ॥ १. NMRL₁ तिमिरौधानां; K₁, K₃, K₄, EMU₁ तिमिरोधानां or तिमरोधानां; K₄,

शाकिनीनां च महाराक्षसीनां च विना-स्थित्या मृत्योः गुप्तचारिणः स आराधयति स्वामिनं महाज्ञानिनं स आराधयति अमरान् गुरुतरान् (किल सप्तमूर्तीः स्वामिनः[२]) स आराधयति स्वीयं आत्मानं[३] स सन्मानयति समग्रान् शून्यचारिणश्च ईअज्दान्, पृथिवीचारिणश्च ॥

॥ १५ ॥ यः आराधयति सूर्यं अमरं शुद्धिमंतं वेगवदश्वं स आराधयति मिहिरं निवासितारण्यं सहस्रकर्णं दशसहस्रलोचनम् । स आराधयति वज्रं सुनियुक्तं मस्तकोपरि देवानां मिहिरस्य यो निवासितारण्यः (सर्वदा एव एवं विदधाति यत् अदृश्यरूपतया प्रयाति पापकर्मिणां निग्रहं कुरुते) ॥ आराधये मित्रं च (मिहिरं ईअज्दं) यं[१] अस्ति[90] मित्रेभ्यः परतरं[२] अंतश्चंद्रस्य च सूर्यस्य च (किल अस्य प्रवृत्तिः चंद्रसूर्ययोः अंतरालेऽस्ति) ॥

॥ १६ ॥ अस्य शुद्धया श्रिया च एनं आराधये श्रूयमाणइजिस्न्या[१] सूर्यं तेजस्विनं अमरं शुद्धिमंतं वेगवदश्वं (शुद्ध्या श्रिया च सूर्यसहायिन्या[२] । श्रूयमाण[३]-इजिस्न्या गुरुमुखेन) । प्राणैः[91] सूर्यं तेजस्विनं अमरं शुद्धिमंतं वेगवदश्वं आराधये । होमवृक्षेण[४][92] । गवा[93] । बरस्मनेन[94] । जिह्वया दक्षतरया[५] [जिह्वायाः दक्षतया] । मांथ्र[94a]-वचनैः (अविस्तावाणीभिः[६]) । कर्मणा च (कार्यं यत् अंतरिजिस्नौ) ज्योरेण[७][95] (किल प्राणेन उदकसंभूतेन) सत्योक्ताभिश्च वाणीभिः ॥

ये[96] विद्यमानेभ्यः[८] एवं[९] इजिस्न्यां[१०] उपरि उत्तमस्य[११]

महाज्ञानिनः स्वामिनः (किल इजिस्नीः अहुरमज्दस्यार्थे प्रचुराः कुर्वंति) वेत्तुः[१२] पुण्यं यत् किंचित्[१३] (किल यत् किंचित् पुण्यप्रसादं[१४] अहुरमज्दो वेत्ति) ।

समवायिकान्[१५] तान्[१६] [तांश्च] ताश्च आराधये । (किल नरस्त्रीआकृतीन्[१७] अमिशास्पिंतान्) ॥

---

$EMU_2$ तिमरोधाणां. २. $NMRL_1$ सप्तमूर्तिस्वामिनं; FBV. किल तस्य मूर्तिस्वामिनं; $EMU_4$ सप्तमूर्तिस्वामिनं; $EMU_2$, $K_4$ सप्तमूर्तेः स्वामिनः. ३. FBV, $K_4$. $EMU_2$, $EMU_4$ स्वीयं; $K_1$, $H_1$, $NMRL_1$, $K_3$ स्वयं.

॥ १५ ॥ १. $K_1$, $H_1$, $K_2$, $K_3$, $K_4$, $EMU_4$, $NMRL_1$ यं अस्ति मित्रेभ्यः. Better यः (अस्ति) &c. (?) २. $K_1$ परंतरं; $K_4$ अतःपरंतरं.

॥ १६ ॥ १. $K_1$ श्रूयमाणइजिस्न्याः; $H_1$, $EMU_4$, $K_1$, $K_3$ श्रूयमाणइजिस्न्या. २. $K_1$ सूर्यसहायिन्याः; $H_1$, $K_3$, $K_1$ सूर्यसहायिन्या. ३. $EMU_2$ स्तूयमान. ४. $K_4$ हउमवृक्षेण. ५. जिह्वायाः दक्षतया corrected from $K_1$, $EMU_4$, $H_1$, $NMRL_1$, $K_4$, $K_3$ जिह्वया दक्षातरया. ६. $K_1$, $H_1$, $K_2$, $K_3$, $NMRL_1$, $K_4$, $EMU_4$ अविस्तावाण्यैः. ७. $H_1$, $K_1$, $NMRL_1$, $K_4$, $K_3$ जोरेण. ८. SP. वर्तमानेभ्यः. ९. $K_1$, $K_2$ एव. १०. Sp. इजिस्त्रिया. ११. उत्तमे. १२. $H_1$, $K_1$, $K_2$, $K_3$ वेत्तु [वेत्तुं ?] यत् किंचित्; $K_4$ वेत्तुपुण्यं यत्किंचित्. १३. $EMU_2$ चेत् पुण्यं यत् किंचित् पुण्यप्रसादं; $EMU_4$ वेत्तिपुण्यात् यत् किंचितः; Sp. वेत्तरिपुण्यात् यत्किंचित् [विज्ञाय ?]. १४. $EMU_4$ Sp. पुण्यप्रसाददानं. १५. $K_4$. Sp. समवायकान्; $EMU_2$ समवायान् FBV संचायकान्. १६. $K_1$, $H_1$ तान् ताश्च. १७. $K_2$, FBV नरस्त्रीः च आकृतीन्; $K_1$, $K_3$, $NMRL_1$ नरस्त्रीस्वाकृतीन्; $K_4$, $EMU_2$ $EMU_4$, Sp. नरस्त्रीआकृतीन्.

॥ १७ ॥ [ अहुनवर २ ] इजिंश्निं च नमस्कृतिं च शक्तिं च प्राणं[1] च आशीर्वादयामि सूर्याय तेजस्विने अमराय शुद्धिमते[2] वेगवदश्वाय [ अशेम् वोहू १ ]

[ [97]अस्माकं शुद्धयः श्रियश्च इत्यादि पूर्वोक्तवत् । अशेम् वोहू १ ]

[ सहस्रं आरोग्यतानां इत्यादि पूर्वोक्तवत् । अशेम् वोहू १ ]

[ एहि मे सहाय्यतायै[3] इत्यादि पूर्वोक्तवत् । अशेम् वोहू १ ] ॥

खुरशेद न्या[य]श्नि अर्थः समाप्तः

---

## ॥ माहइअस्ति अविस्तार्थः ॥ *

## [ माहइअस्ति इति चन्द्रस्तोत्रम् ]

॥ ० ॥ [ ………… समस्तेभ्यः पापेभ्यः इत्यादि पूर्वोक्तवत् ]

॥ १ ॥ नमः स्वामिने महाज्ञानिने ( अहुरमज्दाय ) । नमो अमरेभ्यो गुरुतरेभ्यः (अमिशास्पंतेभ्यः ) । नमश्चंद्राय पशुबीजाय (अस्य पशुबीजता एवं यत् ग्वह्मनश्चंद्रश्च गोरूपं च त्रयोऽपि पशुबीजानि[1] संति । ग्वह्मनः शून्यमूर्तिः[2] अदृश्यो अग्राह्यश्च । ग्वह्मनाच्च चंद्रो घटितः अस्ति दृश्यतया अग्राह्यतया च । चंद्राच्च गोरूपं घटितं अस्ति दृश्यतया ग्राह्यतया च । समग्रा इयं[3] सृष्टेर्दातेश्च प्रवृत्तिः पशुबीजतया । श्रीश्च[4] गवां पशूनां चंद्रपदेन अस्ति ) । नम उपरिदर्शनतयाँ[5] नमः उपरि निरीक्षणतयाँ[6] ( किल पश्यामस्त्वां निरीक्षयामः प्रतिकुर्मः[7] त्वां नमस्कुर्महे च ) ॥

[ सत्कारये इत्यादि अशेम् वोहू ३ प्रवर्वीमि इत्यादि पूर्वोक्तवत् ]

[97a] ॥ ४ ॥ ॥ २ ॥ कथं चंद्रः प्रवर्धते । कथं चंद्रः क्षयति । पंचदश चंद्रः प्रवर्धते पंचदश चंद्रः क्षयति । (पंचदशदिनानि पृथिवीचारिणां कार्याणि पुण्यानि च प्रतिकरोति परलोकिनां च प्रसादान् । पंचदशदिनानि परलोकिभ्यश्च कार्याणि पुण्यानि च संपादयति पृथिवीचारिभ्यश्च[1] प्रसादान् ) । याः[2] अस्य वृद्धीनां स्थितयः (किल याश्चंद्रस्य) तेषां अवृद्धीनां स्थितयः ( ये अवाखूतरीणां[3] [98] प्रतीपाः[4] संति यथा हस्रोइरिंग–वनंत–सतउएस–तिस्तरप्रभृतयः । किल स्थित्या अराजानो भवंति ) । अवृद्धीनां स्थितयो या अस्य (किल याश्चंद्रस्य) तेषां वृद्धीनां स्थितयः (ये अवाखूतरीणां प्रतीपाः संति । किल सत्कार्यतया बलवत्तरा भवंति ) ॥

---

॥ १७ ॥ १. $H_1$ प्राणं ; $K_1$ प्राणां. २. All MSS. शुध्धिमतौ. ३ एहि मे सहाय्यतायै &c. only in $EMU_4$.

---

* $NMRL_1$ महाइ निआइस्त; $K_1$ महन्यास्तिअविस्ताअर्थ.

॥ १ ॥ १. $K_4$ पशुबीजजानि. २. $EMU_2$, $K_4$ $EMU_1$ अदृश्यमूर्तिः. ३ $EMU_2$ $EMU_1$, समग्रायै; $NMRL_1$, समग्रायाः; $K_4$ समग्राऽपि. ४. $EMU_1$ $EMU_2$ श्रियश्च; $K_4$ श्रीयश्च. ५. उपरिदर्शतयाः; $EMU_1$ $EMU_2$ उपरिदर्शनतायाः. ६. $EMU_2$ निरीक्षणतायाः. ७. $NMRL_1$ अंगीकुर्म्मः.

॥ २ ॥ १. $K_3$, $H_1$ पृथ्वीचरेभ्यश्च ; $NMRL_1$, FBV पृथ्वीचारेभ्यश्च. २. याः forgotton in $K_1$, $K_4$, $EMU_4$, $NMRL_1$, $H_1$ & FBV. ३. $K_1$, $K_4$, $NMRL_1$, $H_1$, अवस्तरिणाम्. ४. $K_4$, $K_1$, $H_1$, $EMU_4$, $NMRL_1$ प्रतिपाः.

केभ्यः[99] यत् चंद्रः प्रवर्धते क्षयति च ते अहुरमज्द (अस्य विचारो दामदादेन[100]) ॥

॥ ५ ॥ ॥ ३ ॥ चंद्रं पशुबीजं पुण्यात्मकं पुण्यगुरुं आराधये ॥ तया[१] चंद्रस्य उपरि निरीक्षणतया तया चंद्रस्य उपरि प्रतिकरणतया । दीप्तिमतश्चंद्रस्य उपरि निरीक्षणतया दीप्तिमतश्चंद्रस्य उपरि प्रतिकरणतया । तिष्ठंति[२] अमरा गुरुतराः श्रियं गृह्णंति तिष्ठंति अमरा गुरुतराः (अमिशास्पिताः) श्रियं वर्षंति[३] पृथिव्यां उपरि अहुर्मज्ददत्तायाम् (अंतस्तस्मिन् समये यदा नवनवतरो[101] भवति[४]) ॥

॥ ६ ॥ ॥ ४ ॥ ततो यत् चंद्रः दीप्तिमान् तपते[१] सदैव वनस्पतयो हरितवर्णाः (किल सार्द्रतराः[२]) वसंतमासे उपरि पृथिव्यां उन्मीलंति[३] ॥ अंतराचंद्रो वा (पंचकस्य[102] यः प्रथमस्य उत्तमस्य) संपूर्णचंद्रोवा (पंचकस्य द्वितीयस्य उत्तमस्य) वीससथो वा (पंचकस्य यः तृतीयस्य उत्तमस्य) ॥ अंतराचंद्रं पुण्यात्मकं पुण्यगुरुं आराधये । संपूर्णचंद्रं पुण्यात्मकं पुण्यगुरुं आराधये । वीससथं पुण्यात्मकं पुण्यगुरुं आराधये ॥

॥ ७ ॥ ॥ ५ ॥ आराधये चंद्रं पशुबीजं विभक्तारं शुद्धिमंतं श्रीमंतम् । अभ्रवंतम्[१][103] (किल अभ्राणि आयांति प्रभावेन[२] अस्य) । तापवंतम् (किल उष्मगुणयुक्तम्[३][104]) क्रियावंतम् (ज्ञानितरं इत्यर्थः) लक्ष्मीवंतम्[105] । लक्ष्मीवंतम् (किल ऋद्धेः[४] पशूनां दातारम्) । विचारवंतम् (कार्यन्यायानाम्) । लाभवंतम् (किल फलपाकस्य जलवनस्पतीनां दातारम्) हरितवर्णवंतम् (किल पृथिवीं सार्द्रतरां करोति) । उत्तमसमृद्धिमंतं[५] विभक्तारम् आरोग्यताकरम्[६] ॥

॥ ८ ॥ ॥ ६ ॥ अस्य शुद्ध्या श्रिया च एनं आराधये श्रूयमाणइजिस्न्या चंद्रं पशुबीजम् (शुद्ध्या श्रिया च चंद्रसहायिन्या[१] । श्रूयमाणइजिस्न्या गुरुमुखेन) । प्राणैश्चंद्रं पशुबीजं पुण्यात्मकं पुण्यगुरुं आराधये । होमवृक्षेण । गवा । बरिस्मनेन । जिह्वया च दक्षतरया [जिह्वाया दक्षतया] । मांथ्रवचनैः । (अविस्तावाण्या[२]) । कर्मणा च (कार्यं यत् अंतर् इजिस्नौ) । जोरेण च (किल प्राणेन उदकसंभूतेन) । सत्योक्ताभिश्च वाणीभिः ॥

[ये विद्यमानेभ्यः एवं इजिस्न्या उपरि इत्यादि पूर्वोक्तवत्] [अहुनवर २]

॥ ९ ॥ ॥ ७ ॥ इजिस्निं च नमस्कृतिं च शक्तिं च प्राणं च आशीर्वादयामि चंद्राय पशुबीजाय गवे च अईओदाताय[106] पशुभ्यश्च संपूर्णजातिभ्यः ।

[अशेम् वोहू ३]

........................[107]

माह न्यास्ति समाप्तः

---

॥ ३ ॥ १. $EMU_2$ तथा. २. FBV तेजंति (?). ३. FBV वजंति (?). ४. FBV नवनवतराः भवंति; $EMU_1$ $EMU_2$ नवनवतृणा भवंति.

॥ ४ ॥ १. $EMU_2$ $K_4$ तन्यते (?) [तप्यते ?]. २. FBV स्थद्रतराः (?). ३. $EMU_2$ उन्मीलयंति.

॥ ५ ॥ १. $H_1$, सुभ्रवंतं ? २. $K_1$, $H_1$, $EMU_4$ प्रतापेन. ३. $K_1$, अंस्तगुणयुक्तं (?); $H_1$, NMR $L_1$ उस्तगुणयुक्तं; $K_4$, $EMU_1$ $EMU_2$, $EMU_4$ उष्णगुणयुक्तम्. ४. $EMU_1$, $EMU_2$ फलरिद्धि. ५. $K_1$ उत्तमसमृद्धिमत्ताम्; $EMU_1$ $EMU_2$ उत्तम समृद्धिनिर्म्मितां; $K_4$ उत्तमसमिर्धिमत्तां विभक्तारम्. ६. $K_1$ आरोग्यताकरम्; $EMU_2$ आरोग्यतानां; FBV आरोग्यताकरं.

॥ ६ ॥ १. $K_3$ सहायितान्या. २. FBV अविस्तावाण्यैः.

## ॥ आतशाईअस्ति अविस्तार्थः ॥ *

### [आतशाईअस्ति इति अग्निस्तोत्रम्]

॥ ० ॥ [.............. समस्तेभ्यः पापेभ्य इत्यादि पूर्वोक्तवत्]

॥ १.२.३ ॥[108] उच्चैर्मां शोधयं स्वामिन् (किल पीडाकरात् आहर्मनात् शुद्धं कुरु)। संपूर्णमानसतां अध्यवसायं च देहि ॥ गुरुतर अदृश्यमूर्ते महाज्ञानिन् ग्वह्मनस्य गृहीतारो भवामः। (किल मे तनुना अभ्यागतोऽस्तु[२][109]) ॥

पुण्यं हठिनः उपरि शक्तं भूयात् (किल बलात्कारिणः आहर्मनस्योपरि शक्तं भूयात्) उत्तममनसः प्रभुत्वेन ॥

आनंदं स्वेच्छया आस्वादयितॄन् (किल केषांचित् यदृच्छया आनंदकरान्) देहि मह्यं यान् युष्माकं शक्त्याः (किल कार्येषु न्यायेषु ये युष्माकं शक्त्या संति तान् मे देहि)।

तान् स्वामितया अहुर्मज्दस्य यान् उत्तममनसा भक्तिशीलान् (किल शिष्यान्[110] तान् मे देहि) ॥

प्रकृष्टं पृथिव्यां संपूर्णमनस्यां[६] पुण्येन दीनिं प्रचिह्नय (किल सदाचारितया दीनिसाभिज्ञानेन कुरु[111]) ॥

एवं दक्षिणयाँ जरथुश्त्रो[112]ऽहं तनोर्श्च निजं जीवं ददामि
पुरःप्रवृत्त्या (किल अग्रतया) उत्तममनसे अहुर्मज्दाय
कर्मणि च पुण्यार्थं (किल कर्म तदेव करोमि यत् पुण्याय रोचते) यां च उक्तिः श्रुतिः[113]
[तया] सहरेवराय राज्ञे ॥

॥ ४ ॥ सत्कारये स्वामिनं महाज्ञानिनम् (किल सानंदं करोमि) ॥

नमस्ते अग्ने महाज्ञानिनः स्वामिनः उत्तमदानिनः महत्तरस्य ईअज्दस्य ॥

[अशेमवोहू ३] प्रब्रवीमि माज्दइअस्नीं जरथुश्त्रियां विभिन्नदेवां होर्मिज्दन्यायवतीम् (किल मध्ये पापकर्मिणां ब्रवीमि)।

हाउअननाम्न्याः प्रातःसंध्यायाः इत्यादि [यथासमयम्] पूर्वोक्तवत् [यावत्] आराधनाय नमस्करणाय मानयनाय प्रकाशनाय।

अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य। तव अग्नेः पुत्र स्वामिनो महाज्ञानिनः।

॥ ५ ॥ अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य। श्रियाः[१] लाभस्य मज्ददत्तस्य। परांदेश[114]-

---

* $EMU_2$, $K_1$ आतसबहिरामन्यास्ति.

॥ १. २. ३ ॥ १ $K_1$, FBV, $H_1$ $K_3$ सोपय [शोभय?]. २. Sp. ऽस्तु. ३. $K_4$, $EMU_1$ $EMU_2$ शक्तान्. ४. $K_1$, $H_1$ कार्यैः न्यायैः, FBV कार्यन्याये. ५. $EMU_1$ $EMU_2$ सर्वान्. ६. संपूर्णमनसा; $EMU_1$ $EMU_2$ संपूर्णमनसां. ७. FBV दक्षणयामि. ८. Corrected from तनुश्च in all MSS. ९. FBV, $K_1$, $H_1$ पुण्यात्मा. १०. FBV, $K_1$, $H_1$ यांच उक्तिश्रुतिं; $H_1$ उक्तिस्तुतिं; EMU, यांश्चउक्ते सतां सहिरेवराय सुज्ञे $EMU_2$ यांश्चउक्तिसत्यंसहरिवराय संज्ञे $K_4$ यांच.

॥ ५ ॥ १. Corrected into Genitive singular from श्रियो accusative plural found in all MSS.

श्रीणां मज्दद्त्तानाम् । राजलक्ष्म्याश्च मज्दद्त्तायाः ( अयं अग्निः आद्रफ्रा[115] नाम । अस्य कार्यं आचार्यविद्या । इदं किल तस्मिन् पक्षे आचार्याः ज्ञानवंतः क्रियावंतश्च भवंति प्रभावेन अस्य । तथा स यः समं दहाकेन[116] प्रतिवादं अकरोत् ) ।

अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य[117] । राज्ञः कएखुस्त्रवस्य । गुफायाश्च कएखुस्त्रवीयायाः ( अकरोत् असौऽभूत् । या आद्रबादिगांदेशे अस्ति ) । अस्नवंदगिरेश्च[118] मज्दद्त्तस्य । चयचिस्तरन्ध्रस्य[119] मज्दद्त्तस्य ( चयचिस्त-रंध्रात् सा गुफा चतुर्भिर्योजनैरस्ति ) । राजलक्ष्म्याश्च मज्दद्त्तायाः । ( अग्निः आद्रगुशस्प[120] नामा । अस्य कार्यं क्षत्रियविद्या । इदं किल आद्रबादिगांदेशपक्षे क्षत्रियाः शीघ्रतराः शूरतराश्च भवंति प्रभावेन अस्य । तथा स यः पुरतः अहुरमज्दस्य आक्रंदत् असौ अभूत् ) ।

॥ ६ ॥ अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य । रएवंदगिरेः[121] मज्दद्त्तस्य । राजलक्ष्म्याश्च मज्दद्त्तायाः ( अयं अग्निः आद्रबुर्जिन्महिर[122] नाम । अस्य कार्यं कृषीविद्या । इदं किल तस्मिन् पक्षे कृषिकर्मिणः व्यवसायितराः कृषिकर्मज्ञानतराः धौतवस्त्रतराश्च[123] भवंति प्रभावेन अस्य । तथा स यः समं गुस्तास्पेन राज्ञा प्रतिवादं अकरोत् अयं अभूत् ) ।

[123a] ..................... ।

अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य समं समग्रैः अग्निभिः । राजनाभेर्नइरिओसंघस्य ईअजदस्य ( अस्य राजनाभिता च इयं यत् नाभे[124] राज्ञां देशपतीनां अन्वयस्य च प्रभुत्वयतां महत्तराणां बीजं एतस्मात् ) ।

आनंदनाय आराधनाय नमस्करणाय मानयनाय प्रकाशनाय ।

"यथा स्वामिनः कामः" इत्यादि पूर्वोक्तवत् ॥

[124a] ॥ ७ ॥ १ (१) इजिस्निं च नमस्कृतिं च उत्तमां आहुतिं च शुभां आहुतिं च सहाय्यआहुतिं च आशीर्वादयामि तुभ्यं अग्ने पुत्रं स्वामिनो महाज्ञानिनः ॥

२. इजिस्निमान् असि नमस्कृतिमान् । इजिस्निमान् भव नमस्कृतिमान् निवासेषु मनुष्याणाम् ॥

शुभो भूयात् असौ ना यस्त्वां नित्यं प्रकृष्टं आराधयति ॥

४. समिद्हस्तो बरेस्महस्तो गोहस्तो[125] घंटाहस्तः[126] ॥

॥ ८ ॥ २. (५) सदाचारिणी समिध् [ समिद् ] भूयात् ( सदाचारोपार्जिता ) । सदाचारी च गंधो भूयात् । सदाचारि च भोजनं भूयात् ( पूर्वदीपयनसमये काष्ठं विमुच्यते तद् भोजनं ) सदाचारिणी च पुष्टिर्भूयात् ( यत् पश्चात् पोषयणसमये काष्ठं विमुच्यते सा पुष्टिः )[127] ॥

---

२. $K_1$, $H_1$, $EMU_1$ राजालक्ष्म्याश्च or राज्यलक्ष्म्याश्च. ३. $Sp._1$ $EMU_2$ यस्य. ४. $H_1$ adds अस्तै अभूत्; $EMU_7$ $EMU_2$, Sp. अस्मै अभूत्. ५. अकरोत् असौऽभूत् wanting in Sp., $EMU_2$.

॥ ६ ॥ १. $K_1$, $H_1$ कृक्षि. २, $K_4$ वैचैत्रवस्त्राश्च (?). ३. $K_1$, $H_1$, Sp., $K_3$ राज्ञां. ४. $H_1$ नइरियोसंघस्य. ५. $K_4$ $EMU_1$ माराजनाभैर्नइरिओस्यंघ इअजदस्य. ६. $H_1$ प्रभुत्वेमतां (?)

॥ ७ ॥ १. $H_1$, $K_1$, $K_3$, FBV. इजिस्नि; $K_4$ इजिस्न्यंच. २. $H_1$, $K_1$, $K_3$ नमस्कृतम्; $K_4$ नमस्कृत्यंच. ३. $H_1$, $K_1$, $K_3$ सहाज्यआहुतिंच; FBV सहाय्यआहुतिंच; $EMU_2$ सहजसाहिज्यआहुतिंच; $K_4$ साहिज्यआहुत्यंच. ४. $H_1$, $K_1$, $K_3$ अग्निः. ५. $K_3$ पुत्रस्य (?). ६. $EMU_1$, $EMU_2$ शुभंभूयात् असौन्यायः त्वां; $K_4$ शुभोभूयात् असौन्यायस्त्वां.

॥ ८ ॥ १. $K_4$ explains पूर्वदीपयनसमये काष्ठं विमुच्यते तद् भोजनम्; $EMU_1$, $EMU_2$ पूर्वदिनपूजनसमये काष्ठं विमुच्यते ततो भोजनम्. २. $EMU_1$ पेषेयनसमिधे ? [ प्रेक्षयणसमये ? ].

(६.) संपूर्णो ना अधिपतिर्भूयात्। उत्तमश्च अधिपतिर्भूयात्। (यतो स भवति यदि किल पूर्णो उत्तमश्च न भवति अतएव पूर्णो उत्तमश्च उक्तः) ॥

अग्ने पुत्र स्वामिनो महाज्ञानिनः ॥

॥ ९ ॥ ३. (७) ज्योतिष्मान् भव अस्मिन् निवासे। सदा[१] ज्योतिष्मान् भव[२] अस्मिन् निवासे[३] (किल सदैव ईदृशो भवं[४])।

निर्मलो भव अस्मिन् निवासे। वृद्धिकारी भव अस्मिन् निवासे।

(८) दीर्घ-कृष्टं[५] समयंचित् तत् उपरि शस्त्रेण अक्षयकरेणं[६]। समं[७] शस्त्रेण उत्तमेन अक्षयकरेण (इति इजिश्नीशस्त्रेण) ॥

॥ १० ॥ ४. (९) देहि मह्यं अग्ने पुत्र स्वामिनो महाज्ञानिनः।

(१०) तेजस्वि शुभं तेजस्वि वर्तनं तेजस्वि जीवितम्।

संपूर्ण शुभं संपूर्ण वर्तनं संपूर्ण जीवितम्।

(११) निर्वाणज्ञानम्[१] (किल निर्वाणज्ञानं यत् किंचित् शुभं जानामि)। गुरुतां (यत् किंचनात्[२] प्रचुरं किंचित् जानामि)। पाटविर्नी[३] जिव्हां (किल मे जिव्हा कार्येषु न्यायेषु च प्रवीणतरा भूयात्)। आत्मानम् (किल मे आत्मा मुक्तो भूयात्)। स्मृतिम् (किल मे स्मृतिः कार्ये न्याये च विशालतरा[४] भूयात्)। बुद्धिं पश्चात् महतीं उत्तमां अकथितज्ञानाम् (नैसर्गिकामित्यर्थः। सा च या कर्णश्रुता बुद्धिः नैसर्गिकबुद्धेः[५] वृद्धये प्रकटा। कर्णश्रुता या बुद्धिः नैसर्गिकबुद्धिकार्यं शक्यते प्रचारयितुं। बुद्धिश्च सा भवति या समयं कार्यं[६] जानाति प्रचारयितुम्। ज्ञानी च स भवति यः लाभं छेदं च जानाति। गुरुतरश्च स भवति यः किंचनात् प्रचुरं किंचित् जानाति)। मानुषीं पश्चात् समग्रां शक्तिम्।

॥ ११ ॥ ५. (१२) सुदृढजंघताम् (किल कार्ये यत् पादाभ्यां युज्यते कर्तुं व्यवसायी शक्तश्च भवामि)। अनिद्रताम् (प्रमाणनिद्रतां[१] इत्यर्थः) त्रिभागं दिनानां च रात्रीणां च। तेजस्वितां स्थानात्[२]।

(१३) भुजबलवत्ताम्[123]। पालकं निसर्गगुणं पुत्रं द्वीपमंडनं समवायिकम्[३]।

(१४) सहोदितम्[४] सुरक्षकं संकटात् शुद्धिदं[५] (नरकात् इत्यर्थः)। सुचेतनम् (सानुरागं साभिलाषं इत्यर्थः)।

---

॥ ९ ॥ १. FBV, $H_1$, $K_1$ सह. २. $K_1$ अभव. ३. $EMU_1$ $EMU_2$ गृहे. ४. FBV, $K_1$, $H_1$, $K_3$ भवति. ५. FBV दीर्घकृष्टं; $EMU_1$ $EMU_2$ दीर्घचित् उत्कृष्टं; $K_4$ दीर्घउत्कृष्टंचित्. ६. $K_1$ $H_1$ $EMU_1$, $EMU_2$ अक्षयकारिणा; $K_3$ अक्षयत्वकरणे. ७. Instead of समं......upto देहि $EMU_1$, $EMU_2$ समयं उत्तमं वृद्धं देहि.

॥ १० ॥ १. $H_1$, $K_1$, $K_3$ निर्वाणन्यानतं [निर्वाणज्ञानतां ?]; $K_4$ $EMU_1$, $EMU_2$ निर्वाणज्ञानतां. २. $H_1$, $K_3$ किंचित्नात् [किंचनात् ?]; $K_1$ ऊनात्; $EMU_1$, $EMU_2$ किंचित् सदाचारोपार्जितं शुभं जानाति गुरुतां किल किंचनात् प्रचुरं किंचित् जानाति. ३. $K_1$ पाठवतीं. ४. $H_1$, $K_1$ विस्तरा. ५. $H_1$ $K_1$ $EMU_2$, $EMU_1$ नैसर्गिकाबुद्धेः. ६. $H_1$ कार्यें.

॥ ११ ॥ १. $K_1$, $H_1$ प्रयाणनिद्रतां. २. FBV, $K_3$, $EMU_1$ तेजस्वीनास्थानात्; $EMU_2$ तेजस्विनां स्थानात्. ३. $K_1$, $EMU_1$, $EMU_2$ समवायकम्. ४. $K_1$, $H_1$, $K_3$ सहोदिकम्; $EMU_1$, $EMU_2$ सहोदितम् [सहोदयम् ?]. ५. Corrected from $K_4$ शुधं or शुचं (?) $EMU_1$ शुभ्रं ? $EMU_2$ शुद्धं

(१५) यो मे विस्तारयति[६] गृहं च[129] गृहतमं च महागृहं च ग्रामं च देशं च ॥

॥ १२ ॥ ६. (१६) देहि मह्यं अग्ने पुत्र स्वामिनो महाज्ञानिनः । यां[१] मे अभूत्[२] अयोग्यता[३][130] इदानीं च यावत् सदाप्रवृत्ति अतःपरं भुवनं मुक्तात्मनां सदोद्योतं समस्तशुभम् ।

(१७) योग्यो[४] भवामि उत्तमस्य प्रसादस्य उत्तमायाश्च श्रुतेः[५] आत्मनश्च[६] दीर्घायाः सु-स्वामितायाः (प्रसादः परलोकीयः श्रुतिश्च इहलोकीया) ॥

॥ १३ ॥ ७. (१८) सर्वेषु वाचं मुंचति[१] अग्निर्महाज्ञानिनः स्वामिनः ।

(१९) येभ्यः अयं सदा पचति नित्यपाकं उत्सवपाकं च ।

(२०) सर्वेभ्यश्च अभिवांछति उत्तमां आहुतिं शुभां आहुतिं सहाय्यआहुतिं[२][131] च स्पितम।

॥ १४ ॥ ८. (२१) सर्वेषां प्रचरतां अग्निर्हस्तं आलोकयति ।

(२२) किं मित्रो[132] मित्राय ददाति प्रचारवान्[१] अजंगमाय ॥ (२३)...............

९. (२४) ततो यदि अस्मै अयं ददाति समिधं वा पुण्यतया विदधीतां[२][133] बरेस्मनीं वा पुण्यतया निबद्धां वनस्पतिं वा उरुअरामनामानम्[134] ।

(२५) स तस्मै पश्चात् आशीर्वादयति अग्निर्महाज्ञानिनः स्वामिनः ।

॥ १५ ॥ १०. (२६) संतुष्टः अपीडितः तृप्तः ।

(२७) उत्कृष्टस्ते उत्तिष्ठतु गवां संचयः उत्कृष्टो वीराणां च संपूर्णप्रचारः (किल ते भूयात्) ।

(२८) उत्कृष्टस्ते अभिलाषश्च मनसा अभिलाषश्च उत्तिष्ठतु स्वामिना (किल मनसा तदेव चिंतय यत् स्वामिना गुरुणा आदिष्टम्) ।

(२९) आनंदेन स्वामिनो जीवेन जीवं[१] ता रात्रीः याः जीवयसि ॥ अस्मै अग्नेः आशीर्वादः

(३०) यो अस्मिन् समिधं मुंचति शुष्कां रश्मिनिरीक्षितां पुण्यहेतुतया[२] पवित्राम् ॥

## [मौनमध्ये "होर्मज्दखदाइ अवजूनी मर्दुम्" इत्यादि—प्रकटं अहुनवर २]

इजिश्निं च नमस्कृतिं च शक्तिं च प्राणं च आशीर्वादयामि अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य (पूर्वोक्तवत्) (शक्तिरिति बाहूनां प्राणं इति पादयोः) ॥

## [अशेम वोहू ३]

[135]एवं ते अग्निः अहुरमज्द शक्तिमान् पुण्यात्मनां[३] संतोषी (किल संतोषी तस्मिन्

---

६. $K_3$ विस्तारयिता.

॥ १२ ॥ १. $EMU_2$ यो. २. $H_1$, $K_2$, $K_4$ अभूत. ३. $EMU_1$ योग्यता. ४. $EMU_2$, $K_4$ प्रयोग्येन. ५. $EMU_1$ स्तुतिः. ६. $H_1$, $K_1$, FBV, $K_4$, $K_3$ आत्मस्य.

॥ १३ ॥ १. $H_1$, $K_1$, $K_3$, $K_4$ मुंचति; FBV उचंति (?); $EMU_2$ शुंचति ? २. $K_4$ आहुत्यं.

॥ १४ ॥ १. $EMU_1$ प्रचरवान्. २. $H_1$, $K_1$, FBV, $K_3$, $K_4$ विदधीतां; $EMU_1$, $EMU_2$ विधीयतां.

॥ १५ ॥ १. $H_1$, $K_1$ जीवितात् ता राज्यौ; FBV जीवेत्ताःरात्राउ; $EMU_2$ जीवताराज्यौ; $K_4$ जीव्यात्ताराात्रौ; $K_3$ जीवितात्ताःरात्रौ; $EMU_1$ जीवेनजीवताराज्यौ. २. FBV पुण्यहितया; $EMU_1$ $EMU_2$, $K_4$ पुण्यहेतुतया; $K_3$ पुण्यहिततया. ३. Sp. $K_3$ पुण्यात्मनाम्; $EMU_2$ पुण्यात्मा; $EMU_1$

समये (काले) यदा दिव्याद् (?)[४] विपत्तिः तस्मात् येन पुण्यकार्यं कृतं अस्ति[५])

तेजतस्तरो[६] [तेजस्वत्तरो] महाबलिष्ठः तिष्ठतः[७] आनंदं प्रकटयति सहाय्याय (किल यो अस्य साहाय्याय तिष्ठति तस्य प्रकटयति आनंदम्) । एवं अहुरमज्दः पीडाकरस्य हस्तेच्छया विदुधाति[८] निग्रहम् ॥

## [ अशेम् वोहू १ ]

## ॥ होर्मज्द्इअस्ति*अविस्तार्थः ॥

॥ ० ॥ [.......... समस्तेभ्यः पापेभ्यः इत्यादि पूर्वोक्तवत् । सत्कारये स्वामिनं इत्यादि पूर्वोक्तवत् । अशेम् वोहू १. । प्रकृष्टं स्तौमि सुमतानि च इत्यादि पूर्वोक्तवत् । अशेम् वोहू ३ । प्रब्रवीमि इत्यादि पूर्वोक्तवत् । गाह यथा समयं पूर्वोक्तवत् । स्वामिनो महाज्ञानिनो आराधनाय नमस्करणाय माननाय प्रकाशनाय "यथा स्वामिनः कामः" इत्यादि पूर्वोक्तवत् "आदेशः कर्तुं यथा अहुरमज्दस्य कामः" पर्यंतम् ]

॥ १ ॥ अपृच्छत् जरथुश्त्रः अहुर्मिज्दम्[१] । अहुरमज्द अदृश्यमूर्ते गुरुतर दातः शरीरिणां अस्थिमतां[२] पुण्यमय । ( अस्ति अहुर्मज्दो दाता पुण्यमय इति सर्वत्र त्रिधा आकारणं परं अपरं स्तुत्यायातम्[३] । यत् दाता पुण्यमय इत्युक्तं । अस्य अहुर्मिज्दता स्वामिता गुरुता महाज्ञानिता च । अस्य दातृता सृष्टिदातिः । अस्य महत्ता च इयं यत् किंचनात् प्रचुरं किंचित् शक्नोति वर्धयितुम् । अहुर्मज्दः स्थानं दीनिः समयः च सर्वदा अभूत् सर्वदा अस्ति । तस्मात् स्थानात् भवति प्रकटम् "मिस्वान हे गात्वहे ख्वदातहे" । अस्य दीनिर्वाणी । समयश्च सदाकालतायाः[४] अहुर्मज्दस्य प्रवृत्तिकारी सर्वस्य कस्यचित् ) ।

का अस्ति अविस्तावाणी गुर्वी बलिष्ठतरा (मनुष्यस्य यस्यां उक्तायां बलं अधिकतरं जायंते[५]) ? का विजयकारितमा । का श्रीमत्तमा ( सत्कार्यतमा ) । का कार्यकारितमा ।

॥ २ ॥ का विजयकारितया हंतृतमा ( पापकर्मिणां इत्यर्थः ) । का आरोग्यकारितरा[१] । का क्लेशटालनतमा यत् देवेभ्यो मनुष्येभ्यश्च । का समग्रस्य भुवनस्य सृष्टिमतो मनसः अस्ति प्रापकतरा[136] । का समग्रस्य भुवनस्य सृष्टिमतो वितर्काणां अस्ति मूषकतरा[137] ( केचित्[२] ये कष्टसंभवाः अव्यापारिणाम्[३][138] ) ॥

॥ ३ ॥ प्रत्यवोचत् अहुर्मज्दः । अस्माकं नाम स्पितम जरथुश्त्र येषां अमराणां गुरूणाम्

---

पुण्यात्मो.॰ ४. Sp. दिव्याधिपतिः तस्मिन्; $K_1$ दिव्याधिपत्तिः तस्मात्; $K_4$, $H_1$ दिव्याधिपतिः तस्मात्; $EMU_1$, $EMU_2$ अधिपतिः तस्मात्. ५. Sp. आस्ते. ६. Sp. $H_1$, $K_4$, $K_3$ तेजस्तरो; $EMU_1$ $EMU_2$ तेजस्विनो. ७. $EMU_1$, $EMU_2$ तिष्ठतु; $K_4$ तिष्ठत् [ तिष्ठन् ]. ८. Sp. $K_1$, $H_1$. $EMU_2$, $K_4$ विदधाति.

---

* होर्मिज्द ईअस्त or होर्म्मज्द ईअश्त &c.

॥ १ ॥ १. Sp. $K_1$, $EMU_4$, $NMRL_1$ अहुरमज्दात्. २. $K_3$ अस्थिरमतां. ३. $K_1$ स्तुत्यायात्. ४. $EMU_4$, $NMRL_1$, $K_3$ सदाकालतया. ५. $NMRL_1$, $K_3$ यायते.

॥ २ ॥ १. FBV अरोग्यकारितरा. २. $H_1$ केचित्. ३. FBV अव्यापारिणा; $K_1$, $H_1$, $NMRL_1$ अव्यापारिणाः; $EMU_2$ अव्यापारिणः

(किल ये वयं अमराः गुरुतराः स्मः)। सा अस्ति अविस्ता-वाणी गुर्वी बलिष्ठतरा (मनुष्यस्य यस्यां उक्तायां बलं अधिकतरं जायते) सा विजयकारितमा। सा श्रीमत्तमा (सत्कार्यतमा) सा कार्यकारितमा।

॥ ४ ॥ सा विजयकारितया हंतृतमा (पापकर्मिणां इत्यर्थः)। सा आरोग्यकारितमा। सा क्लेशटालनतमा यत् देवेभ्यो मनुष्येभ्यश्च। सा समग्रस्य भुवनस्य सृष्टिमतो मनसः[1] अस्ति प्रापकतमा[2]। सा समग्रस्य भुवनस्य सृष्टिमतो वितर्काणां अस्ति मूषकतरा (केचित् ये कष्टसंभवाः अन्यापारिणः)॥

॥ ५ ॥ तं अभाषत (प्रत्यवोचत्) जरथुश्त्रः। प्रकृष्टं मे तन्नाम प्रब्रूहि पुण्यमय अहुरमज्द यत् ते अस्ति महत्तमं च (किल वपुषा तन्वा[1]) उत्कृष्टतरं च (अतःपरतरं च किल मूल्येन[2]) सुंदरतरं च (दर्शनेन)। कार्यकारितमं च (विजयकारितमं च)। विजयतया हंतृतमं च अरोग्यकारितमं च। क्लेशटालनतमं च देवेभ्यो मनुष्येभ्यश्च।

॥ ६ ॥ यथा अहं निहन्मि समस्तान् देवान् मनुष्यांश्च (ये दुष्टाः)। यथा अहं निहन्मि समस्ताः शाकिनीः महाराक्षसीश्च। यथा मां न कश्चित् निहन्यात् देवो नो मनुष्यो नो शाकिनी नो महाराक्षसी॥

॥ ७ ॥ अथ उवाच[1] अहुर्मिज्दः। प्रष्टा नाम अस्मि[2] पुण्यात्मन् जरथुश्त्र (किल प्रश्नं सदाचारिणं बहुतरं कुर्महे)। द्वितीयः समुच्चयः (किल समुच्चयः सर्वो गवां मनुष्याणां[3] मया दत्तः)। तृतीयः एवं शक्तः (किल स्रष्टुं शक्तिमान् अहम्)। चतुर्थः पुण्यं अतःपरम् (किल वपुर्मे सर्वं पुण्यमयं अस्ति[4])। पंचमः सर्वं वसु[5] मज्ददत्तं पुण्यात् प्रकटम् (किल मूलं फलं सर्वं अहं अददाम्[6])। षष्ठो योऽस्मि बुद्धिः (किल मे बुद्धिः शुभा)। सप्तमो बुद्धिप्रमाणं[7] (किल यावती इयं अपेक्षिता[8] सा मे अस्ति)। अष्टमो योऽस्मि निर्वाणज्ञानम् (किल कार्यन्यायानां निर्वाणज्ञानं अहं उत्तमं जाने)। नवमो निर्वाणज्ञानसाहाय्यी (किल निर्वाणज्ञानतया अन्येषां साहाय्यं करोमि)।

॥ ८ ॥ दशमो योऽस्मि वृद्धिः। एकादशो वृद्धिकारी (किंचनात् प्रचुरं किंचित् वर्धये)। द्वादश[1] स्वामी (शओशीओशः[० शेन] अस्मात् वचनात् प्रकटीकृतं यत् पुरुषो यावत् द्वादशभिर्गुणैः प्रकटो न भवति स्वामितायै न अधिकरोति)। त्रयोदशो लाभाभिलाषी। चतुर्दश इदं विभिन्नदुःखः (किल कष्टं मे न हि)। पंचदशः अनिर्विण्णः[2] (किल सदाचारात् निर्विण्णो न भवामि)। षोडशः प्रकटं गणनाकरः (पुण्यपापयोः संख्यां अहं करोमि)। सप्तदशः सर्वनिरीक्षयिता (किल सर्वं कार्यं पुण्यं अहं निरीक्षे)। अष्टदशः अरोग्यकरः। एकोनविंशतितमो योऽस्मि दाता (किल सृष्टिं अहं अददाम्[3])। विंशतितमोऽस्मि योऽस्मि महाज्ञानी नाम॥

---

॥ ४ ॥ १. FBV मनसा; $EMU_2$ मनसि. २. $EMU_2$ प्रापकरतमा.

॥ ५ ॥ १. $EMU_4$ कलेवरेण. २. $EMU_2$ अतःपरतरतमंचमूल्येन.

॥ ७ ॥ १. $K_1$ अवोच; $NMRL_1$ वोचत्. २. $H_1$, $K_1$, $NMRL_1$ अंह्मि. ३. $EMU_4$, $NMRL_1$, $H_1$, $K_1$, $EMU_2$ पशूनां. ४. $H_1$, $K_1$, $NMRL_1$ आस्ते. ५. $NMRL_1$, $EMU_2$, $H_1$, $K_1$, $EMU_4$ वस्तु. ६. Corrected from FBV, $EMU_1$, $H_1$, $K_1$, $EMU_4$, $NMRL_1$ ददं. ७. FBV, $H_1$ बुद्धिप्रमाणः. ८. Corrected from $NMRL_1$, $EMU_2$, $H_1$, $K_1$, FBV, $EMU_4$ यावत्कियंतीअपेक्षा.

॥ ८ ॥ १. Corrected from $EMU_4$, $FMRL_1$, $H_1$, $K_1$, FBV, $EMU_2$ द्वादशमः. २. $H_1$, FBV, $NMRL_1$ अनिर्थिन्नः (?); $EMU_4$ अनिआर्थिन्नः (?). $H_1$, FBV, $NMRL_1$ निर्थिनो (?); $EMU_4$ निर्थनो (?). ३. $H_1$, $K_1$, $NMRL_1$ ददं.

॥ ९ ॥ आराधय मां जरथुश्त्र उपरि दिवसं उपरि रात्रिं प्रासेन दानेन प्राणस्य (किल यदस्ति मितखंडितमपि प्राप्तं)। प्राप्नोमि ते सहाय्यतायै आनंदाय च अहं यः अहुरमिज्दः । प्राप्नोति ते सहाय्यतायै आनंदाय च यः उत्तमः श्रोशः पुण्यात्मकः । प्राप्नुवंति ते सहाय्यतायै आनंदाय च याः आपः याश्च [येच] वनस्पतयः याश्च मुक्तात्मनां वृद्धयः॥

॥ १० ॥ यदि अभिलाषो जरथुश्त्र अमीभ्यः कष्टानि टालनाय । देवेभ्यो मनुष्येभ्यश्च (देवाश्च तमोबीजाः मनुष्याश्च दुष्टसंख्यायाम्) । शाकिनीभ्यश्च महाराक्षसीभ्यश्च (शाकिनी च प्रसिद्धशब्दो महाराक्षसी च सा यया सहस्रं मर्गर्जानपापानां कृतं अस्ति सा आकाशपातालादिषु भ्रमते)।

अन्यायिभ्यः अदर्शकेभ्यः अश्रोतृभ्यः (अन्यायी च प्रसिद्धशब्दः अदर्शका अश्रोतारश्च ते ये अहुर्मज्दस्य सृष्टिं द्रष्टुं श्रोतुं न शक्नुवंति । अन्यायिता उत्तमैः निकृष्टैश्च भवति । उत्तमानां शिक्षापणापालनारक्षा[139] च निकृष्टानां बलात्कारो विघातश्च । अस्ति च केचित् द्वयोरपि अन्यायं विघातं ब्रुवंति यत् उत्तमान् निकृष्टा निघ्नंति निकृष्टान् उत्तमाश्च निघ्नंति)।

हिंसकेभ्यश्च द्विपदेभ्यः । आस्मोगेभ्यश्च द्विपदेभ्यः (आस्मोगश्च द्विधा एकः छद्मकः अन्यश्च स्वेच्छाचारी । छद्मकश्च स भवति यः किंचित् ज्ञानतया[140] परिभ्रामयति । किल यावन्मात्रस्य पापस्य त्रिभिः गोचर्मसाटघातैः प्रायश्चित्त्यं तावन्मात्रमपि पापं पुण्यस्थाने न्यस्यति पुण्यं च पापस्थाने न्यस्यति । स मर्गर्जानी[141] । न च तस्य सन्मानं भोजनमध्ये युज्यते न च तस्य पश्चात्तापः पइतीती[142] च भवति । स्वेच्छाचारी च स भवति यो मध्ये आस्मोगानां पृष्ठतः पृष्ठतः अस्ति इति ब्रूते[143] । तस्यापि मर्गर्जानं । परं अस्य पश्चात्तापः पइतीती अस्ति)। व्याघ्रेभ्यश्च[144] चतुरंघ्रिभ्यः ।

॥ ११ ॥ तुरुष्केभ्यश्च[145] प्रभूतसैन्येभ्यः प्रभूतशस्त्रेभ्यः सज्जितशस्त्रेभ्यः उत्क्षिप्तशस्त्रेभ्यः हिंसाशस्त्रवहद्भ्यः ।

अथ इमानि नामानि ([146]नः) घोषय प्रकृष्टं ब्रूहि सर्वेषु दिवसेषु च रात्रिषु च ॥

॥ १२ ॥ पाता च अस्मि (किल सृष्टेः रक्षां करोमि) । दाता च पालयिता च अस्मि (किल सृष्टीः अहं अदेदां अहं च पालये) । ज्ञानी अदृश्यमूर्तिश्च अस्मि गुरुतरः । आरोग्यकरो नाम अस्मि आरोग्यकरतमो नाम अस्मि (किल अपरेभ्यः ईअज्देभ्यः) । आचार्यो नाम अस्मि आचार्यतमो नाम अस्मि (किल अपरेभ्यः ईअज्देभ्यः) (आचार्यो याचनाकरः[147]) । स्वामी नाम अस्मि महाज्ञानी नाम अस्मि (किल अहुर्मिज्दस्य स्वामिता महाज्ञानवती इति एतस्मात् स्थानात् प्रकटम्) । मुक्तात्मा नाम अस्मि मुक्तात्मतमो नाम

॥ ९ ॥ १. Corrected from $H_1$, $EMU_2$, मीनषंडतमपि ; NMRL मीतखंडतमेपी ; $EMU_4$ लिकमीनखंडयतमेप्रापतं.

॥ १० ॥ १. FBV दुष्टसंख्याय ; $K_8$ दुष्टसंख्यायां. २. $H_1$, $K_1$ प्रसिद्धिशब्दा ; FBV प्रसिद्धशब्दा. ३. $H_1$, $K_1$, $EMU_4$ केचन. ४. $EMU_2$ किंचित्नज्ञानतया. ५. $EMU_4$ सन्मार्जनम्. ६. $NMRL_1$ मध्येआस्मोगानांपृष्ठतः अस्तिप्रतिब्रुते ; $EMU_2$ पृष्ठतोअस्ति. ७. $NMRL_1$ व्याघ्रादिभ्यश्च. ८. FBV. $H_1$, $K_1$, $K_4$, $EMU_2$ चतुरंह्निभ्यः.

॥ ११ ॥ १. $NMRL_1$ पुरुष्केभ्यः. २. Not found in FBV, $K_4$.

॥ १२ ॥ १. FBV, $K_1$ and others ददं. २. अस्मि in several places in $K_1$, $H_1$ and others. ३. $EMU_4$ महाज्ञानता.

अस्मि ( मुक्तात्मा पुण्यात्मकः ) । श्रीमान् नाम अस्मि श्रीमत्तमो नाम अस्मि ( अपरेभ्यः ईअज्देभ्यः ) । पृथुदर्शी नाम अस्मि ( किल कार्यं न्यायात् प्रचुरं निरीक्षे ) पृथुदर्शितमो नाम अस्मि ( अपरेभ्यः ईअज्देभ्यः ) दीर्घदर्शी नाम अस्मि दीर्घदर्शितमो नाम अस्मि ( अपरेभ्यः ईअज्देभ्यः ) ।

॥ १३ ॥ प्रहरको[148] नाम अस्मि ( किल सृष्टिं प्रहरकेण रक्षये ) । याचको नाम अस्मि । दाता नाम अस्मि । पाता नाम अस्मि पालयिता नाम अस्मि ज्ञानी नाम अस्मि ( किल लाभं छेदं जाने ) ज्ञानीतमो नाम अस्मि । वृद्धिमान् नाम अस्मि ( किल उत्तमेभ्यो लाभं शुभं वर्धये ) । वृद्धिप्रमाणो नाम अस्मि ( किल यत् प्रमाणेन अपेक्षे तावतां वर्धये ) । अभिलाषराजा नाम अस्मि ( किल सृष्टये राज्यं अभिलाषये ) अभिलाषराजतमो नाम अस्मि । स्वतंत्रराजा नाम अस्मि । ( स्वेच्छाराजा अस्मि ) । स्वतंत्रराजतमो नाम अस्मि ।

॥ १४ ॥ अप्रतारको नाम अस्मि ( किल कमपि न प्रतारयामि ) विगतप्रतारको नाम अस्मि ( किल यो मां प्रतारयितुं ईहते स स्वयं प्रतारितो भवति ) । अधिकरक्षको नाम अस्मि । क्लेशटालको नाम अस्मि ( किल सृष्टेः कष्टं दूरे टालये ) । एकहेलया टालको नाम अस्मि सर्वटालको नाम अस्मि ( किल सर्वसहायतया ) । सर्वघटयिता नाम अस्मि ( सर्वं उत्तमम् ) । सर्वशुभो नाम अस्मि । प्रभूतशुभो नाम अस्मि शुभमान् नाम अस्मि ।

॥ १५ ॥ कामलाभो नाम अस्मि ( किल शुभं लाभं यथेच्छया करोमि ) कामलाभतमो नाम अस्मि ( किल वपुषि मे सर्वे लाभाः ) लाभवान् नाम अस्मि साधको[149] नाम अस्मि लाभाभिलाषी नाम अस्मि । पुण्यं नाम अस्मि ( किल तनुर्मे सर्वं पुण्यं ) महान् नाम अस्मि ( महत्ता च स्वामिनो द्विधा एका च वपुषः । एका च कार्यन्यायादिभिः ) । राजा नाम अस्मि राजतमो नाम अस्मि ( अपरेभ्यः ईअज्देभ्यः ) शुभज्ञानी नाम अस्मि शुभज्ञानितमो नाम अस्मि । दीर्घलाभो नाम अस्मि ( किल दीर्घकालं लाभो मत्तः प्रभूतः ) ॥

॥ १६ ॥ तानि इमानि नामानि ( नः ) ॥ यश्च मे एतस्मिन् भुवने यस्मिन् सृष्टिमति स्पितम जरथुश्त्र इमानि नामानि घोषयति च ब्रूते च ।

॥ १७ ॥ उपरि वा दिवसं उपरि वा रात्रिम् । प्रब्रूते उत्तिष्ठन् वा उपविशन् वा उपविशन् वा उत्तिष्ठन् वा अइविअंघनिं[150] वा बंधयन् अइविअंघनिं वा छोटयन् ( किल ब्रुवाणो कुस्ति नूतनां करोति पुनर्ब्रूते ) प्रकृष्टं वा व्रजन् स्थानात् प्रकृष्टं वा व्रजन् गृहात् प्रकृष्टं वा व्रजन् ग्रामात् संप्राप्तो ग्रामांतरं वा ।

---

EMU$_4$ पृथुलदर्शी.

॥ १३ ॥ १. H$_1$, K$_1$, EMU$_4$ प्रहरिको. २. H$_1$, FBV, EMU$_4$, NMRL$_1$ अपेक्षितावता ; K$_1$ K$_3$ अपेक्षे तावता.

॥ १४ ॥ १. NMRL$_1$, H$_1$, K$_1$, काममपि; EMU$_2$, EMU$_4$ किमपि. २. EMU$_2$, NMRL$_1$, EMU$_4$, दूरं. ३. H$_1$, K$_1$, FBV, NMRL$_1$, EMU$_4$, K$_3$ शुभनाम.

॥ १५ ॥ १. H$_1$, K$_1$, EMU$_2$ सर्वोलाभः. २. EMU$_2$ लाभसाधनो. ३. H$_1$, K$_1$, FBV, K$_3$, EMU$_4$ वपुषा. ४. K$_1$ दीर्घदीर्घकालम्. ५. EMU$_2$ मम.

॥ १७ ॥ १. EMU$_4$ अइविअंघनेन. २. EMU$_2$ बन्धयतः. ३. EMU$_2$ छोटयतः.

॥ १८ ॥ नो तस्य नरस्य तस्मिन् दिवसे न च तस्यां रात्रौ कोपश्च दुर्गतिमान् दुष्टनामै नो[151] विनाशनार्थं (किल कोपः तस्य मनो विनाशयितुं न शक्तः)। नो कर्तरिभिः न च चक्रैः न च शरैः न च शल्लिकाभिः न च वज्रेण न च प्रतिकुर्वंति[152] तान्[153] विनाशनार्थं ॥

॥ १९ ॥ प्रतिकुर्वंति इमानि नामानि पृष्ठतश्च पुरतश्च। प्रतिकुर्वंति अदृश्यमूर्तेः दुष्टगणात्। कामाच्च दुर्गतेर्मत्सरिणः। जीवन्त्या[154] जीवतां कदर्थकात् प्रभूतमृत्योश्च परितः दुर्गतेः यस्मात् आहर्मनात्। दृष्टांतोऽस्य यथा सहस्रं नराणां एकं नरं उपरिरक्षयेत् ॥

॥ २० ॥ [के विजयतया हंतारः इत्यादि पूर्वोक्तवत्]

॥ २१ ॥ नमो राजश्रियै। नमो एरान्वेज[155] देशाय। नमो लाभमूर्तये मज्दद्त्तायै। नमो उदकाय दाइतिनद्याः[156]। नमो अर्दुईसूर[157] उदकेभ्यो निर्मलेभ्यः। नमः समग्रायै पुण्यात्मनां पंक्तये ॥

॥ २२ ॥ [अहुनवर १०। अशेम् वोहू १०] अहुनवरं आराधये (स्वामिनो अभिलाषलक्षणम्)। पुण्यं अतःपरं सुंदरं गुरुतरं आराधये। उद्यमं च ऋद्धिं च शक्तिं च विजयं च श्रियश्च प्राणं च आराधये (शक्तिरिति बाहूनां प्राणं इति पाद्योः) अहुर्मिज्दं शुद्धिमंतं श्रीमंतं आराधये ॥

ये विद्यमानेभ्यः एवं इजिस्न्याः उपरि उत्तमस्य।

महाज्ञानिनः स्वामिनः (किल इजिस्नीः अहुर्मज्दाय प्रचुराः कुर्वंति) वेत्तुः पुण्यं यत् किंचित् (किल यत् किंचित् पुण्यं प्रसादं अहुर्मज्दो वेत्ति)।

समवायिकान् तान् ताश्च आराधये (किल नरस्त्रीआकृतीन् अमिशास्पितान्) ॥

[अहुनवर २]

इजिस्निं च नमस्कृतिं च शक्तिं च प्राणं च आशीर्वादयामि अहुर्मिज्दाय शुद्धिमते श्रीमते ॥

---

## ॥ दहमईआनस्य[157] आफ्रंगानस्य अविस्ताऽर्थः ॥

॥ १ ॥ [अहुनवर २ अशेम् वोहू ३ प्रब्रवीमि इति पूर्वोक्तवत्। गाह यथासमयं।]

---

॥ १८ ॥ १. $K_1$, $H_1$ नगरस्थ. २. $K_1$, $H_1$ कोपस्य दुर्म्रते दुष्टनाम; $NMRL_1$ कोपस्य दुर्गतेनाम् $EMU_2$ कोपश्चदुर्गति दुष्टनाम्ना. ३. $K_1$ विनाशयनाय. ४. $H_1$ विनाश्यनाय.

॥ १९ ॥ १. $H_1$, $K_1$ नामानिनः. २. $H_1$ दुर्गतेःर्मत्सणाः (?); $K_1$ मत्सिणाः (?). ३. FBV जीवन्यजीवतां; $EMU_4$ $EMU_4$ जीवत्याजीवतां; $EMU_2$ जीवेनजीवतां. ४. $EMU_2$ कदर्थिकोऽभूत. ५. $H_1$, $K_1$, FBV, $K_3$, $NMRL_1$ दृष्टांतस्य; $EMU_2$, $EMU_4$ दृष्टांतमस्य. ६. FBV प्रतिरक्षयेन्; $H_1$ K, $NMRL_1$, $EMU_4$, $EMU_2$ उपरिरक्षयेत्.

॥ २१ ॥ १. $K_1$, $H_1$, $EMU_4$ राजश्रियौ. २. $K_1$, $H_1$, $EMU_2$, $EMU_4$ एरांग्वेज. ३. $H_1$ लाभपूर्तये; $EMU_2$ राजमूर्तये.

॥ २२ ॥ १. Found only in $EMU_2$. In $EMU_4$ हर्षचउद्यमंचशक्तिंच &c.

---

Limji Hateria library. It contains ( 1 ). a treatise called in Pâzend *Jahêshni Dânâ Frôkhizâd Aôgemadaechâ* ( which rendered into Pahlavi is *Zahishn-i-Dânâk Farkhozad Aôgemadaechâ i. e.* the prayers and blessings composed by the philosopher Farrokhzâd, beginning with the word Aôgemadaechâ ). This treatise is a sermon on death, consoling the survivors of a person departed from this world. It is partly in Avestâ language and partly in Palhavi-Pâzend and is well known to Avesta and Pahlavi scholars. Here it is translated into Sanskrit and old Gujarâti, of which the former will appear in part sixth of this Collection.—( 2 ) *Chemi-i-Kusti,* a brief Pahlavi-Pâzend treatise on the sacred cincture of the Parsees, translated into Sanskrit and old Gujarâti; the former, *viz.* the Sanskrit translation of this will also be published in the Part sixth of this Collection. Colophon; Rôz Khôrdâd Mâh Tîr, Sâl 916 ( A. Y. ), scribe Eravdzâdâ Asdîn Kâkâ Dhanpâl, a descendant of Mobed Hamzyâr in Hindustân in the town of Khumbât ( Cambay )—(3) A Pâzend-Sanskrit Glossary.—( 4 ) Three folios of Pahlavi-Pâzend Glossary.—( 5 ) Patet Irânî rendered into Pahlavi.—( 6 ) Afrîn-e-Zartosht, Avestâ and Pâzend.—( 7 ) Patet-e-Irânî in Pâzend. Colophon Rôz Âshtâd Mâh. Sapandârmad, Sâl 916 ( A. Y. ); Scribe Kâus bin Kâkâ, a descendant of Movad. ( 7 ) *Afrīn Gahambâr* rendered into Pahlavi, imperfect in the beginning.—( 8 ) *Rasmhâi Behdīnân, i. e.* the customs of Zoroastrians, a fragment from Revâyets.—( 9 ) Yasna Hâ 48-52 with Sanskrit translation.—( 10 ) Some phrases and words of Yasna with the Sanskrit meanings, by way of a glossary.

10. J. J. $M_2$. A modern manuscript belonging to Shâms-ul-ulama Ervad Jivnji Jamshedji Modi; imperfect, only 144 folios extended from the beginning upto the Hâ 13, containing Avestâ, Pahlavi, and Sanskrit texts.

11. $NMRL_4$. L. 8$\frac{3}{8}$. Br. 6$\frac{3}{8}$. Th. 1. An old-looking Indian manuscript belonging to the Navsari Meharji Rânâ Library. Its 121 folios from the beginning are in $EMU_{15}$, mentioned above, and the rest end at the folio 378, at the Hâ 57th. Some other person has tried to supplement the Sanskrit translation of Hâs 59, 60, 62, and 65, §§ 1-5 apparently from *Perâma Iastī* (खुर्दअवस्ताऽर्थः) No date, no Colophon. This is the latter part of a manuscript divided among some priestly family about which we have spoken above.

12. $H_2$. A modern Indian manuscript on English paper, belonging to the late Sardar Shams-ul-ulama Dustur Hoshangji Jamaspji Jamaspâsânâ of Poona, folios 129 extending from the beginning up to the Hâ 53. The avestâ text of Hâs 44-53 is supplemented separately. No Colophon.

13. MFL. An Indian Manuscript belonging to the Mullâ Firoze Library of Bombay written on Indian paper; folios 262 extending from the beginning up to the Hâ 59. No colophon. The writer, however, displays gross ignorance of Sanskrit in many places.

14. A study of the Five Zarathushtrian ( Zorsastrian ) Gâthâs, with texts and translations, also with the Pahlavi translation for the first time edited with collation of manuscripts, and now prepared from all the known codices, also deciphered and for the first time translated in its entirety into a European language

with Neriyosangh's Sanskrit text edited with the collation of five MSS, and with a first translation, also with the Persian text contained in Codex 12b of the Munich collection edited in transliteration, together with a commentary, by Lawrence H. Mills, D. D. 1894.

The following are a few more examples of peculiar Sanskrit letters :—

ष्य for ज्य *e. g.* युष्यते for युज्यते

द्य for ज्य *e. g.* युद्यते for युज्यते

त्त for ज्द *e. g.* मात्त.; अस्त्र for माज्दइअस्त्र

ध्न्न for ल्ल *e. g.* वध्न्नभर्तये for वल्लभतायै

क्षु for क्षु *e. g.* क्षुद्र for क्षुद्र

ऊ for ऋ *e. g.* ऊते for ऋते

त्त for ज्द *e. g.* होर्म्मित्तात् for होर्म्मिज्दात्

र्नु for ओ *e. g.* फेरशर्नुखस्य for फ्रशोखस्य

य for ज *e. g.* यामास्पस्य for जामास्पस्य

ज for य *e. g.* जोऽभूत् for योऽभूत्

र्उ for ओ *e. g.* फेरशर्उखस्य for फ्रशओखस्य

स for श and<br>ख for क्ष } *e. g.* सिख्या for शिक्षया

श्र or म्भ्र for अ *e. g.* श्रपः or म्भ्रपः

ज्ञ for ज्ज्ञ *e. g.* होर्म्मिज्द for होर्म्मिज्द

त्त for क्ष *e. g.* रात्तस्याः for राक्षस्याः

स्छ for स्थ *e. g.* समीपस्छो for समीपस्थो

र्उ for ओ; *e. g.* हुर्उगुआजः for हुओगुआजः

च for त्व; *e. g.* चया for त्वया.

र्उ for ओ *e. g.* षुअएतुर्उदथकरणं for खुअएतुओदथकरणम्

र्त्र for ओ *e. g.* हुर्त्रगुआयः for हुओगुआजः

र्उ for ओ *e. g.* शर्उशिर्उशात्=सओशिओसात्

छ for स्छ= स्थ *e. g.* उच्छनाथ for उच्छानाय=उत्थानाय.

र्त्रु for ओ *e. g.* हुर्त्रुगुआजः for हुओगुआज

उ or र्उ for ओ *e. g.* हुर्उगुआजः or हुर्उग्वामः for हुओग्वाजः

द्य for ज्य *e. g.* राद्ये for राज्ये

र्उ for ओ *e. g.* शर्उशीर्उसः for शओशीओसः

च्छ for छ=त्स *e. g.* उच्छाहं for उणहं=उत्साहं

BOMBAY<br>*25th. July 1910.* } SHERIARJI DADABHAI BHARUCHA.

# अनुक्रमणिका.



# इजिस्ति

श्री अहुर्म्मिज्दाय नमः ॥

नाम्ना सर्वाङ्कुशलतया च साहाय्येन च स्वामिनो अहुरमज्दस्य महाज्ञानिनः सिद्धिः शुभा भूयात् प्रवृत्तिः प्रसिद्धिश्च उत्तमदीने माज्दईअस्याः वपुषि च पाटवं दीर्घं जीवितं च सर्वेषां उत्तमानां उत्तममनसाम् ॥

इदं इजिस्निजंदपुस्तकं मया निरिओसंघेन धवलसुतेन पहलवीजंदात् संस्कृतभाषायां अवतारितम् । सुखप्रबोधाय उत्तमानां शिक्षाश्रोतॄणां[1] सत्यचेतसां ॥

प्रणामः उत्तमेभ्यः शुद्धमतेभ्यः सत्यजीवेभ्यः सत्यसमाचारेभ्यः ॥

## हा[1a] १.

॥ १ ॥ १. निमन्त्रयामि संपूर्णयामि ( किल इजिश्नौ[1] निमन्त्रयामि संपूर्णांच करोमि ) दातारं स्वामिनं महाज्ञानिनं शुद्धिमंतं श्रीमंतम् । महत्तरंच ( किल वपुषा ) । उत्कृष्टतरंच ( मूलेन ) [ मूल्येन ] सुंदरतरंच ( दर्शनेन ) । २. गाढतरंच ( कार्यन्यायैः[2] ) बुद्धिमत्तमं[3] च ( ज्ञानितमम् ) सुकलेवरतमं च ( किल अस्य अंगानि अन्योन्यं अनुरूपतराणि ) पुण्यात् प्रधानतमं च ( सदाचारात् ) ( किल होर्मिज्दात् यद्वपुः[4] पुण्येन तन्महत्तरम् ) ३. उत्तमज्ञानी[5] ( किल सद्व्यापारज्ञानी ) [ उत्तमज्ञानिनं ] स्वेच्छानन्दी ( किल अपरान् अभीप्सिततरेण आनन्देन कुरुते ) [ स्वेच्छानन्दकरं ] ॥ ४. योऽस्मान् ददौ [ दधौ ] । यो घटयामास ( तनुबिंबम्[1b] ) यः प्रत्यपालयत् । यः अदृश्येभ्यो बृहत्तरः[6] ॥

॥ २ ॥ ५. निमंत्रयामि संपूर्णयामि । ग्वहमननामानं अमरम् ( गवां पशूनां पतिं ) अशवहिस्तनामानं अमरम् ( अग्नीनां पतिम् ) शहरेवरनामानं अमरम् ( सप्तधातूनां पतिम् ) । स्पिंदारमदनाम्नीं अमरम् ( पृथिवीपतिम्[1] )[2] अविर्दादनामानं अमरम् ( अपां पतिम् ) । अमिर्दादनामानं अमरम् ( वनस्पतीनां पतिम् ) । ६. गोस्तनुं गोः [3]आत्मानम् । अग्निं होर्मिज्दस्य । समागंतृतमं अमरेभ्यो गुरुभ्यः ( चिह्ने यतोऽस्मिन् द्वे[2] प्राप्ते स्तः परलोकस्य इहलोकस्य च अंगारो ज्योतिश्च[3] ) ॥

---

• The prefatorial Heading.—१. $TD_2$, $EMU_{14}$, MFL शिष्यश्रोतॄणां; $EMU_{15}$, $JJM_2$ शिष्याश्रोत्राणां; $EMU_{16}$ शिष्याश्रोत्तृणां; $EMU_{17}$ शिष्याशिष्याणांश्रोत्तृणां. [ See Part I. Note 1*a*. ].

॥ १ ॥ १. Some MSS. इजिस्ति others इजिस्तिं. २. $H_2$, $MLHL_1$, $TD_2$, $K_7$, $EMU_{16}$, MFL, कार्यन्याये; $EMU_{14}$ ०न्यायेन. ३. Corrected from बुद्धितमं in almost all MSS. ४. $TD_2$. यद्वपुःपुण्यात् ? [ पुण्यात् ] तनु महत्तरं; $K_7$, $EMU_{17}$, $EMU_{16}$, $H_2$ पुण्यात् तनुमहत्तरं. ५. Some MSS. उत्तमज्ञः ६. $TD_2$, $K_7$, $EMU_{17}$, $EMU_{14}$ बृहत्तरः $EMU_1$ महत्तरः.

॥ २ ॥ १. SP, $EMU_{14}$ पृथ्वीपती. २. $EMU_{16}$ द्वेऽपि. ३. $EMU_{16}$ ज्योतिश्च.

॥ ३ ॥ ७. निमंत्रयामि सम्पूर्णयामि । अहःपुण्यगुरून्[1] । ( तत् यत् संध्यायाः अन्तः संध्यायां शक्यते गन्तुं प्रभावेन अस्य ) हाउअननाम्नीं ( प्रातःसंध्यां ) पुण्यात्मकां पुण्यगुर्वीम् ॥ ८. निमंत्रयामि संपूर्णयामि । साउअंघनाम्नीं च ( या समं हाउअनसंध्यायाः समकार्यिणी याच यूथानि गवां प्रवर्धयति ) । विसिनाम्नीं च पुण्यात्मकां पुण्यगुर्वीम् ( या मनुष्येषु मोइबदेषु मध्ये सत्कार्यिणी उत्तमपतिषु ) ॥ ९. निमंत्रयामि सम्पूर्णयामि। मिहिरं निवासितारण्यं सहस्रकर्णं दशसहस्रलोचनं उक्तनामानं इअज्दम् ( किल नाम अनया दीन्या उक्तं आस्ते ) । आनंदं ( निर्भयत्वं[2] ) आस्वादनं च ( स इअज्दः ये[ न ] मनुष्याः खाद्यस्य स्वादनं जानन्ति ) ॥

॥ ४ ॥ १०. निमंत्रयामि संपूर्णयामि । रपीथ्विननाम्नीं ( मध्याह्नसंध्यां[1] ) पुण्यात्मनीम् पुण्यगुर्वीम् ॥ ११. निमंत्रयामि संपूर्णयामि । फ्रेदादारफ्सुनाम्नीं[2] ( या समं रपीथ्विनसंध्यायाः समकार्यिणी[3] या च यूथानि पशूनां प्रवर्धयति ) जंदनाम्नीं च पुण्यात्मनीं पुण्यगुर्वीम् ( या मनुष्येषु गुरुषु मध्ये सत्कार्यिणी ) । १२. निमंत्रयामि संपूर्णयामि । पुण्यं उत्कृष्टतरं अग्निं च होर्मिज्दस्य ॥

॥ ५ ॥ १३. निमंत्रयामि संपूर्णयामि । उजइएरिननाम्नीं[1] ( अपराह्नसंध्यां[2] ) पुण्यात्मनीं पुण्यगुर्वीम् ॥ १४. निमंत्रयामि संपूर्णयामि । फ्रेदादारवीरनाम्नीं च ( या समं उजइएरिन संध्यायाः समकार्यिणी या च यूथानि नराणां प्रवर्धयति । देहेनाम्नीं च पुण्यात्मनीं पुण्यगुर्वीम् ( या मनुष्येषु मध्ये सत्कार्यिणी ये परलोकिनां भलापनापतिषु[3] )॥ १५. निमंत्रयामि संपूर्णयामि । बुर्जस्वामिनं नाभिं अपाम् । ( बुर्जस्वामी स्त्रीणां इअज्दो जलमयः किल मूलस्थानं निर्मलाङ्गं एतस्मात् नाभिश्च अपां एवं यतस्तस्मात् बीजं जलस्य अउरुअंदस्य नाम्नो येन अश्वाः सुंदरतरा जायन्ते ) अपश्च मज्ददत्ताः ॥

॥ ६ ॥ १६. निमंत्रयामि संपूर्णयामि । अइविश्रुथ्रिम-अइबिगायच-नाम्नीं ( पूर्वार्धरात्रसंध्यां ) पुण्यात्मनीं पुण्यगुर्वीम् । १७. निमंत्रयामि संपूर्णयामि । फ्रेदादारविस्पहुजीवस्त्रीनाम्नीं च ( या समं अयिविश्रुथ्रिम-संध्यायाः समकार्यिणी याच मूलं फलं सर्वं प्रवर्धयति ) । जरथुस्त्रोतिमनाम्नीं च पुण्यात्मनीं पुण्यगुर्वीम् ( या मनुष्येषु मोइबदेषु मध्ये सत्कार्यिणी आचार्याणां आचार्येषु ) ॥ १८. निमंत्रयामि संपूर्णयामि । मुक्तात्मनां वृद्धीः[1] नारीणां च नरसंघानाम्[2] । संवत्सराणां च सुजीवनीम् । १९. उत्साहिनं च सुघटितं शुभोदितम् । विजयं च होर्मिज्ददत्तम् । टालनां च या उपरि प्रवृत्या । ( बहरामं च इअज्दम् ) ॥

---

॥ ३ ॥ १. JJM$_2$, EMU$_{15}$, EMU$_{16}$, EMU$_{17}$ अन्हः पुण्यगुरून्. २. H$_2$, JJM$_2$, K$_7$, TD$_2$, MLHL$_4$, EMU$_{15}$, EMU$_{17}$ आनंदनिर्भयत्वं.

॥ ४ ॥ १. Corrected from मध्यान्हःसंध्यां in several MSS. २. Some MSS. फ्रेःददार, some फ्रेददार, some फ्रेहेददार &c. ३ K$_7$, JJM$_2$, EMU$_{15}$ या समं रपिथ्विनिसंध्या या [ संध्यया ] समकार्येषु TD$_2$, H$_2$, या समं रपिथ्विसंध्याया समका समकार्येषु.

॥ ५ ॥ १. EMU$_{15}$ उजीइएरेन. २. Corrected from अपरान्हः संध्यां in several MSS. ३. EMU$_{15}$ भयापनपतया; H$_2$, K$_7$, MFL, EMU$_{16}$, TD$_2$, MLHL$_1$ भलापनापतयः; JJM$_2$ भयापनाच तथा; EMU$_{14}$ भलापनापतयः; EMU$_{17}$ भला पतय [ See Part I. Note 22 ].

॥ ६ ॥ १. K$_7$, MLHL$_1$, वृद्धिनां; २. MFL, K$_7$, MLHL$_1$, EMU$_{16}$, EMU$_{17}$, JJM$_2$, H$_2$, EMU$_{15}$ नरसंहानां.

॥ ७ ॥ २०. निमंत्रयामि संपूर्णयामि । उशाहिननाम्नीं अपरार्धरात्रसंध्यां पुण्यात्मनीं पुण्यगुर्वीम् । २१. निमंत्रयामि संपूर्णयामि । बिरेजनाम्नीं च ( या समं उशाहिनसंध्यायाः समकार्यिणी या च संचयान् धान्यानां प्रवर्धयति या मनुष्येषु मध्ये सत्कार्यिणी ये नगरन्यायानां अधिष्ठातारः ) । नमाननाम्नीं च पुण्यात्मनीं पुण्यगुर्वीम् । ( या मनुष्येषु गृहान्तर्वर्तिषु मध्ये सत्कार्यिणी ) । २२. निमंत्रयामि संपूर्णयामि । श्रोशं पुण्यात्मानं भक्तिशीलं विजयिनं वृद्धिदं भूसंभूतेः । ( श्रोशं आदेशपतिम् ) । २३. रश्नं शुद्धम् । ( रश्नः सत्यपतिः ) । आस्तादं च वृद्धिदं भूसंभूतेः पुष्टिदं भूसंभूतेः ॥

॥ ८ ॥ २४. निमंत्रयामि सपूर्णयामि । मासान् पुण्यगुरून् । अन्तराचंद्रं पुण्यात्मकं पुण्यगुरुम् । ( पंचकस्य यः आद्यस्य उत्तमस्य ) । २५. निमंत्रयामि संपूर्णयामि । संपूर्णचंद्रं विसप्तथं[१] च पुण्यात्मकं पुण्यगुरुम् । ( पंचकस्य यः द्वितीयस्य उत्तमस्य । पंचकस्य यः तृतीयस्य उत्तमस्य ) ॥

॥ ९ ॥ २६. निमंत्रयामि संपूर्णयामि । गहंबारान् पुण्यगुरून् । ( गहंबारान् इति समयसमुच्चयान् सृष्टीनां घटनकालान्[१] ) । मइदुइजरमनामानं पुण्यात्मकं पुण्यगुरुम् । ( आकाशस्य घटनाकालम् ) । २७. निमंत्रयामि संपूर्णयामि । मइदुइसमनामानं पुण्यात्मकं पुण्यगुरुम् । ( जलानां सृजनकालम् ) । २८. निमंत्रयामि संपूर्णयामि । पइतिशहहेमनामानं पुण्यात्मकं पुण्यगुरुम् ( पृथिव्याः घटनाकालम् ) । २९. निमंत्रयामि संपूर्णयामि । अइआथ्रिमनामानं ( वनस्पतीनां घटनाकालं ) अधःपरिवर्तितोष्णकालागामिनम्[२] । वीर्यनिक्षेपणं च ( किल अश्वादिपशूनां वीर्यनिक्षेपः तन्मध्ये आयाति ) पुण्यात्मकं पुण्यगुरुम् । ३०. निमंत्रयामि संपूर्णयामि । मइदिआरिनामानं पुण्यात्मकं पुण्यगुरुम् ।( गवां पशूनां सृजनकालम् )। ३१. निमंत्रयामि संपूर्णयामि । हमस्पथ्मएदएं नामानं पुण्यात्मकं पुण्यगुरुम् । ( मनुष्याणां दशजातीनां सर्वासां च सृजनकालम् । हमस्पथ्मएदएमता [३]सर्वसैन्यदातिः ) ३२. निमंत्रयामि संपूर्णयामि । संवत्सरान् पुण्यगुरून् ॥

॥ १० ॥ ३३. निमंत्रयामि संपूर्णयामि समग्रान् तान् गुरून् ये सन्ति पुण्यगुरवः । त्रयश्च त्रिंशच्च । निकटाः परिवर्तुलं हाऊअनसंध्यायाः । ये सन्ति पुण्यस्य यत् उत्कृष्टतरं होर्मिज्देन शिक्षापिताः ( जरथुष्ट्राय ) । जरथुष्ट्रेन च प्रोक्ताः ( अंतः अस्मिन् जगति ) ॥

---

॥ ७ ॥ १. उसहिन nearly all MSS. २. रात्रि nearly all MSS.

॥ ८ ॥ १. $EMU_{26}$, $MLHL_1$, $K_7$ विशसथें; MFL विस्पतथां; $TD_2$, $H_2$ वीस्पतथें; $EMU_{15}$, $JJM_2$ वीसशसथें.

॥ ९ ॥ १. $EMU_{16}$, $EMU_{17}$ समयसमुच्चयात्; $EMU_{17}$ सृष्टीनांघटनकालात्. २. $H_2$ $TD_2$, MFL ०उष्णकालागमनं; $EMU_{15}$, $MLHL_1$, $EMU_{16}$, $EMU_{17}$ ०उष्णकालागमिनं. ३. $JJM_2$, $EMU_{15}$, $EMU_{17}$ संवंऽन्य । दाती; $H_2$, $K_7$, $TD_2$ सर्वन्यदाति; $MLHL_1$ सर्वसैन्यदाति thus corrected; MFL सर्वसैन्यदातिहमस्पथमदएमता.

॥ १० ॥ १. $EMU_{15}$ पुण्या गुरवः. २. $H_1$, $TD_2$, MFL सिक्षिपिता.

॥ ११ ॥ ३४. निमंत्रयामि संपूर्णयामि । स्वामिनं मिहिरं महत्तरं अनश्वरं पुण्यात्मानम् । ( ज्ञातव्योऽसौ इति शेषः )[1] । ताराश्च स्वनामनिओसृष्टीः । ( होर्मिज्देन सृष्टाः ) । ३५. तिस्तरं तारकंच शुद्धिमंतं श्रीमंतम् । ( वृष्टिनक्षत्रम् ) । चंद्रं च पशुबीजम् । सूर्यं च तेजस्विनं वेगवदश्वम् । लोचने च स्वामिनो महाज्ञानिनः । मिहिरं च ग्रामाणां राजानम् । ( ऋते अमिशास्पिंतेभ्यः असौ महत्तरः । उपरि ग्रामाणां इहलोकानां राजा ) । ३६. निमंत्रयामि संपूर्णयामि । ( दिनाधिपतिम् ) । ३७. निमंत्रयामि संपूर्णयामि । ( मासाधिपतिम् )[5] ॥

॥ १२ ॥ ३८. निमंत्रयामि संपूर्णयामि । त्वां अग्ने स्वामिनो महाज्ञानिनः पुत्र समं समग्रैः अग्निभिः । ३९. निमंत्रयामि । उदकं उत्तमतरम् । ( नामांकितं यत्[6] तद् अन्तर्वनस्पतेः ) समग्राश्च अपः मज्ददत्ताः ( एकहेलया एव ) समग्रांश्च वनस्पतीन् मज्ददत्तान् ॥

॥ १३ ॥ ४०. निमंत्रयामि संपूर्णयामि । मांथ्रीं वार्णीं गुर्वीं पुण्यात्मनीं स्वामिकामाम् । ( किल कामं यत् मनसा सह स्वामिनः तुल्यं करोति ) । न्यायं विभिन्नदेवम् । न्यायं जरथुश्त्रियं ( निर्मलतरम् ) । दीर्घां उपरिप्रवृत्तिम् । ( शिक्षां अदृश्यरूपिणीम् ) । दीनीं च उत्तमां च माज्दइअस्नीं ( एकहेलयैव ) ॥

॥ १४ ॥ ४१. निमंत्रयामि संपूर्णयामि । गिरं होशदास्तारं मज्ददत्तं पुण्यशुभम् । ( स गिरिः यश्चैतन्यं मनुष्याणां स्थाने[1] दधाति रक्षति च ) । समग्रांश्च गिरीन् पुण्यशुभान् संपूर्णशुभान् मज्ददत्तान् । ४२. राज्ञां च श्रियं मज्ददत्ताम् । [0]अगृहीतां श्रियं च मज्ददत्ताम् । ( श्री यां आचार्यैरधिवासिनी सत्कार्येण सद्व्यवसायेन च स्वीया शक्यते कर्तुम् ) ॥ ४३. निमंत्रयामि संपूर्णयामि । अशिशवंघाम् ( उत्तमलक्ष्मीं ) उत्तमाम् । ( उत्तमताच अस्या इयं यत् उत्तमानां लक्ष्म्याः रक्षां साहाय्यं च करोति । सर्वेऽपि ये लक्ष्मीं स्वाधीनतया होर्मज्दस्य लाभेन च उत्तमानां दधते तेषां विपक्षान् दूरे दधाति ) । निर्वाणज्ञानं च उत्तमम् । चित्तं[3] उत्तमम् । चित्तस्थितिं च उत्तमाम् । श्रियं लाभं च मज्ददत्तम् ॥

॥ १५ ॥ ४४. निमंत्रयामि संपूर्णयामि । उत्तमानां उत्तमं आशीर्वादम् । उत्तमं च नरं मुक्तात्मानम् । बलिष्ठतमं च दृढं च उत्कृष्टतमं च मनसा ईअज्दम् । ( शापं इत्यर्थः । उत्तमानां आशीर्द्विधा एकाच मनसा एकाच वचसा । आशीश्च वचसा बलिष्ठतरा शापश्च मनसा बलिष्ठतरः । उत्तमानां आशीः सकलासु रात्रिषु त्रीन् वारान् समग्रेऽपि भुवने सृष्टिमति रक्षया उपरि प्रचरति । लक्ष्मीं च यां सदाचारतया अर्जयति तस्याः लक्ष्म्याः रक्षका उत्तमानां आशीः ) ॥

---

॥ ११ ॥ १. This gloss is found only in Spiegel's edition.

॥ १३ ॥ १. most MSS. मांथ्रवाणीं. २. most MSS. स्वामिन तुल्यं; a few स्वामिना तुल्यं. ३. Three MSS. have विभन्नदैसं [विभिन्नदैसं].

॥ १४ ॥ १. TD$_2$, EMU$_{15}$, MLHL$_1$, K$_7$, H$_2$, JJM$_2$, EMU$_{17}$, MFL स्थानं. २. TD$_2$, H$_2$ अग्रहितां; MLHL$_1$, JJM$_2$ अग्रतां EMU$_{17}$, EMU$_{15}$, EMU$_{16}$, K$_7$, अगृतां. ३. TD$_2$, MLHL$_1$, K$_7$, H$_2$, EMU$_{16}$ चक्रं. ४. TD$_2$, MLHL$_1$, K$_7$, K$_2$, MFL$_1$, EMU$_{16}$ चक्रस्थितंच JJM$_2$ चक्रंस्थितंच ( ? ).

॥ १६ ॥ ४५. निमंत्रयामि संपूर्णयामि । इमानि स्थानानि देशांश्च । अरण्यानिच । मंदिराणिच । गवां वसतीश्च[7] । अपश्च [8]भुवश्चं वनस्पतींश्च । एनांच भूमिम् । तंच आकाशम् । वातं च पुण्यात्मानम् । ताराश्च चंद्रं सूर्यं च । अनंतानि तेजांसि स्वयं दत्तानि । ( स्वयंदातिश्च इयं यत् आत्मानं आत्मनो शक्यते कर्तुम् ) । समग्राश्च स्पनामइनिओस्टृष्टीः पुण्यात्मानः पुण्यात्मनीः पुण्यगुर्वीः ॥

॥ १७ ॥ ४६. निमंत्रयामि संपूर्णयामि । गुरुं महत्तरं यं पुण्यस्य । गुरूणां च [8a]संध्यानां च दिनानांच मासानांच गहंबाराणांच संवत्सराणांच । ये संति पुण्यगुरुतायां हाऊअनगुरुतया उपरि ॥

॥ १८ ॥ ४७. निमंत्रयामि संपूर्णयामि । मुक्तात्मनां वृद्धीः बलिष्ठानां अधिकशक्तीनाम्[1] । पूर्वन्यायवतांच वृद्धीः । नवन्यायनिकटानां च वृद्धीः । निजात्मनश्च वृद्धीम् ॥

॥ १९ ॥ ४८. निमंत्रयामि संपूर्णयामि । समग्रान् पुण्यगुरून् ॥ ४९. निमंत्रयामि संपूर्णयामि । समग्रान् उत्तमदानान् इअज्दान् परलोकचारिणः पृथिवीचरान् । ये संति आराधनीयाश्च नमस्करणीयाश्च पुण्यात् उत्कृष्टतरात्[1] ॥

॥ २० ॥ ५०. हाऊअननाम्नि ( प्रातःसंध्ये ) पुण्यात्मनि पुण्यगुर्वि । ५१. साउअंघनाम्नि ( हाउअनसमकार्यिणि ) पुण्यात्मनि पुण्यगुर्वि । ५२. रपिथ्विननाम्नि ( मध्याह्नसंध्ये ) पुण्यात्मनि पुण्यगुर्वि । ५३. उजइरिननाम्नि ( अपराह्नसंध्ये ) पुण्यात्मनि पुण्यगुर्वि । ५४. अयिविश्रुथ्रिम अइबिगईअच नाम्नि ( पूर्वार्धरात्रसंध्ये ) पुण्यात्मनि पुण्यगुर्वि । ५५. उशहिननाम्नि ( अपरार्धरात्रसंध्ये ) पुण्यात्मनि पुण्यगुर्वि ॥

॥ २१ ॥ ५६. यदि त्वां बबाधे । ५७. यदि मनसा यदि वचसा यदि च कर्मणा । ५८. यदि निरीक्षणेन यदि च अनिरीक्षणेन (प्रमादेन) । ५९. सं[1] त्वां [ ततस्त्वाम् ] तेन प्रकृष्टं स्तौमि । नितांतं त्वां निमंत्रयामि । ( किल तुल्यां द्विगुणतरां[2] पुनः करोमि ) । यदि ते तेन प्रत्यस्खलयं यां इजिश्नि च नमस्कृतिं च ॥

॥ २२ ॥ ६०. गुरवः सर्वे महत्तराः पुण्यात्मानः पुण्यगुरवः । ( संबोधने )[1] । ६१. यदि युष्मान् बबाधे । ६२. यदि मनसा यदि वचसा यदि च कर्मणा । ६३. यदि निरीक्षणेन यदि च अनिरीक्षणेन ( प्रमादेन ) । ६४. तत् युष्मान् तेन प्रकृष्टं स्तौमि नितांतं वो निमंत्रयामि । ( किल वो द्विगुणतराम् पुनः करोमि ) । यदि वस्तेन प्रत्यस्खलयं यां इजश्निं च नमस्कृतिं च ॥

॥ २३ ॥ ६५. प्रब्रवीमि माज्दइअश्नीं जरथुश्त्रियां विभिन्नदेवां होर्मज्दस्य न्यायवतीम् । ( किल मध्ये पापकर्मिणां ब्रवीमि ) । ६६. हाऊअननाम्न्याः ( प्रातःसंध्या-

---

॥ १६ ॥ १. Corrected from भुवनश्च or भुवश्च or भुवनीश्च in different MSS. with the exception of $EMU_{16}$ which has भुवश्च. २. $MLHL_1$, $K_7$, $H_2$, $EMU_{17}$, $EMU_{16}$ आत्मीय.

॥ १८ ॥ १. अधिशक्तीनां in several MSS.

॥ १९ ॥ १. Several MSS. आराधनीयासु नमस्करणीयासु पुण्यात् उत्कृष्टतरान्.

॥ २१ ॥ १. $JJM_2$ ततस् २. Some MSS. तुल्यं द्विगुणतरां, others तुल्यं द्विगुणतरं.

॥ २२ ॥ १. Some MSS. संबोधन.

॥ २३ ॥ १. $EMU_{17}$ $EMU_{15}$ मध्येऽपापकर्मिणां २. $EMU_{15}$ नमस्कारण्याय.

याः ) पुण्यात्मकायाः पुण्यगुर्व्याः आराधनाय नमस्करणाय माननाय प्रकाशनाय । ६७. साऊंघनाम्न्याश्च ( या समं हाऊअनसंध्यया समकार्यिणी याच यूथानि गवां प्रवर्धयति ) विसिनाम्न्याश्च पुण्यात्मकायाः पुण्यगुर्व्याः ( या मनुष्येषु मोइबदेषु मध्ये सत्कार्यिणी ) आराधनाय नमस्करणाय माननाय प्रकाशनाय । ६८. गुरूणां संध्यानांच दिनानांच[8b] मासानांच गहंबाराणांच संवत्सराणांच आराधनाय नमस्कारणाय माननाय प्रकाशनाय ॥

---

## हा २.

( ॥ [1]अतो बरेस्मइअस्तिं ॥ )

॥ १ ॥ १. प्राणं[10] समीहे इजिस्नौ. २. बरेस्मनं समीहे इजिस्नौ । ३. बरेस्मनं समीहे इजिस्नौ प्राणं समीहे इजिस्नौ । ४. प्राणं समं बरेस्मनेन समीहे इजिस्नौ ५ बरेस्मनं समं प्राणेन समीहे इजिस्नौ. ६. एनं प्राणं एनं च बरेस्मनं समीहे इजिस्नौ । ७ तं बरेस्मनं एनंच प्राणं समीहे इजिस्नौ. ८ समं प्राणेन एनं बरेस्मनं समीहे इजिस्नौ । ९. एनं बरेस्मनं समं प्राणेन समं अइविअंघेन पुण्येन परिग्रथितं समीहे इजिस्नौ ॥

॥ २ ॥ १०. अनेन प्राणेन बरेस्मनेन च स्वामिनं महाज्ञानिनं पुण्यात्मानं पुण्यगुरुं समीहे इजिस्नौ । ११. अमरान् गुरुतरान् सुराजानः[1] ( ? ) सुदानिनः समीहे इजिस्नौ ॥

॥ ३ ॥ १२. अनेन प्राणेन बरेस्मनेन च । अह्नः पुण्यात्मनः पुण्यगुरून् समीहे इजिस्नौ । १३. हाऊअननाम्नीं ( प्रातः[1]संध्यां ) पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ १४. साऊंघनाम्नीं च । ( या समं हाऊअनसंध्यायाः समकार्यिणी या च यूथानि गवां प्रवर्धयति ) । विसिनाम्नीं च । ( या मनुष्येषु मोइबदेषु मध्ये सत्कार्यिणी ) पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ १५. अनेन प्राणेन बरेस्मनेनच मिहिरं निवासितारण्यं[2] सहस्रकर्णं दशसहस्रलोचनं उक्तनामानं इअज्दं समीहे इजिस्नौ । ( किल नाम अनया दीन्या उक्तमास्ते ) । आनंदं आस्वादं च समीहे इजिस्नौ । ( स अदृश्यरूपी यस्य प्रभावात् मनुष्याः खाद्यस्य स्वादं विंदन्ति ) ॥

॥ ४ ॥ १६. अनेन प्राणेन बरेस्मनेनच रपिथ्विननाम्नीं ( मध्यान्हसंध्यां ) पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ । १७. फ्रेदादारप्सुनाम्नीं । ( या समं रपिथ्विनसंध्यायाः समकार्यिणी याच यूथानि पशूनां प्रवर्धयति ) । जंदनाम्नींच पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ । ( या मनुष्येषु गुरुषु मध्ये सत्कार्यिणी ) ॥ १८. अनेन प्राणेन बरेस्मनेनच पुण्यं उत्कृष्टतरं अग्निंच स्वामिनो महाज्ञानिनः पुत्रं समीहे इजिस्नौ ॥

---

॥ १ ॥ १. $H_2$ बर्समइअश्ति Sp. ०इअश्ति.

॥ २ ॥ १. $MLHL_1$ सुराजान् [ ought to be सुराज्ञः; but Nerioseng seems to follow the Pahlavi, which takes an *Izâfat-i-Mawsufi* in such cases which *Izâfat* is equivalent to the relative pronoun, and adopts the nom. pl. instead of the acc. pl., with the pronoun ये understood ].

॥ ३ ॥ १. $JJM_2$ प्राह्नः २. $EMU_{15}$, $MLHL_2$, $JJM_2$, $H_2$, $EMU_{17}$, $TD_2$ निर्भयितारण्यं.

॥ ५ ॥ १९. अनेन प्राणेन बरेस्मनेन च उजइएरिननाम्नीं ( अपराह्णसंध्यां ) पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ । २०. फ्रेदादारवीरनाम्नीं च । ( या समं उजइएइरिनसंध्यायाः सत्कार्यिणी याच यूथानि नराणां प्रवर्धयति ) । देहेनाम्नीं च पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ । ( या मनुष्येषु मध्ये सत्कार्यिणी परलोकिनां मेलापनापतिषु[1] ) । २१. अनेन प्राणेन बरेस्मनेन च बुर्जेस्वामिनं नारीणां तेजस्विनं अपां नाभिं प्रधानाश्वं समीहे इजिस्नौ । २२. अपश्च मज्दद्त्ताः पुण्यात्मनीः समीहे इजिस्नौ ॥

॥ ६ ॥ २३. अनेन प्राणेन बरेस्मनेन अइविश्रुथ्रिम-अइबिगाइअच-नाम्नीं ( पूर्वार्धरात्रसंध्यां ) पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ । २४. फ्रेदादारहरविस्पहुजिवइनीनाम्नीम् ( या समं अयिविश्रुथ्रिमसंध्यायाः समकार्यिणी याच मूलं फलं सर्वं प्रवर्धयति ) जरथुस्त्रोतिमनाम्नीं च पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ । ( या मनुष्येषु मध्ये सत्कार्यिणी मोइबदांमोइबदेषु आचार्याणां आचार्येषु ) ॥ २५. अनेन प्राणेन बरेस्मनेनच मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धीः समीहे इजिस्नौ । नारीणांच नरसंघानां समीहे इजिस्नौ । संवत्सराणां सुनिवासितां समीहे इजिस्नौ । उत्साहिनं च सुघटितं शुभोदितं समीहे इजिस्नौ । विजयंच होर्मिज्ददत्तं समीहे इजिस्नौ । टालनांच यां उपरिप्रवृत्त्या समीहे इजिस्नौ । ( बहरामंच इअज्दं । क्वचिच्च[1] टालनां यां उपरिप्रवृत्त्या आस्तादइअज्दस्य ब्रुवंति तथा चोक्तम्[2] ) ॥

॥ ७ ॥ २६. अनेन प्राणेन बरेस्मनेन च उशहिननाम्नीं ( अपरार्धरात्रसंध्यां ) पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ । २७. बेरेजनाम्नीं च । ( या समं उशहिनसंध्यायाः समकार्यिणी या च संचयान् धान्यानां प्रवर्धयति या च मनुष्येषु मध्ये सत्कार्यिणी ये नगरन्यायाधिष्ठातारः ) । माननाम्नीं च पुण्यात्मनीं पुण्यगुर्वीं समीहे इजिस्नौ ( या मनुष्येषु गृहान्तर्वर्तिषु मध्ये सत्कार्यिणी ) ॥ २८. अनेन प्राणेन बरेस्मनेन च श्रोशं भक्तिशीलं शुभोदितं विजयिनं वृद्धिदं पृथिवीविभूतेः पुण्यात्मानं पुण्यगुरुं समीहे इजिस्नौ । ( आदेशपतिम् ) । २९. रश्नं शुद्धं समीहे इजिस्नौ । ( सत्यपतिम् । अस्य रश्न इति नामता शुद्धता सत्यता च ) । ३०. आस्तादं च वृद्धिदं पृथिवीविभूतेः पुष्टिदं च पृथिवीविभूतेः समीहे इजिस्नौ ॥

॥ ८ ॥ ३१. अनेन प्राणेन बरेस्मनेन च मासान् पुण्यात्मनः पुण्यगुरून् समीहे इजिस्नौ । ३२. अंतराचंद्रं पुण्यात्मकं पुण्यगुरुं समीहे इजिस्नौ । ( पंचकस्य यः आद्यस्य उत्तमस्य ) । ३३. संपूर्णचंद्रं विसप्तथिंच पुण्यात्मकं पुण्यगुरुं समीहे इजिस्नौ । ( पंचकस्य यः द्वितीयस्य उत्तमस्य पंचकस्य यः तृतीयस्य उत्तमस्य ) ॥

॥ ९ ॥ ३४. अनेन प्राणेन बरेस्मनेन च गहंबारान् पुण्यात्मनः पुण्यगुरून् समीहे इजिस्नौ । ( गहंबारान् इति समयसमुच्चयान् सृष्टीनां सृजनकालान् ) । ३५. मईदिओइजरमंनामानं पुण्यात्मकं पुण्यगुरुं समीहे इजिस्नौ । (आकाशस्य घटना-

---

॥ ५ ॥ १. Some MSS. मलापनापतिषु.

॥ ६ ॥ १. MLHL$_2$ क्वकचिच्च. २. TD$_2$, H$_2$, EMU$_{17}$, MFL$_1$ तथाचोक्तं "Yāmcha arshtoish Yazatahê".

कालम् )। ३६. अनेन प्राणेन बरेस्मनेन च मइदुइशमनामानं पुण्यात्मकं पुण्यगुरुं समीहे इजिश्नौ । ( जलानां सृजनकालम् )। ३७. अनेन प्राणेन बरेस्मनेन च पइतिशाहहेमनामानं पुण्यात्मकं पुण्यगुरुं समीहे इजिश्नौ । ( पृथिव्याः घटनाकालम् )। ३८. अनेन प्राणेन बरेस्मनेन च अइआथ्रेमनामानं । ( वनस्पतीनां घटनाकालं ) । अधःपरिवर्तितोष्णकालागामिनम्[2] । वीर्यनिक्षेपणम्[3] । ( किल अश्वादिपशूनां वीर्यनिक्षेपस्तन्मध्ये भवति ) । पुण्यात्मकं पुण्यगुरुं समीहे इजिश्नौ । ३९. अनेन प्राणेन बरेस्मनेन च मइदिआरिमनामानं पुण्यात्मकं पुण्यगुरुं समीहे इजिश्नौ । ( गवां पशूनां पंचप्रकाराणां सृजनकालम् ) । ४०. अनेन प्राणेन बरेस्मनेन च हमस्पथमपदएमनामानं पुण्यात्मकं पुण्यगुरुं समीहे इजिश्नौ । ( मनुष्याणां दशजातीनां सर्वासां च सृष्टीनां सृजनकालम् । हमस्पथमपदएमता सर्वसैन्यदातिः ) ॥ ४१. अनेन प्राणेन बरेस्मनेन च संवत्सरान् पुण्यात्मनः पुण्यगुरून् समीहे इजिश्नौ ॥

॥ १० ॥ ४२. अनेन प्राणेन बरेस्मनेन च समग्रान् पुण्यात्मनः पुण्यगुरून् समीहे इजिश्नौ ४३. ये संति पुण्यगुरवः त्रयस्त्रिंशच्च निकटाः परिवर्तुलं हाऊअनसंध्यायाः । ये सन्ति पुण्यस्य यत् उत्कृष्टतरं होर्मिज्देन शिक्षापिताः[1] ( जरथुष्ट्राय ) जरथुश्त्रेणच प्रोक्ताः ( अंतरस्मिन् जगति ) ॥

॥ ११ ॥ ४४. अनेन प्राणेन बरेस्मनेन च स्वामिनं मिहिरं महत्तरं अनश्वरं पुण्यात्मानं समीहे इजिश्नौ । ४५. ताराश्च चंद्रं च सूर्यं च । वनस्पतीनाम्[1] उपरि बरेस्मनेन मिहिरं सर्वेषां ग्रामाणां राजानं समीहे इजिश्नौ । ४६. अनेन प्राणेन बरेस्मनेन च ( दिनाधिपतिं[2] ) समीहे इजिश्नौ ४७. अनेन प्राणेन बरेस्मनेन च ( मासाधिपतिं ) समीहे इजिश्नौ ॥

॥ १२ ॥ ४८. अनेन प्राणेन बरेस्मनेन च त्वां अग्निं स्वामिनो महाज्ञानिनः पुत्रं पुण्यात्मकं पुण्यगुरुं समीहे इजिश्नौ । समं समग्रैः अग्निभिः ॥ ४९. अनेन प्राणेन बरेस्मनेन च अपः उत्तमाः उत्कृष्टतराः मज्ददत्ताः पुण्यात्मनीः समीहे इजिश्नौ । ( या अंतर्वनस्पतिषु ) । समग्राः अपः मज्ददत्ताः पुण्यात्मनीः समीहे इजिश्नौ । ( एकहेलया एव ) । समग्रान् वनस्पतीन् मज्ददत्तान् पुण्यात्मनः समीहे इजिश्नौ ॥

॥ १३ ॥ ५० अनेन प्राणेन बरेस्मनेन च मांथ्रीं वाणीं गुर्वीं प्रभूतश्रीकां समीहे इजिश्नौ । ५१. न्याय्यं विभिन्नदेवं समीहे इजिश्नौ । ५२. न्याय्यं जरथुश्त्रियं समीहे इजिश्नौ । ( निर्मलतरम् ) । ५३. दीर्घां उपरिप्रवृत्तिं समीहे इजिश्नौ । ( अदृश्यरूपिणीं शिक्षाम् ) । दीनिं उत्तमां माज्दइअस्नीं समीहे इजिश्नौ । ( एकहेलया एव ) ॥

॥ १४ ॥ ५४. अनेन प्राणेन बरेस्मनेन च गिरिं होशदास्तारं मज्ददत्तं पुण्यशुभं इअज्दं समीहे इजिश्नौ । ( स गिरिः य श्चैतन्यं मनुष्याणां स्थाने दधाति

---

॥ ९ ॥ १. घटना or घटन in different MSS. २. EMU$_{16}$ MLHL$_1$ अधःपरिवर्तितउष्णकालागमिनं TD$_2$ H$_2$ अधःपरिवर्त्तितउष्णकालागमनं ३. H$_2$ EMU$_{17}$, MLHL$_1$ वीर्यनिक्षेपितं EMU$_{16}$ वीर्यनिक्षेपिनं.

॥ १० ॥ १. MFL शिक्षयिताः.

॥ ११ ॥ १. Some MSS. वनस्पतिषे उपरि बरेस्मनेन्. २. MFL, H$_2$ TD$_2$ दिनाधिपं...... मासाधिपं.

रक्षति च )। समग्रान् गिरीन् पुण्यशुभान् संपूर्णशुभान् [ पुण्यसुखान् संपूर्णसुखान् ] मज्दद्त्तान् पुण्यात्मनः पुण्यगुरून् समीहे इजिश्नौ। ५५. बलिष्ठां राज्ञां श्रियं[2] मज्दद्त्तां समीहे इजिश्नौ। ५६. बलिष्ठां अगृहीतश्रियं[3] मज्दद्त्तां समीहे इजिश्नौ ॥ ५७. अनेन प्राणेन बरेस्मनेन च अर्शिशवंघनाम्नीं ( लक्ष्मीं )[4] समीहे इजिश्नौ। तेजस्विनीं महतीं उत्साहिनीं शुभोदितां पालकां श्रियं मज्दद्त्तां समीहे इजिश्नौ। लाभं मज्दद्त्तं समीहे इजिश्नौ ॥

॥ १५ ॥ ५८. अनेन प्राणेन बरेस्मनेन च उत्तमानां उत्तमां आशिषं समीहे इजिश्नौ। उत्तमं च नरं पुण्यात्मानं समीहे इजिश्नौ। बलिष्ठं च उत्तमं च दृढं च उत्कृष्टतमं च मनसा इअज्दं[2] समीहे इजिश्नौ। ( शापमित्यर्थः। आशीश्च वचसा बलिष्ठतरा शापश्च मनसा बलिष्ठतरः ) ॥

॥ १६ ॥ ५९. अनेन प्राणेन बरेस्मनेन च एता अपश्च भुवश्च[1] वनस्पतींश्च समीहे इजिश्नौ इमानि स्थानानि सर्वदेशांश्च[2] अरण्यानि च मंदिराणि च गोनिवासांश्च समीहे इजिश्नौ। एनं च देशपतिं समीहे इजिश्नौ यं स्वामिनं महाज्ञानिनम्। ( होर्मिज्दं पितरं समग्रायाः पृथिव्याः ) ॥

॥ १७ ॥ ६०. अनेन प्राणेन बरेस्मनेन च गुरून् सर्वान् महत्तरान् समीहे इजिश्नौ। संध्या दिनान्[10a] मासान् गहंबारान् संवत्सरान् ॥ ६१. अनेन प्राणेन बरेस्मनेन च मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धीः समीहे इजिश्नौ ॥

॥ १८ ॥ ६२. अनेन प्राणेन बरेस्मनेन च समग्रान् पुण्यात्मनः इअज्दान् समीहे इजिश्नौ। ६३. समग्रान् पुण्यगुरून् समीहे इजिश्नौ। ६४. हाऊअनसंध्यायाः प्रकृष्टं गुरुतया। साऊअंघायाः विसिनाख्याश्च प्रकृष्टं गुरुतया। गुरूणां सर्वेषां महत्तराणां प्रकृष्टं गुरुतया[11] ॥

---

## हा ३.

॥ १ ॥ १. बरेस्मनेन उपरि सन्निहितेन समं प्राणेन हाऊअनसंध्यायाः गुरुतया। ( संमितेन[1] बरेस्मदानोपरि[13] )। २. खाद्यं[2] भोजनदानं च समीहे इजिश्नौ। अविर्दादं अमिर्दादं गां च उत्तमदानाम्[3]। ( अविरदादं उदकं अमिरदादं च वनस्पतिम् )। ३. सन्मानकृत्या। ( किल पूजाकरणेन )। स्वामिनो महाज्ञानिनः अमराणां गुरुतराणाम्। ४. सन्मानकृत्या श्रोशस्य पुण्यात्मकस्य भक्तिशीलस्य विजयिनो वृद्धिदस्य भूसंभूतेः ॥

---

॥ १४ ॥ १. MLHL$_1$ पुण्यसुशुभान्. २. EMU$_{15}$, EMU$_{17}$, राज्ञां गृहीतां श्रियं. ३. EMU$_{15}$ EMU$_{17}$, अग्रतां TDA$_2$, H$_2$ अग्रहितं. ४. EMU$_{15}$ अर्शिसंघनाम्नीलक्ष्मीं.

॥ १५ ॥ १. Nearly all MSS. उत्तमां आशिषां. २. K$_7$, EMU$_{17}$, MFL, H$_2$ MLHL$_1$, TDA$_2$, EMU$_{15}$ उत्तमंच उत्कृष्टमनसा इजिदं.

॥ १६ ॥ १. All भुवनश्च except EMU$_{16}$. २. TDA$_2$, MLHL$_1$, MFL देशांश्च.

॥ १८ ॥ १. K$_7$ इति द्वितीयं हाय संपूर्णं कर्तु ॥.

॥ ३ ॥

॥ १ ॥ १. EMU$_{15}$ correctly संनिहितेन. २. खादं several MSS. ३. उत्तमदानं some MSS.

॥ २ ॥ ५. हुमं च प्राहुमं[2] च[14] समीहे इजिश्नौ । ( हुमं प्राहुमीयं इत्यर्थः ) । ६. सन्मानकृत्या जरथुश्त्रस्य स्पितमपुत्रस्य पुण्यात्मकवृद्धेः[15] । ७. समिधं समीहे इजिश्नौ गंधं च । ८. सन्मानकृत्या तव अग्ने स्वामिनो महाज्ञानिनः पुत्र ॥

॥ ३ ॥ ९. हुमं समीहे इजिश्नौ । १०. सन्मानकृत्या उदकस्य उत्तमस्य ( तत् यत् नामांकितं अंतर्वनस्पतेः ) । अपां उत्तमानां मज्दद्त्तानां । ( एकहेलयैव ) । ११. उदकं हुमीयं समीहे इजिश्नौ । १२. ( गां बवरां समीहे इजिश्नौ )[1] गां[16] जीवां समीहे इजिश्नौ । १३. वनस्पतिं हिनवानामानं[17] पुण्येन उच्चैर्दत्तम् ( किल सदाचारतया समारचितं ) समीहे इजिश्नौ । १४. सन्मानकृत्या अपां मज्दद्त्तानां ॥

॥ ४ ॥ १५. एनं बरेस्मनं समं प्राणेन समं अइवीअंघनेन पुण्येन परिग्रंथितं समीहे इजिश्नौ । सन्मानकृत्या अमराणां गुरूणाम् । १६. वाचः सुमताः सूक्ताः सुकृताः समीहे इजिश्नौ । १७. गाथानां च उर्क्तिं समीहे इजिश्नौ । १८. सुकृतस्य आदेशं समीहे इजिश्नौ । ( अदृश्यरूपि कार्यं पुण्यं च ) । १९. एनां स्वामितां पुण्यतां च ( कार्यं पुण्यं च यत् अहं विवेद सदैव च करोमि ) । गुरुतां च । ( अदृश्यरूपिणीं इजिश्नीम् ) । गुर्वनुज्ञां च ( अदृश्यरूपिणो नस्कनिबंधान्[3] ) समीहे इजिश्नौ । २०. सन्मानकृत्या इअज्दानां पुण्यात्मनां परलोकचारिणां पृथिवीचारिणाम् । सन्मानकृत्या स्वीयस्य च आत्मनः । समीहे इजिश्नौ । ( वाचः सुमताः सूक्ताः सुकृताश्चेति यावत् सन्मानकृत्या इति सर्वत्र ज्ञेयम् ) ॥

॥ ५ ॥ २१. [समीहे इजिश्नौ]अह्नां पुण्यगुरूणाम् । ( तत् यत् संध्यायाः अंतः संध्यायां शक्यते गन्तुम् प्रभावेण अस्य ) । हाऊअननाम्न्याः प्रातःसंध्यायाः पुण्यात्मकायाः पुण्यगुर्व्याः । २२. समीहे इजिश्नौ । साऊअंघनाम्न्याश्च । ( या समं हाऊअनसंध्यायाः समकार्यिणी या च यूथानि गवां प्रवर्धयति ) । वीसिनाम्न्याश्च पुण्यात्मकायाः पुण्यगुर्व्याः । ( या मनुष्येषु मोइवदेषु मध्ये सत्कार्यिणी उत्तमपतिषु । [ यावत् ]

---

॥ २ ॥ १. [Better होम every where.] २. [Better पराहोम every where.]

॥ ३ ॥ १. There is no Pahlavi rendering corresponding to this clause. The Avesta is "gām baoiryām". $K_7$ omits it.

॥ ४ ॥ १. प्रइग्रथितं several MSS. प्रइग्रथितं $K_7$. २. $H_2$, $TDA_2$ गुर्वनुज्ञानंच. ३. नस्किनिबन्धान् several MSS.

॥ ५ ॥ १. All MSS. abridge the liturgy, except $EMU_{16}$, which gives it in full, as under:—

मिहिरस्य निवासितारण्यस्य सहस्रकर्णस्य दशसहस्रलोचनस्य उक्तनाम्नो इअज्दस्य ( किल नाम अनया दीन्या उक्तमास्ते ) । आनंदस्य ( निर्भयत्वस्य ) आस्वादस्य ( स इअज्दः येन मनुष्याः स्वादस्य स्वादं जानंति ) ॥ समीहे इजिश्नौ । रपीथ्विनीनाम्न्याः ( मध्याह्नः संध्यायाः ) पुण्यात्मकायाः पुण्यगुर्व्याः ॥ समीहे इजिश्नौ । फ्रेडेददारफ्सुनाम्न्याः । ( या समं रपिथ्विनसंध्यया समकार्यिणी याच यूथानि पशूनां प्रवर्द्धयति ) । अंदनाम्न्याश्च पुण्यात्मकायाः पुण्यगुर्व्याः । ( या मनुष्येषु गुरुषु मध्ये सत्कार्यिणी ) ॥ समीहे इजिश्नौ पुण्यस्य उत्कृष्टस्य अग्नेश्च होर्म्मिज्दस्य ॥ समीहे इजिश्नौ । उजइएइरिननाम्न्याः (.........संध्यायाः) पुण्यात्मकायाः पुण्यगुर्व्याः ॥ समीहे इजिश्नौ । फ्रेडेददार [वीर]नाम्न्याश्च ( या सम उजइएइरिनसंध्यया सत्कार्यिणी याच यूथानि नराणां प्रवृद्धति [ प्रवर्द्धयति ] ) देहेनाम्न्याश्च पुण्यात्मकायाः पुण्यगुर्व्याः ( या मनुष्येषु मध्ये सत्कार्यिणी ये परलोकिनां भकापनापतयः ) ॥ समीहे इजिश्नौ । बुर्जस्वामिनो नाभिः अपां ( बुर्जस्वामी स्त्रीणां इअज्दो जलमयः । किल मूलस्थानं निर्मलं तस्मात् नाभिश्च अपां एवं यतस्तस्मात् बीजं जलस्य अरधंदस्य नाम्नो येन अश्वाः सुन्दरतरा

॥ ६-१९ ॥ २३-६०. समीहे इजिस्नौ । ये संति पुण्यगुरुतायां हाऊअनगुरुतायाः उपरि ॥

जायंते )। जलस्यच मज्दद्त्तस्य ॥ समीहे इजिस्नौ । ················इअचनाक्र्याः ( पूर्वार्द्धरात्रसंध्यायाः पुण्या·········)॥ समीहे इजिस्नौ । ·········विस्पहूजीविश्निनाक्र्या (या समं अहृवि······ ········ सत्कार्यिणी । याच मूकं फलं सर्वं प्रवृद्धति [प्रवर्धयति] ) जरथुश्त्रोतिमनाक्र्याश्च ········· पुण्यगुर्व्याः ।(या मनुष्येषु मोहवदांमोवदेषु मध्ये सत्कार्यिणी आचार्याणां आचार्येषु) ॥ समीहे इजिस्नौ । मुक्तात्मनां······द्धीनां नारीणांच नरसंघानां । संवत्सराणांच सुजीवनीनां । उत्साहिनश्च सुघटितस्य शुभोदितस्य । विजयस्यच होर्म्मिज्दद्त्तस्य । टालनायाश्च या उपरिप्रवृत्या ( बहराम-इअजदस्य ) ॥ समीहे इजिस्नौ । उशहिननाक्र्याः ( अपरार्द्धरात्रसंध्यायाः ) पुण्यात्मकायाः पुण्यगुर्व्याः ॥ समीहे इजिस्नौ । ········· या समं उशहिनसंध्यया समकार्यिणी याच·········मनुष्येषु मध्ये सत्कार्यिणी ये नगरन्यायानाम········· ) माननाम्नी········या मनुष्येषु गृहांतर्वर्त्तिषु मध्ये सत्कार्यिणी ) ॥ ···········स्नौ । श्रोशस्य पुण्यात्मनो भक्तिशीलस्य विजयिनो······दस्य भूसंभूतेः ( श्रोशः आदेशपतिः ) ।······स्य शुद्धस्य ( रश्नः सत्यपतिः ) । अशतादस्यच वृद्धिदस्य भूसंभूतेः पुष्टिदस्य भूसंभूतेः ( दिनाधिपतिः ) ॥ इच्छामि इजिस्नौ । मासानां पुण्यगुरूणां । अंतराचन्द्रस्य पुण्यात्मनः पुण्य ······ ॥ समीहे इजिस्नौ । संपूर्णचंद्रस्य बीशस्पथतस्य·········(पंचकस्य यः द्वितीयस्य उत्तमस्य पंचकस्य यः तृतीयस्य )[12] ॥ समीहे इजिस्नौ । गहंबाराणां पुण्यगुरूणां । (गहंबाराणामिति समयसमुच्चयानां ) । मइदिओइजरमनाम्नः पुण्यात्मनः पुण्यगुरोः । ( आकाशस्य घटनकालस्य) ॥ समीहे इजिस्नौ । मइदिओइशेमनाम्नः पुण्यात्मनः पुण्यगुरोः । ( जलानां सृजनकाल [स्य] ) ॥ समीहे इजिस्नौ । पइतिशहहींनाम्नः पुण्यात्मनः पुण्यगुरोः । ( पृथिव्याः घटनकालस्य ) ॥ समीहे इजिस्नौ । अइआथ्रिमनाम्नः ( वनस्पतीनां सृजनकालस्य ) अधःपरिवर्त्तितउष्णकालागमिनः वीर्यनिक्षेपणः (पशूनां वीर्यनिक्षेपस्तन्मध्ये भवति) पुण्यात्मनः पुण्यगुरोः ॥ समीहे इजिस्नौ। मइदिआरिमनाम्नः पुण्या······ गुरोः । (गवां पशूनां पंचप्रकाराणां सृजनकालस्य ) ॥ ············जिस्नौ । हमस्पथ्मएदएनाम्नः पुण्यात्मनः पुण्यगुरोः (मनुष्याणां दश······सर्वासांच सृष्टीनां सृजनकालस्य । हमस्पथ्मएदएमता सर्वसैन्यदातिः ) ॥ समीहे इजिस्नौ । संवत्सराणां पुण्यगुरून् ॥ समीहे इजिस्नौ । सर्वेषां गुरूणां । ये संति पुण्यगुरवः त्रयश्च त्रिंशच्च । निकटाः परिवर्त्तुलं हाऊअनसंध्यायाः । ये संति पुण्यस्य यत् उत्कृष्टतरं होर्मिज्देन सिक्ष्यापिताः [शिक्षापिताः] ( जरथुश्त्रेणच प्रोक्ताः ) ( अंतरस्मिन् जगति ) ॥ समीहे इजिस्नौ। स्वामिनो मिहिरस्य महत्तरस्य अनश्वरस्य पुण्यात्मनः । ताराणांच स्पना······ । ······ तारकस्यच शुद्धिमतः श्रीमतः ( वृष्टिनक्षत्रस्य ) । चंद्रस्य पशुबीजस्य । सूर्यस्यच तेजस्विनो वेगवदश्वस्य । लोचनयोश्च स्वामिनो महाज्ञानिनः । मिहिरस्यच ग्रामाणांच राज्ञः ( ऋते अमिशास्पिंपते असौ महत्तरः उपरि ग्रामाणांच इहलोकिनां राजा) ॥ समीहे इजिस्नौ । ( दिनाधिपते ) ॥ समीहे इजिस्नौ । ( मासाधिपते ) ॥ तव अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य समं अग्निभिः ॥ समीहे इजिस्नौ । उदकस्य उत्तमतरस्य ( तत् यत् अंतर्वनस्पतेः ) । सर्वासांच अपां मज्दद्त्तानां ( एकहेलैव ) । सर्वेषांच वनस्पतीनां मज्दद्त्तानां ॥ समीहे इजिस्नौ । मांथ्रवाण्या·········स्वामिकामायाः( किल कामं यत् मनसा सह स्वा······ति)। न्यायस्य विभिन्नदेव······ । न्यायस्य जरथुश्त्रीयस्य (निर्मल······)। दीर्घा या उपरिप्रकृत्तिः (शिल्पायाः अदृश्यरूपिण्याः) । दीनेश्च उत्तमायाः माज्दइअस्न्याः (एकहेलैव ) ॥समीहे इजिस्नौ। गिरेः होशदास्तारस्य मज्दद्त्तस्य पुण्यशुभस्य[पुण्यसुखस्य](स गिरिर्येश्चैतन्यं मनुष्याणां स्थानेन [स्थाने] दधाति रक्षतिच) । सर्वेषांच गिरीणां पुण्यशुभानां संपूर्णशुभानां [पुण्यसुखानां संपूर्णसुखानां] मज्दद्त्तानां । राज्ञां श्रियश्च मज्दद्त्तायाः । अगृहीतायाश्च······( श्रीः या आचार्यैरधिवासिनी सत्कार्येण सद्व्यवसायेन······शक्यते कर्तुं) ॥ समीहे इजिस्नौ । अर्शिशवंघलक्ष्म्याः उत्तमायाः (उत्तमताच अस्याः ······उत्तमानां लक्ष्म्या रक्षां साहाय्यंच करोति सर्वेपि ये लक्ष्मीं स्वाधीनतया होर्म्मिज्दस्य कामेन च

॥ २० ॥ ६१. स्वाद्यं भोजनदानं च समीहे इजिश्नौ उदकं वनस्पतिं गां च उत्तमदानाम् । सन्मानकृत्या श्रोशस्य पुण्यात्मनः भक्तिशीलस्य दृढस्य आदेशतनोः ( आदेशपतेः ) । चमत्कारस्य शस्त्रस्य स्वामिनः । ( यत् स्वामी अर्जेहिद्वीपस्य सवहीद्वीपस्यच ) उक्तनाम्नः इअज्दस्य । ( किल नाम अनया दीन्या उक्तमास्ते ) ( अस्य पुण्यात्मकताच इयं एवं यत् स्वयं मुक्तिमान् आत्मानं च मनुष्याणां मुक्त्या चंदोरपुहले ( सेतौ ) अयं उत्तारयति । अस्य दृढता च शीघ्रता लघुता । अस्य आदेशतनुता च एवं यत् वपुः आदेशेन स्वामिनः धत्ते । अस्य चमत्कारिशस्त्रता च एवं यदस्य शस्त्राणि उपरि गनामइनीओस्त्रीनां शीघ्रतराणि छेदकानि । उक्तिः च अस्ति ) ॥

॥ २१ ॥ ६२. ह्रूमं च प्राह्रूमं च समीहे इजिश्नौ । सन्मानकृत्या जरथुश्त्रस्य स्पितमपुत्रस्य पुण्यात्मकवृद्धेः उक्तनाम्नः इअज्दस्य ( किल नाम अनया दीन्या उक्तमास्ते ) ॥ ६३. समिधं समीहे इजिश्नौ गंधं च सन्मानकृत्या तव अग्ने स्वामिनः महाज्ञानिनः पुत्र उक्तनाम्नः इअज्दस्य । ( किल नाम अनया दीन्या उक्तं आस्ते ) ॥ ६४. ( क्ष्णूमणीः[19] वारद्वयं वाच्यम् ) ॥

॥ २२ ॥ ६५. समीहे इजिश्नौ मुक्तात्मनां वृद्धीनां बलिष्ठानां अधिकशक्तीनां पूर्वन्यायवतां वृद्धीनां नवान्वयनिकटानां च वृद्धीनाम् ॥

॥ २३ ॥ ६६. समीहे इजिश्नौ सर्वेषां पुण्यगुरूणाम् । ६७. समीहे इजिश्नौ । सर्वेषां उत्तमदानानां इअज्दानां परलोकचारिणां पृथिवीचारिणां च[1] । ये संति आराधनीयाश्च नमस्करणीयाश्च पुण्यात् उत्कृष्टतरात्[2] ॥

॥ २४ ॥ ६८-७०. प्रब्रवीमि माज्दइअस्नीम् । ( यावत् )[1] ( यथा उपरि उक्तम् ) ॥

[ जोतिः ] यथा स्वामिनः कामः ( यथा अहुरमज्दाभिलाषः ) हे ज्योते प्रकृष्टं मे ब्रूहि ( कार्यं पुण्यं च ) । ( राथ्विः[20] च प्रतिवचनं ब्रूते ) । ( ज्योतिः ) । एवं आदेशः पुण्यात् यस्मात् कस्माच्चित् प्रकृष्टं पुण्यात्मन् विज्ञानं ब्रवीमि ( किल सर्वं कार्यं पुण्यं एवं आदेशः कर्तुं यथा अहुर्मज्दस्य रोचते )[3] ॥[21]

---

उत्तमानां दधति तेषां विप······[विपक्षान्] दूरे दधाति)। निर्वाणज्ञानस्यच उत्तमस्य। चक्रस्य उत्तमस्य। चक्रस्थितेश्च उत्तमायाः। श्रियो लाभस्यच मज्ददत्तस्य ॥ समीहे इजिश्नौ । उत्तमानां उत्तमस्य आशीर्वादस्य । उत्तमस्य नरस्य पुण्यात्मनः । बलिष्ठस्यच दृढस्य उत्तमस्य उत्कृष्टमनसा इअउदस्य (शापस्येत्यर्थः) (······ नां आशीर्द्विधा । एकाच मनसा एकाच वचसा । आशीश्च वचसा बलिष्ठतरा शापश्च मनसा बलिष्ठतरः । उत्तमानां आ······रात्रिषु त्रीन् वारान् समग्रेऽपि भुवने सृष्टिमति रक्ष······ति लक्ष्मींच यां सदाचारतया अर्जयंति तस्याः रक्षक ······) ॥ समीहे इजिश्नौ । ········· स्थानानांच । देशानांच । अरण्याणांच । मंदिराणांच । गवां वसतीनांच । अपांच भूमीनांच वनस्पतीनांच । अस्याश्च भूमेः । तस्यच आकाशस्य । वातस्यच पुण्यात्मनः । ताराणां चंद्रस्य सूर्यस्य । अनंतानां तेजसां स्वयंदत्तानां ( स्वयंदातिश्च इयं यत् आत्मानं आत्मीयं शक्यते कर्तुं ) । सर्वासांच स्पनामइनिओस्त्रीनां पुण्यात्मनां पुण्यगुरूणां ॥ समीहे इजिश्नौ । गुरोर्महतः यः पुण्यस्य गुरूणांच संध्यानां दिनानांच [दिनानांच संध्यानांच] मासानांच गहंबाराणांच संवत्सराणांच । ये संति पुण्यगुरुतायां ह्ाउअनगुरुतया ॥

॥ २० ॥ १. EMU$_{16}$ अर्जेहेसवहिद्वीपेन. २. मुक्तिमाने several MSS. [ to be construed as सति सप्तमी ?]. ३. EMU$_{16}$ उक्तंचास्ति.

॥ २३ ॥ १. EMU$_{16}$ पृथ्वीचराणांच. २. पुण्यानुत्कृष्टतरान् several MSS. [ do they take "ashât hacha vahishtât" as abstract for concrete ? ]

॥ २४ ॥ १. *i. e.* यावत् *Saredhaêibyô*. २ EMU$_{16}$ क्लिश्नि. ३. K$_1$ इति वरेस्मन संपूर्णकर्तुं.

## हा ४.

॥ १ ॥ १. इदं सुमतं च सूक्तं च सुकृतं च। ( कार्यं पुण्यं च यदहं विवेद सदैव च करोमि )। २. एनं ह्रुमं च भोजनदानं च प्राणं च। बरेस्मनं च पुण्येन परिग्रथितं गां च उत्तमदानाम्। उदकं च वनस्पतिं च गां च उत्तमदानाम्। ह्रुमं च प्राह्रुमं च। ( ह्रुमं प्राह्रुमीयमित्यर्थः)। समिधं च गंधं च। ३. एनां स्वामितां च पुण्यतां च ( कार्यं पुण्यं च यदहं विवेद[a] सदैव करोमि )। गुरुतांच[1] ( अदृश्यरूपिणीं हजिक्तीम् )। गुर्वनुज्ञां च। ( अदृश्यरूपिणो[1b] नस्कनिबंधान् )[2]। गाथानां च उक्तिम्[2a]। सुकृतस्य आदेशम्। ( अदृश्यरूपि कार्यं पुण्यं च )। प्रकृष्टं च ददामि। तस्य च निमंत्रयामि ॥ तेषु निमंत्रयामि ( अस्मदुक्तेषु ) ॥

॥ २ ॥ ४. स्वामिनश्च महाज्ञानिनः। श्रोशस्य च पुण्यात्मनः ( आदेशपतेः )। अमराणां च गुरूणाम्। मुक्तात्मनां च वृद्धीनाम्। मुक्तात्मनां च आत्मनाम्। अग्नेश्च होर्मिज्दस्य। गुरोश्च महतः। सर्वासां च यासां कासांचित् मुक्तात्मनां पंक्तीनाम्। आराधनाय नमस्करणाय माननाय प्रकाशनाय ॥ तेषु निमंत्रयामि ( अस्मदुक्तेषु )। [ इदं सुमतं च सूक्तं च इत्यादि ]

॥ ३ ॥ ५-६. ( यावत् [ सुकृतस्य आदेशं ]। यथा उपरि लिखितम् )। ७. प्रकृष्टं च ददामि तस्य च निमंत्रयामि ॥ तेषु च निमंत्रयामि। ( अस्मदुक्तेषु )

॥ ४ ॥ ८. अमराणां गुरूणां सुस्वामिनां सुदानिनां सदाजीवानां सदालाभानाम्[1]। ( एकं इदं यत् स्वयं न म्रियते एकं इदं यत् निहंतुं न शक्यते )। ९. ये उत्तमेन मनसा निवसंति। ( तेषां अभ्यागतिस्तस्मिन् स्थाने यत्र व्वहमनः )। ये च एवं ( संभवोऽपि[2] व्वहमनात् )[22] ॥

॥ ५ ॥ १०. तेषु निमंत्रयामि। (अस्मदुक्तेषु )। प्रभूततया अस्य गृहस्य। ( किल यावत् संख्यया प्रभूताः भवन्ति )। वृद्धिदात्या अस्य गृहस्य। ( किल यावत् अधिकं प्रवर्धन्ते )। पशूनां च नराणां च जातानां च जनिमतां[1] च[23] [ जनिष्यमानानां ] च मुक्तात्मनां च ये एते सन्ति ॥

॥ ६ ॥ ११. तेषु निमंत्रयामि। ( अस्मदुक्तेषु )। मुक्तात्मनां ( वृद्धी )[1] उत्तमानां वृद्धीनां याः बलिष्ठाश्च अधिशक्ताश्च[2] मुक्तात्मनां सहायतया ॥

॥ ७ ॥ १२. तेषु निमंत्रयामि। ( अस्मदुक्तेषु )। दातुः स्वामिनो महाज्ञानिनः शुद्धिमतः श्रीमतः। अदृश्येभ्योऽदृश्यतमस्य अमरेभ्यो गुरुतरेभ्यः ( किल अन्तर् अमराणां गुरूणां यद्यसौ अभिवांछति अंतः अदृश्यानां वपुर् अदृश्यं शक्नोति कर्तुम् )। आराधनायै नमस्करणाय माननाय प्रकाशनाय ॥

---

॥ ४ ॥

॥ १ ॥ १. EMU$_{17}$ विदे. १a. Some MSS. omit विवेद. १b. Some MSS. अदृश्यरूपिणे. २. MLHL$_1$ अदृश्यरूपिणीहजिक्तिनस्कनिबन्धान्. २a. Some MSS. उक्तां EMU$_{17}$ ग्रंथानांच उक्तं.

॥ ४ ॥ १. Corrected from लाभानां in all, except K$_7$. २. EMU$_{15}$ EMU$_{16}$ K$_7$ संभवोऽपि.

॥ ५ ॥ १. TDA$_2$ H$_2$ MFL$_1$ जननिमतांच [ जननमतांच ].

॥ ६ ॥ १. Some MSS. वृद्धिना. २. अधिकशक्याश्च or अधिसक्याश्च or अधिकशक्याश्च in different MSS.

॥ ७ ॥ १. Several MSS. अंतश्च or अंतःश्च [ अंतश्च ]. २. आ० न० मा० प्र० some MSS. by way of abbreviation.

॥ ८ ॥ १३. तेषु निमंत्रयामि । ( अस्मदुक्तेषु ) । अहां पुण्यगुरूणाम् । हाऊअननाख्याः ( प्रातःसंध्यायाः ) पुण्यात्मकायाः पुण्यगुर्व्याः । आराधनाय नमस्करणाय माननाय प्रकाशनाय । १४-१५.

॥ ९-२२ ॥ १६-४९. ( यथा "आईएसे" [ समीहे इजिश्नौ ] लिखितं अत्रस्थाने "आअ-द्दीश" [ तेषु निमन्त्रयामि इत्यादि ] उच्चारणीयं यावत् । आराधनाय नमस्करणाय माननाय प्रकाशनाय इति सर्वत्र ज्ञेयम् )[1] ॥

॥ २३ ॥ ५०. तेषु निमंत्रयामि । (अस्मदुक्तेषु) । ओशस्य पुण्यात्मकस्य ( भक्तिशीलस्य ) दृढस्य[1] तनोः आदेशपतेः । चमत्कारस्य शस्त्रस्य स्वामिनः[2] । ( यत् स्वामी अर्जहीद्वीपस्य सवहीद्वीपस्य च )[3] । सन्मानकृत्या । ( किल आनंदकृत्या ) । आराधनाय नमस्करणाय माननाय प्रकाशनाय ॥ ५१. तेषु निमंत्रयामि । ( अस्मदुक्तेषु ) । जरथुश्त्रस्य अस्पितम-पुत्रस्य[23a] पुण्यात्मकवृद्धेः । सन्मानकृत्या । (किल आनंदकृत्या) । आराधनाय नमस्करणाय माननाय प्रकाशनाय । ५२. तेषु निमंत्रयामि । ( अस्मदुक्तेषु ) । तव अग्ने पुत्र स्वामिनो महाज्ञानिनः । ( यावत् उपरि लिखितम् ) ॥

॥ २४ ॥ ५३. तेषु निमंत्रयामि । ( अस्मदुक्तेषु ) । मुक्तात्मनां वृद्धीनां बलिष्ठानां अधि-कशक्तीनां पूर्वन्यायवतां च वृद्धीनां नवन्यायनिकटानां च वृद्धीनाम् । आराधनाय नमस्करणाय माननाय प्रकाशनाय ॥

॥ २५ ॥ ५४. तेषु निमंत्रयामि । ( अस्मदुक्तेषु ) । सर्वेषां पुण्यगुरूणाम् । आराधनाय नमस्करणाय माननाय प्रकाशनाय ॥ ५५. तेषु निमंत्रयामि । ( अस्मदुक्तेषु ) । सर्वेषां उत्तमदानानां इअज्दानां परलोकचारिणां पृथिवीचारिणां च । ये संति आराधनीयाश्च नमस्करणीयाश्च पुण्यात् उत्कृष्टतरात् ॥

५६. अमरान्[24] गुरून् सुराजानः[1] सुदानिनः आराधये ॥

ये वर्तमानेभ्यः एवं इजिश्निया उपरि उत्तमे[2] महाज्ञानिनः स्वामिनः । (किल इजिश्नीः होर्मिज्दस्यार्थे प्रचुराः कुर्वन्ति ) । वेत्तरि पुण्यात् ( यत् किंचित् पुण्यप्रसाददानं हो-र्मिज्दः वेत्ति )। समवायिकान्[3] तान् ताश्च आराधये । ( नरहयाकृतीन् अमिषास्पिंतान् )॥[4]

---

॥ १९-२२ ॥ १. EMU$_{15}$ H$_2$ K$_7$ TDA$_2$ J. J. M$_2$, यथा "आईएसेईअस्त " [ समीहे इजिश्नौ ] स्थाने लिखितं अत्रस्थाने " आअद " [ तेषु निमन्त्रयामि ] उच्चारणीयं यावत्.

॥ २३ ॥ १. H$_2$ K$_7$ MLHL$_2$ TDA$_2$ EMV$_{16}$ MFL बलिष्ठस्य. २ H$_2$ K$_7$ TDA$_2$ EMV$_{76}$ चमत्कारिशस्त्रस्य राज्ञः ३. EMU$_{16}$ अर्जहिसवहिद्वीपेन.

॥ २५ ॥ १. K$_7$ JJM सुराजान्. २. EMV$_{15}$ K$_7$ उत्तमा. ३. Corrected from समवायकान् in all. ४. K$_7$ इति इमहुमताच संपूर्णकर्तुं.

## हा ५.

॥ १ ॥ १. अत्र एवं आराधये स्वामिनं महाज्ञानिनम्। यो गां च पुण्यं च ददौ। अपश्च ददौ वनस्पतींश्च उत्तमान्। २. रार्चि [रोचिः] ददौ भूमिं च समग्रां च समृद्धिम्। ( मूलफलादिकम् ) ॥

॥ २ ॥ ३. एवं यो राज्याय च महत्तायै च सुरक्षायै[1] च। तं एवं आराधकेभ्यो ( मनुष्येभ्यः ) पुरःप्रवृत्त्या आराधये। ( किल अग्रतया अपरेभ्यः केभ्यश्चित् )। ५. ये गोपशुमत्तया सुनिवसंति। ( ये आराधकाः ) ॥

॥ ३ ॥ ६. तं एवं स्वामिनामानं[1] महाज्ञानतया मिश्रितमास्ते गुरुतया च आराधये। ७. तं एवं अस्माकं देहाय च जीवाय च आराधये। (किल जीवनिर्यस्मात्)।८. तं यं मुक्तात्मनां च वृद्धये नराणां नारीणां च आराधये। ( किल शुभं यस्मात् ) ॥ ९. पुण्यं च एवं उत्कृष्टतरं आराधये ॥

॥ ४ ॥ १०. यत् सुंदरं यच्च गुरुतरं अमरम्। ११. यत् रुचिमत् ( वपुरस्य )। यत् समग्रा समृद्धिः। ( शुभं यस्मात् ) ॥

॥ ५ ॥ १२. उत्तमं च मनः आराधये ( ग्वह्मनं )। उत्तमं च राज्यम्। ( किल सहरेवरम् )। १३. उत्तमं च दीनिम्। ( अशवहिस्तम् )। उत्तमं च अधिपतित्वम्। ( अविदांदं अमिरदादं च )। उत्तमां च संपूर्णमानसताम्। ( स्पिंदारमद[म्] ) ॥

[ ये वर्तमानेभ्यः इत्यादि यावत् तान् तांश्च आराधये ] ( पूर्वोक्तवत् ज्ञेयम् ) ॥[1]

---

## हा ६.

॥ १ ॥ १. दातारं स्वामिनं महाज्ञानिनं आराधये. २. अमरान् गुरून् सुस्वामिनः सुदानिनः आराधये ॥

॥ २ ॥ ३. दिवसान् पुण्यात्मनः पुण्यगुरून् आराधये। ४. हाऊअननाम्नीं ( प्रातःसंध्यां ) पुण्यात्मनीं पुण्यगुर्वीं आराधये ५. साऊअंघनाम्नीं। ( या समं हाऊअनसंध्यायाः समकार्यिणी या च यूथानि गवां प्रवर्धयति )। वीसिनाम्नीं च। ( या मनुष्येषु मध्ये सत्कार्यिणी मोइबदेषु )। पुण्यात्मनीं पुण्यगुर्वीं आराधये। ६. मिहिरं निवासितारण्यं सहस्रकर्णं दशसहस्रलोचनं उक्तनामानं इअज़्दं आराधये। ( किल नाम अनया दीन्या उक्तं आस्ते )। ७. आनंदं आस्वादं च आराधये। ( स अदृश्यरूपी यस्य प्रभावेण मनुष्याः स्वाद्यस्य स्वादं जानंति ) ॥

---

॥ ५ ॥

॥ १ ॥ १. $MLHL_1$ अतः.

॥ २ ॥ १. $EMU_{15}$ $EMU_{16}$ $MLHL_1$ सरक्षायैच.

॥ ३ ॥ १. $EMU_{15}$ स्वामिनं नामांकितं, MFL °नामतया; २. $MLHL_1$ महाज्ञानितया.

॥ ५ ॥ १. $K_7$ इति पंचमं हाय संपूर्णकर्तुं ॥

॥ ३ ॥ ८. रपिथ्विन ( संध्या ) नाम्नीं मध्याह्नः संध्यां पुण्यात्मनीं पुण्यगुर्वीं आराधये। ९. फ्रेहदादारफ्सुनाम्नीं। ( या समं रपिथ्विनसंध्यायाः समकार्यिणी या च यूथानि पशूनां प्रवर्धयति )। जंदनाम्नीं च पुण्यात्मनीं पुण्यगुर्वीं आराधये। या मनुष्येषु गुरुषु मध्ये सत्कार्यिणी )। १०. पुण्यं उत्कृष्टतरं अग्निं च स्वामिनो महाज्ञानिनः पुत्रं आराधये ॥

॥ ४ ॥ ११. उजईर्पइरिननाम्नीं ( अपराह्णः संध्यां ) पुण्यात्मनीं पुण्यगुर्वीं आराधये। १२. फ्रेहदादारवीरनाम्नीं च। (या समं उजईर्पइरिनसंध्यायाः समकार्यिणी या च यूथानि नराणां प्रवर्धयति )। देहेनाम्नीं च पुण्यात्मनीं पुण्यगुर्वीं आराधये। ( या मनुष्येषु मध्ये सत्कार्यिणी परलोकिनां भलापनापतिषु[1] )। १३. बुर्जस्वामिनं नारीणां तेजस्विनं अपां नाभिं प्रधानाश्वं आराधये। १४. अपश्च मज्दद्त्ताः पुण्यात्मनीः आराधये ॥

॥ ५ ॥ १५. अइविश्रुथ्रिम–अइबिगईअच–नाम्नीं ( पूर्वार्धरात्रसंध्यां ) पुण्यात्मनीं पुण्यगुर्वीं आराधये। १६. फ्रेहदादारहरविस्पहुजिवश्रीनाम्नीं च। ( या समं अइविश्रुथ्रिमसंध्यया समकार्यिणी याच मूलं फलं सर्वं प्रवर्धयति )। जरथुश्त्रोतेमनाम्नीं च पुण्यात्मनीं पुण्यगुर्वीं आराधये। ( या मनुष्येषु मध्ये सत्कार्यिणी मोइबदानां मोइबदेषु आचार्याणां आचार्येषु )। १७. मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धीः आराधये। नारीणां च नरसंघानां [ नारीश्च नरसंघाश्च ]। संवत्सराणां सुनिवासितां[1] आराधये। उत्साहिनं सुघटितं शुभोदितं आराधये। विजयं होर्मिज्दद्त्तं च आराधये। टालनां च या उपरिप्रवृत्त्या आराधये। ( बहरामइअजदं। क्वचिच्च टालनां या उपरिप्रवृत्त्या आस्तादइअजदस्य ब्रुवंति तथाचोक्तम्[2] ) ॥

॥ ६ ॥ १८. उशाहिननाम्नीं ( अपरार्धरात्रसंध्यां ) पुण्यात्मनीं पुण्यगुर्वीं आराधये। । १९. बेरेजनाम्नीं च। ( या समं उशाहिनसंध्यायाः समकार्यिणी। याच संचयान् धान्यानां प्रवर्धयति। याच मनुष्येषु मध्ये सत्कार्यिणी ये नगरन्यायानां अधिष्ठातारः )। माननाम्नीं च पुण्यात्मनीं पुण्यगुर्वीं आराधये। ( या मनुष्येषु गृहांतर्वर्तिषु मध्ये सत्कार्यिणी )। २०. श्रोशं भक्तिशीलं शुभोदितं[1] विजयिनं वृद्धिदं पृथिवीविभूतेः पुण्यात्मानं पुण्यगुरुं आराधये। ( आदेशपतिम् )। २१. रश्नं शुद्धं आराधये। ( सत्यपतिं। अस्य रश्न इति नामता शुद्धता च सत्यता च )। २२. आस्तादं च वृद्धिदं पृथिवीविभूतेः पुष्टिदं पृथिवीविभूतेः आराधये ॥

॥ ७ ॥ २३. मासान् पुण्यात्मनः पुण्यगुरून् आराधये। २४. अंतराचंद्रं पुण्यात्मकं पुण्यगुरुं आराधये। ( पंचकस्य यः आद्यस्य उत्तमस्य )। २५. संपूर्णचंद्रं विशप्तथिं च पुण्यात्मकं पुण्यगुरुं आराधये। ( पंचकस्य यः द्वितीयस्य पंचकस्य यः तृतीयस्य ) ॥

---

॥ ६ ॥

॥ ४ ॥ १. JJM$_2$ EMU$_{15}$ प्रलोकिनं भिलापनापतिषु (?)

॥ ५ ॥ १. K$_7$ सुनिवसतिं. २. Some MSS. give the quotation in the Avesta language as " Yâmcha arshtoish Yazatahê. "

॥ ६ ॥ १. H$_2$ शुभोदितं.

॥ ८ ॥ २६. गहंबारान् पुण्यात्मनः पुण्यगुरून्। ( गहंबारान् इति समयसमुच्चयान् सृष्टीनां सृजनकालान् ) । २७. मइदिओइजरमनामानं[1] पुण्यात्मकं पुण्यगुरुं आराधये । ( आकाशस्य घटनकालम् )[2] । २८. मइदिओशमनामानं[1a] पुण्यात्मकं पुण्यगुरुं आराधये । ( जलानां सृजनकालम् ) । २९. पइतिशहहेमनामानं पुण्यात्मकं पुण्यगुरुं आराधये । ( पृथ्व्याः सृजनकालम् ) । ३०. अइआथ्रिमनामानं ( वनस्पतीनां सृजनकालं ) अधःपरिवर्तितउष्णकालागामिनम्[3] । वीर्यनिक्षेपणम्[4] । ( किल अश्वादिपशूनां वीर्यनिक्षेपस्तन्मध्ये[5] भवति ) । पुण्यात्मकं पुण्यगुरुं आराधये । ३१. मइदिआइरिमनामानं पुण्यात्मकं पुण्यगुरुं आराधये । ( पशूनां पंचप्रकाराणां सृजनकालम् ) । ३२. हमस्पथ्मपद्ध्मनामानं पुण्यात्मकं पुण्यगुरुं आराधये । ( मनुष्याणां दशजातीनां सर्वासांच सृष्टीनां सृजनकालं हमस्पथ्मपद्ध्मता सर्वसैन्यदातिः ) ॥ ३३. संवत्सरान् पुण्यात्मनः पुण्यगुरून् आराधये ॥

॥ ९ ॥३४. समग्रान् पुण्यगुरून् आराधये । ३५. ये सन्ति पुण्यगुरवः त्रयश्च त्रिंशच्च निकटाः परिवर्तुलं हाऊअनसंख्यायाः । ये संति पुण्यस्य यत् उत्कृष्टतरं होर्मिज्देन शिक्षापिताः ( जरथुश्त्राय ) जरथुश्त्रेण च प्रोक्ताः ( अंतरस्मिन् जगति[1] ) ॥

॥ १० ॥ ३६. स्वामिनं मिहिरं महत्तरं अनश्वरं पुण्यात्मानं आराधये । ताराश्च चंद्रं च सूर्यं च । वनस्पतीये उपरि बरेसने[1] मिहिरं सर्वेषां ग्रामाणां राजानं आराधये ॥ ३७. ( दिनाधिपतिं आराधये ) । ३८. ( मासाधिपतिं आराधये ) ॥

॥ ११ ॥ ३९. त्वां अग्निं स्वामिनो महाज्ञानिनः पुत्रं पुण्यात्मानं पुण्यगुरुं आराधये । समं समग्रैः अग्निभिः । ४०. अपः उत्तमाः उत्कृष्टतराः मज्ददत्ताः पुण्यात्मनीः आराधये । ( या अन्तर्वनस्पतिषु ) । समग्राः अपः मज्ददत्ताः पुण्यात्मनीः आराधये समग्रान् वनस्पतीन् मज्ददत्तान् पुण्यात्मनः आराधये ॥

॥ १२ ॥४१. मांथ्रीवाणीं गुर्वीं प्रभूतश्रीकां आराधये । ४२. न्यायं विभिन्नदेवं आराधये । ४३. न्यायं जरथुश्त्रीयं आराधये । ( निर्मलतरम् ) । ४४. दीर्घां उपरिप्रवृत्तिं आराधये । ( अदृश्यरूपिणीं शिक्षाम् ) । दीनिं उत्तमां माज्दइअस्नीं आराधये । ( एकहेलया एव ) ॥

॥ १३ ॥ ४५. गिरिं होशदास्तारं मज्ददत्तं पुण्यशुभं [ पुण्यसुखं ] इअजदं आराधये । ( स गिरिर्यश्चैतन्यं मनुष्याणां स्थाने दधाति रक्षति च ) । समग्रान् गिरीन् पुण्यशुभान् संपूर्णशुभान् [ पुण्यसुखान् संपूर्णसुखान् ] मज्ददत्तान् पुण्यात्मनः पुण्यगुरून् आराधये । ४६. बलिष्ठां राज्ञां श्रियं मज्ददत्तां[1] आराधये । बलिष्ठां अगृहीतां श्रियं मज्ददत्तां आराधये । ४७. अर्दीशवंघनाम्नीं ( लक्ष्मीं ) आराधये । तेजस्विनीं महतीं उत्साहिनीं शुभोदितां पालकां । श्रियं मज्ददत्तां आराधये । लाभं मज्ददत्तं आराधये ॥

---

॥ ८ ॥१. $EMU_{15}$ मइदिओशेमेन् अशउनेइशेमनामानं १a. Some MSS. पृथ्वीनां. २. $EMU_{16}$ घटनकालं. ३ $TDA_2$, $EMU_{16}$, $JJM_2$, $K_7$, °कालागमिनं. $EMU_{17}$ °उष्णकालंगमिनं. ४. $EMU_{16}$ वीर्यनिषेपनं. ५ $EMU_{16}$ वीर्यनिषेपनंस्तन्मध्ये.

॥ ९ ॥ १. Some MSS. omit the two comments in this para.

॥ १० ॥ १. $TDA_2$ $H_2$ वनस्पतीनांयेउपरिबरिस्मने Sp. वनस्पतीन् ये उपरि बरेस्मने $MLHL_1$ $K_7$ $EMU_{17}$ वनस्पतीयेउपरिबरेस्मनेन.

॥ १२ ॥ Sp. मांथ्रीं वाणीं.

॥ १३ ॥ १. $TDA_2$ महाज्ञानिनः दत्तां.

॥ १४ ॥ ४८. उत्तमानां उत्तमां आशिषं आराधये । उत्तमं च नरं पुण्यात्मानं आराधये । बलिष्ठं इढं उत्तमं च उत्कृष्टमनसा इअजदं आराधये । ( शापमित्यर्थः ) ( आशीश्च वचसा बलिष्ठतरा शापश्च मनसा बलिष्ठतरः ) ॥

॥ १५ ॥ ४९. एताः अपश्च भुवश्च¹ वनस्पतींश्च आराधये । इमानि स्थानानि देशांश्च अरण्यानि च मंदिराणि च गोनिवासांश्च आराधये । एनं च देशपतिं आराधये यं स्वामिनं महाज्ञानिनम् । ( होर्मिज्दं च पितरं समग्रायाः पृथिव्याः ) ॥

॥ १६ ॥ गुरून् सर्वान् महत्तरान् आराधये संध्याः दिनान् [ दिनान् संध्याः ] मासान्[24a] गहंबारान् संवत्सरान् ॥

॥ १७ ॥ ५१. उदकं वनस्पतिं आराधये । गां च उत्तमदानां आराधये । श्रोशं भक्तिशीलं शुभोदितं विजयिनं वृद्धिदं पृथिवीविभूतेः पुण्यात्मानं पुण्यगुरुं आराधये । ( आदेशपतिम् ) ॥

॥ १८ ॥ ५२. हूमंच प्राहूमंचं¹ आराधये । जरथुश्त्रस्य स्पितमपुत्रस्य इह पुण्यात्मनः पुण्यं च वृद्धिं आराधये । ५३. समिधं च गंधं च आराधये । त्वां अग्निं स्वामिनो महाज्ञानिनः पुत्रं पुण्यात्मकं पुण्यगुरुं आराधये ॥

॥ १९ ॥ ५४. मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धीः आराधये ॥

॥ २० ॥ ५५. समग्रान् पुण्यात्मनः इअजदान् आराधये । समग्रान् पुण्यगुरून् आराधये । ५६. हाऊअनसंध्यायाः प्रकृष्टं गुरुतया । साऊअंघसंध्यायाः वीसिनाम्न्याश्च प्रकृष्टं गुरुतया । गुरूणां सर्वेषां महत्तराणां प्रकृष्टं गुरुतया । [ ये वर्तमानेभ्यः इत्यादि ] पूर्वोक्तवत् ॥

---

## हा ७.

॥ १ ॥ १. पुण्येन ददामि खाद्यं भोजनदानं च । उदकं वनस्पतिं गां च उत्तमदानाम् । सन्मानकृत्या ( किल पूजाकरणेन ) । स्वामिनो महाज्ञानिनः अमराणां गुरूणाम् । सन्मानकृत्या श्रोशस्य पुण्यात्मकस्य भक्तिशीलस्य विजयिनः वृद्धिदस्य भूसंभूतेः ॥

॥ २ ॥ २. पुण्येन ददामि हूमं च प्राहूमं च । ( हूमं प्राहूमीयमित्यर्थः ) । सन्मानकृत्या जरथुश्त्रस्य स्पितमपुत्रस्य पुण्यात्मकवृद्धेः ॥ ३. पुण्येन ददामि समिधं च गंधं च । सन्मानकृत्या तव अग्ने स्वामिनो महाज्ञानिनः पुत्र ॥

॥ ३ ॥ ४. पुण्येन ददामि हूमम् । सन्मानकृत्या उदकस्य उत्तमस्य ( तत् यत् नामांकितं अंतर्वनस्पतेः ) । अपां उत्तमानां मज्ददत्तानां । ( एकहेलयैव ) ॥ ५. पुण्येन ददामि अपः हूमीयाः¹ । पुण्येन ददामि गां बवराम् । ६. पुण्येन ददामि गां जीवाम् । ७. पुण्येन ददामि वनस्पतिं हिनवानामानं पुण्येन उच्चैः दत्तम् । ( किल सदाचारतया समार्चितम् ) । सन्मानकृत्या अपां मज्ददत्तानाम् ॥

---

॥ १५ ॥ १. Corrected from भुवनःच in all, except $EMU_{16}$.

॥ १८ ॥ १. $TDA_2$ पराहूमं.

॥ ७ ॥

॥ ३ ॥ १. $TDA_2$, $MLHL_1$, $K_7$, $EMU_{17}$, अपःहूमीयां.

॥ ४ ॥ ८. पुण्येन ददामि एनं च बरेस्मनं समं प्राणेन समं अहविसंधनेन पुण्येन परिप्रथितम्। सन्मानकृत्या अमराणां गुरूणाम् ॥ ९. पुण्येन ददामि वाचः सुमताः सूक्ताः सुकृताः। १०. पुण्येन ददामि गाथानां च उक्तिम्। ११. पुण्येन ददामि सुकृतस्य आदेशम् ( अदृश्यरूपि कार्यं पुण्यं च )। १२. पुण्येन ददामि एनां स्वामितां च पुण्यतां च। ( कार्यं पुण्यं च यदहं विवेद सदैव करोमि )। गुरुतां च। ( अदृश्यरूपिणीं इजिश्नीम् )। गुर्वनुज्ञां च। ( अदृश्यरूपिणो नस्कनिबंधान्[1] )। सन्मानकृत्या इअजदानां ( पुण्यात्मनां ) परलोकचारिणां पृथिवीचारिणाम्। सन्मानकृत्या स्वीयस्य च आत्मनः ॥

॥ ५ १९ ॥ १३–५१. ( पुण्येन ददामि वाचः सुमताः सूक्ताः सुकृताश्च यावत् सन्मानकृत्या इति सर्वत्र ज्ञेयम् ) ॥ अह्नां पुण्यगुरूणाम् ( तत् यत् संध्याया अंतः संध्यायां शक्यते गंतुं प्रभावेण अस्य ) ( [हाऊअनसंध्यायाः इत्यादि] यथा उपरि [समीहे इजिश्नौ इत्यादि] लिखितं अत्रस्थाने [पुण्येन इत्यादि] परिज्ञेयं यावत् [हाऊअनगुरुतायाः उपरि] ) ॥

॥ २० ॥ ५२. पुण्येन ददामि खाद्यं भोजनदानं च। उदकं वनस्पतिं गां च उत्तमदानाम्। सन्मानकृत्या श्रोशस्य पुण्यात्मकस्य भक्तिशीलस्य दृढस्य तनोः आदेशपतेः चमत्कारस्य शस्त्रस्य[1] स्वामिनः। ( यत् स्वामी अर्जेहीद्वीपस्य सवहीद्वीपस्य[2] च )। उक्तनाम्नः इअजदस्य। ( किल नाम अनया दीन्या उक्तं आस्ते ) ॥

॥ २१ ॥ ५३. पुण्येन च ददामि हूमं च प्राहूमं च। सन्मानकृत्या जरथुश्त्रस्य स्पितमपुत्रस्य पुण्यात्मक[स्य] वृद्धेः[1]। उक्तनाम्नः इअजदस्य। ( किल नाम अनया दीन्या उक्तं आस्ते ) ॥ ५४. पुण्येन ददामि समिधं च गंधं च। सन्मानकृत्या तव अग्ने स्वामिनो महाज्ञानिनः पुत्र। उक्तनाम्नः इअजदस्य। ( किल नाम अनया दीन्या उक्तं आस्ते ) ॥ ( क्ष्नुमिनि वारद्वयं वाच्यम्[2] ) ॥

॥ २२ ॥ ५५. पुण्येन ददामि मुक्तात्मनां वृद्धीनां बलिष्ठानां अधिकशक्तीनां पूर्वन्यायवतां वृद्धीनां नवान्वयनिकटानां वृद्धीनाम् ॥

॥ २३ ॥ ५६. पुण्येन ददामि सर्वेषां पुण्यगुरूणाम् ॥ ५७. पुण्येन ददामि सर्वेषां उत्तमदानानां इअजदानां परलोकचारिणां पृथिवीचारिणां च। ये संति आराधनीयाश्च नमस्करणीयाश्च पुण्यात् उत्कृष्टतरात् ॥

॥ २४ ॥ ५८. पुण्येन अस्मासु[1] उपरि संप्राप्नुवन्तु। ( सद्व्यापारेण )। अस्य लाभं समीहे दक्षिणादानेन। ( अस्य इति होर्मिज्दस्य यदस्मिन् वपुः उपरि दक्षिणायामि )। ५९. तव श्लाघाकृतौ मांथ्रवाण्यां च[1a] अहुरमज्द। ६०. उपरि संप्राप्नुमः संतुष्यामश्च प्रतिकुर्महे च। ( किल प्रतिकुर्महे संतुष्टाश्च समाचरामः )। ६१ यं प्रसादं उत्तमानां प्रकृष्टं देहि[1b] दीनिशीलानां अहुर्मिज्द। ( किल यं प्रसादं उत्तमानां दीनिशीलानां दातुं योग्यं तं मह्यं शिष्याय[2] देहि ) ॥

---

॥ ४ ॥ १. Several MSS. अदृश्यरूपिणीनस्कनिबन्धान्.

॥ २० ॥ १. MLHL$_1$, TDA$_2$ K$_7$ H$_2$ EMU$_{16}$ चमत्कारिशस्त्रस्य. २. MLHL$_1$ TDA$_2$ K$_7$ H$_2$ EMU$_{16}$ MFL अर्जेहिसवहिद्वीपेन. [°द्वीपद्वयेन?]

॥ २१ ॥ १. TDA$_2$ H$_2$ MFL पुण्यात्मनः वृद्धेः २. EMU$_{16}$ क्ष्नूमनि वारद्वयं वाच्या.

॥ २४ ॥ १. K$_7$ EMU$_{17}$ अस्न्यासु (?). १a. MLHL$_1$ TDA$_2$ K$_7$ JJM$_2$ H$_2$ EMU$_{17}$ मांथ्रवाण्याच. १b Most MSS. omit देहि here through oversight. २. EMU$_{16}$ शिष्यायां (?) [शिष्यानां] MLHL$_1$ शिक्ष्यायां K$_7$ शिष्याया H$_2$ शिश्या [य] च.

॥ २५ ॥ ६२. अमीषां तत् अस्मभ्यं देहि अनेन भुवनेन परलोकेनापि । ६३. तादृशेन तेन उपरि संप्राप्नुमः । ६४ तव स्वामितायां श्रेयसि च सदैव यावत् सर्वम् ॥ [अहुनवर २].

॥ २६ ॥ ६५. अहुनवरं आराधये ॥ सत्योक्तां वाचं[1] आराधये ॥ ६६. उत्तमानां उत्तमां आशिषं आराधये ॥ बलिष्ठं दृढं उत्तमं च उत्कृष्टमनसा आराधये ॥ ६७. अग्निरदादं अग्निरदादं आराधये ॥ गां च उत्तमदानां आराधये ॥ ६८. हूमं च प्राहूमं च आराधये ॥ समिधं च गंधं च आराधये ॥ ६९. प्रसिद्ध्यां[2] उत्तमानां उत्तमस्य आशीर्वादस्य । ( [ ये वर्तमानेभ्यः इत्यादि ] पूर्वोक्तवत् यावत् [ तांश्च आराधये ] ) ॥

---

## हा ८.

॥ १ ॥ १. [ अशेम् वोहू ३ ] पुण्येन ददामि खाद्यं भोजनदानं च । उदकं च वनस्पतिं गां च उत्तमदानाम् । हूमं च प्राहूमं च समिधं च गंधं च । प्रसिद्ध्यां[1] स्वामिनो महाज्ञानिनः । अहूनवरस्य च । सत्योक्तायाश्च वाचः । २. उत्तमानां उत्तमस्य आशीर्वादस्य । बलिष्ठस्य च उत्तमस्य उत्कृष्टमनसा ईअजदस्य । ३. हूमस्य च । मांथ्रवाण्याश्च । पुण्यात्मनश्च जरथुश्त्रस्य ॥

पुण्येन अस्मासु उपरि संप्राप्नुवन्तु ॥

॥ २ ॥ ४. ( राथ्विः फ्रबेरेतारस्य स्थाने ब्रूते ) "खादतु नरः सप्रसादं [ एनं प्रसादं ] यस्तस्य अनुरूपः । पुण्येन आदेशेन च" । ( किल कार्यस्य पुण्यस्य स्वाधीनो भवति । यत् किंचित् ददन्ति [ ददाति ] तस्य च स्वाधीनः भवति ) ॥

॥ ३ ॥ ५. [ जोतिः ब्रूते ] हे अमराः गुरुतराः (अमिशार्स्पिताः) । हे दीने माज्दइअस्नि । हे उत्तमाः हे उत्तमिन्यः[26] हे प्राण[1] । ( किल हे उत्तमाः नराः हे उत्तमिन्यः नार्यः प्राणश्च स उत्तमः परलोकिनो भवद्भ्यः ) ॥ ६. यः एतेषु मज्दईअस्नेषु माज्दईअस्नी ब्रूते पुण्यसमृद्ध्यां[2] जीवेत् । ( किल समृद्धिं दानं च उत्तमानां भक्षेत् ) ॥ ७. हे राक्षसतया पृथिव्याः पुण्यानि विनाशकाः । ( किल हे राक्षसाः नराः ) । ८. उपरि युष्मासु ताः आरोहन्तु । ( किल चिह्नं यथार्थं[3] ताः प्रकटं कुर्वन्तु ) । याः अपश्च वनस्पतयश्च प्राणश्च ॥

॥ ४ ॥ ९. यश्च एतेभ्यो मज्दईअस्नेभ्यः संपूर्णनरेभ्यः प्रकृष्टं वक्तृभ्यः[1] इदं वचो न प्रतिकरोति प्रकृष्टया गिरा । ( किल "अमेशेस्पेन्ते" इति न ब्रूते ) । तं सा राक्षसी प्राप्नुयात् । ( किल अस्य चिह्नं यथार्थतया[2] [ यथार्थं तया ] प्रकटं भवेत् ) ॥

( अशेम् वोहू ३ व्यक्ताक्षरं उक्त्वा वाश्नी[3] शीघ्रतरं[4] कर्तव्या । यदि च ग्वाजं ब्रूते "अशेम् वोहू ४ व्यक्ताक्षरं वक्तव्या ) ॥

---

॥ २६ ॥ १. EMU$_7$ MLHL$_1$ JJM$_2$ सत्योक्तं वाच्यम् TDA$_2$ K$_7$ H$_2$ सत्योक्तं वाचां. २. All प्रसिद्धा, except EMU$_{16}$.

॥ ८ ॥

॥ १ ॥ १. प्रसिद्धा all, except EMU$_{16}$.

॥ ३ ॥ EMU$_{16}$ हे प्राणा K$_7$ हे प्राणे. २ H$_2$ EMU$_{17}$ TDA$_2$ K$_7$ पुण्यसमृद्धो. ३ EMU$_{15}$, K$_7$ यथार्थताः H$_2$ TDA$_2$ MLHL$_1$ यथार्थताः JJM$_2$ यथासर्वताः ( EMU$_{16}$ यथा र्थताः) Sp. यथार्थताः [ यथार्थं ताः ? ]

॥ ४ ॥ १. EMU$_{16}$ K$_7$ H$_2$ JJM$_2$ EMU$_{17}$ प्रकृष्टवक्तस्य. २ EMU$_{16}$ K$_7$ यथार्थतया [ यथार्थं तया ?] H$_2$ यथार्थतया JJM$_2$ यथासर्वतथा EMU$_{15}$ यथार्थं तया. ३ Some MSS. वाशिनि or वाशिनि. ४. Most MSS. शीर्घतरं.

॥ ५ ॥ १०. [ अहुनवर २ ] स्वेच्छया त्वं अहुरमज्द शुभेन च स्वामित्वयं स्वीयाः सृष्टीः । ( किल स्वीयानां सृष्टीनां स्वेच्छया शुभेन च स्वामित्वं कुरु ) । ११. स्वेच्छया अपः स्वेच्छया वनस्पतीन् स्वेच्छया समग्रा विभूतीः पुण्यात् प्रकटाः । १२. पार्थिवत्वं मुक्तात्मनां देहि अपार्थिवत्वं दुर्गतिमताम् ॥

॥ ६ ॥ १३. कामराजानः भवंतु पुण्यात्मानः अकामराजानो भवन्तु दुर्गतिमंतः । १४. प्राप्तो मृत्युः अपव्रजतु स्पनामइनीओसृष्टिभ्यः विपर्ययता च अकामराज्यं च ॥

॥ ७ ॥ १५. उत्तिष्ठामि[27] [ उत्थापयामि ? ] अहंचित् यो जरथुश्त्रः प्रकृष्टतमेभ्यो[28] गृहेभ्यश्च वीसेभ्यश्च जंदेभ्यश्च ग्रामेभ्यश्च । १६. अस्यां दीनौ उत्कृष्टेन मनसा उत्कृष्टेन वचसा उत्कृष्टेन कर्मणा या अहुर्मज्दीया जरथुश्त्रिया ॥

॥ ८ ॥ रूढत्वं च[29] शुभं च आशीर्वादयामि समग्रायै मुक्तात्मनां पंक्तये । ( किल यावदमीषां रूढत्वं शुभं च भवेत् ) । १८. नास्तिक्यं[29a] च अशुभं च आशीर्वादयामि समग्रायै दुर्गतिमतां पंक्तये । ( किल यावदमीषां नास्तिक्यं अशुभं च भवेत् ) । ( इति हेतोः ब्रूते यतः [चत्] शापश्च यः एतेषु दुर्गतिमत्सु आशीर्वादेन मुक्तात्मनां कार्ये प्रयाति ) ॥

---

## हा ९.

### ॥ हूमस्तूमस्य मूलम्[30] ॥

॥ ० ॥ हूमस्य मुक्तिजननेः सन्मानकृतये । ( किल आनन्दकृतये ) । आराधनाय नमस्करणाय माननाय प्रकाशनाय । ( [ यथा स्वामिनः कामः इत्यादि ] यावत् पूर्वोक्तवत् ज्ञातव्यम् ) ॥

॥ १ ॥ १. हाऊअनायाः गुरुतायाम् । ( किल हाऊअनसंध्यायाम् ) । हूमः उपेयिवान् जरथुश्त्रम् । ( प्राप्तवान् ) । २. अग्निं परितः पावयन्तम्[31] । ( किल अग्निस्थानं परिवर्तुलं स्नापितुं अभीप्सन्तम् ) । गाथाश्च समुद्गिरंतम् । ( तत् अशिम्वोहूत्रयं ब्रुवाणं यत् "फ्रवराने" प्राक् ) ॥ ३. तस्माद् अपृच्छत् जरथुश्त्रः यत् को नरोऽसि[32] । ( अहो[33] ईअस्तौ न प्राक् बभूव पुरः प्रकटत्वात् असौ परिज्ञातवान् यत् हूमोऽयं समेति यदि च समागतोऽभूत् एनं प्रष्टुं समीहत "मिथ्रो जयात् जरथुश्त्रेम्" तत् परिस्फुटं एव यचेनं संमार्जवान्[34] इति हेतोः यत् समयः समं ईअजदैः प्रभूतैरासीत् तस्य ईअजदाश्च प्रकटतरा आसन् इयं प्रकृतिश्च कोमला अभूत् असौ अभीप्सितत्वात् समं हूमेन उच्चैर्भाषे ) । ४ यं अहं विश्वस्मात् जगतः सृष्टिमतः सुंदरतरं ददर्श । निजेन जीवेन सुंदर-

---

॥ ५ ॥ १. Some MSS. स्वामितया.

॥ ६ ॥ १. $H_2$ TDA$_2$ अपवर्जतु. २. $H_2$ विर्षजंताच ( ? ), TDA$_2$ विप्रजंताच.

॥ ८ ॥ १. EMU$_{16}$ $H_2$ EMU$_{17}$ TDA$_2$ EMU$_{15}$ रुद्रतांच शुभांच. २ $H_2$, JJM$_2$, TDA$_2$, EMU$_{15}$ रुद्रत्वशुभं. ३. Some MSS. हेतौ.

॥ ९ ॥

॥ ० ॥ १. EMU$_{16}$ सन्मानकृत्ताय.

॥ १ ॥ १. Several MSS. तस्मादापृच्छत्. १a. Corrected from प्रष्टिकुं or पुष्ट प्रष्टुं in Several MSS. १b. "Zyât" in some MSS. १c. MLHL$_1$ यचेनं. २. EMU$_{16}$ प्रकारातरा [ प्रकारांतराः? ] २a. MFL प्रसूतिश्च. २b. EMU$_{15}$ अभिप्रितत्वात् ( ? ) JJM$_2$ अभिप्रिमिप्सीत-

कृतेन अमरेण। ( किल येन निजो जीवः सद्यापारतया अमरः कृत आस्ते न एवं[3a] यथा ते[3b] थ्रैमीसं यमशेदस्य[35] खादितं। त्वया निजो जीवः शुद्धतया अन्तर्वपुषि[4] बुद्धिः[श्च?] अमरा कृता आस्ते। अन्यथा ऋते[5] तनोः सर्वस्य कस्यचित्[6] अमरः "अमेरेजं गयेहे स्तून्" ) ॥[36]

॥ २ ॥ ५. ततो मयि [मे?] अयं [मह्यं?] प्रत्युत्तरं बभाषे हूमो मुक्तिमान् दूरमृत्युः (अस्य दूरमृत्युता च इयं यत् मृत्युं आत्मनो मनुष्याणां दूरे दधाति। रोशनश्च उवाच यत् अक्षयत्वं हूमेन भवति )। ६. अहं अस्मि जरथुश्त्र हूमो मुक्तिमान् दूरमृत्युः। ७ तन्मां समीहस्व स्पितम प्रकृष्टं मां परिसंस्कारं कुरु[1] खादनाय। ( आहारार्थं संमार्जय )। ८. उपरि मां स्तुतौ स्तुहि[2] ( अन्तर् इजिश्नौ )। यथा मां पश्चाच्च लाभसमीहिते [ लाभं समीहमानाः स्तुतिं ] कुर्वन्ति[3] ( त्वत्तः ) ॥

॥ ३ ॥ ९. तं अभाषत जरथुश्त्रो नमो हूमाय। १०. कस्त्वां पूर्वं हूम मनुष्येषु सृष्टिमति संस्कृतवान् जगति। कां तस्मै उपकृतिं चकृषे। ( तत् शुभं यथा किल मे भवेत् )। किं तस्मिन् संप्राप समृद्धत्वम् ॥

॥ ४ ॥ ११. ततो मयि [मे?] अयं[1] [मह्यं?] प्रत्युत्तरं अभाषत हूमो मुक्तिमान् दूरमृत्युः। १२. वीवंघानो[37] मां पूर्वं मनुष्येषु सृष्टिमति संस्कृतवान् जगति। तां तस्मै उपकृतिं चक्रे। तत् तस्मिन् संप्राप समृद्धत्वम्। १३. यद् अस्य पुत्रो उच्चैर्जातो यो यमशेदो[38] दीप्तिमान् सुसंचयी। १४. श्रीमत्तमः जातेभ्यः। ( सत्कार्यतमः )। ( श्रीः अस्ति सत्कार्यता[39]। अस्ति च या वपुषा[40] मनुष्यस्य। तस्यां च या यमशेदस्य एकमतीबभूवुः यतः [यत्] सत्कार्यता। रोशनश्च[41] उवाच यत् श्रीः अस्ति या वपुषा मनुष्यं श्रीमत्तमं धत्ते सत्कार्यता च तां प्रवर्तमानां कुरुते )। सूर्यनिरीक्षणतमः मनुष्येभ्यः। ( सुलोचनतमः इत्यर्थः )। १५. यश्चकार तस्य राज्ये अमरान् पशुवीरान्। अशोषीणि उदकानि वनस्पतीन्। ( किल यत् अभीप्सते तन्न शुष्कम् )। [41a] १६. क्षुधितानां खाद्यं अनवसादम्। ( अविनाशि। किल चेत् एकं खादितं अभूत् द्वितीयं एकं प्राप्तमेवासीत् ) ॥

॥ ५ ॥ १७. यमशेदस्य राज्ये[1] उत्कृष्टतरे न शीतं आसीत् न च दाघः। १८. न जरा आसीत् न च मृत्युः। न च ईर्षा देवदत्ता। ( अहो सर्वमपि अभूत् परं पापकर्मकत्वात्[1a] अन्यथा धृतं आसीत् )। १९. पंचदशाब्दवार्षिकौ प्रचरतः [०की प्रचरति] पितापुत्रस्य[2] योतिः[42]। [43]पूजाविनयकौचित्[2a]। ( स्तुत्यां पितृपुत्रयोः[3] उक्तं[3a] यत् पुत्रः एवं शोभनोऽभूत्

---

त्वाद्तत्वासं (?).३. EMU$_{15}$ सद्यापारतयाऽमराः कृतास्ते. EMU$_{16}$ सद्यापारतयाकृताः आस्ते. EMU$_{17}$ अभिर्गतंत्वा. ३a MFL नत्वेवं. ३b. EMU$_{17}$ ते यै मंसि यमसेदस्य. ४. EMU$_{16}$ अंतर्वपुद्धिअमरः कृतः आस्ते. JJM$_2$ EMU$_{15}$ अंतर्वपुषिशुधिअमरः कृतः आस्ते MFL, H$_2$ अंतर्वपुषिबुधे अमराकृतास्ति EMU$_{17}$ अंतर्वपुषिषुधि अमरः ५. EMU$_{15}$ EMU$_{16}$ and most other manuscripts हृते. ६. MFL सर्वस्यचित्. ७. EMU$_{16}$ EMU$_{17}$ EMU$_{15}$ "amaraba"(?)

॥ २ ॥ १. EMU$_{15}$, TDA$_2$, H$_2$, EMU$_{16}$ परिसंस्कुरु. २. Corrected from स्तौहि in most MSS. ३. TDA$_2$, MLHL$_1$, H$_2$, EMU$_{17}$ लाभसमंहे EMU$_{16}$ लाभसमंहे EMU$_{16}$ JJM$_2$ लाभसमीहे.

॥ ४ ॥ १. [ Correct मह्यं?—Is the Avestā "*mêaêm*"=मह्यं; "*thwâ-aêm*", "*tava-aêm*" or '*tê-aêm*"=तुभ्यं (?)]

॥ ५ ॥ १. TDA$_2$, H$_2$, MFL राज्येयान् [ ०यावत् ? ]; EMU$_{15}$, EMU$_{17}$, JJM$_2$ राज्येन. १a. TDA$_2$, H$_2$, पापकर्म्मकत्त्वाद् (?) [ पापकर्मकृत्त्वाद् ]; MFL पापकर्मकृतत्वाद्. २. EMU$_{16}$, EMU$_{17}$, H$_2$, JJM$_2$, MFL पितापुत्रस्य योतिः २a. MLHL$_1$, TDA$_2$ पूजावित्कौचित् ; EMU$_{15}$, JJM$_2$ पूजाविनकौचित्; EMU$_{16}$ पुंजावितकौचित्; EMU$_{17}$, H$_2$ MFL, पूजावितकौचित् [पूजाविनये कौचित् ३. Most MSS. पितुपुत्रयोः ३a. EMU$_{15}$, EMU$_{17}$, MLHL$_1$, JJM$_2$ मुक्तं [ रुक्तं ]; SP., TDA$_2$

यथा पिता पिता च एवं शोभनोऽभूत् यथा पुत्रः) । २०. सदैव राजति[४] सुसंचयिनि यम शेदे विवंघनस्य पुत्रे । ( इदं किंचित् एवं आसीत् ) ॥

॥ ६ ॥ २१. कस्त्वां द्वितीयो हूम मनुष्येषु सृष्टिमति संस्कृतवान् जगति । कां तस्मै उपकृतिं चकृषे । ( तत् शुभं किल यथा[१] मे भवेत् ) । किं तस्मिन् संप्राप समृद्धत्वम् ॥

॥ ७ ॥ २२. ततो मयि [मे?] अयं [मह्यं?] प्रत्युत्तरं अभाषत हूमो मुक्तिमान् दूरमृत्युः । २३. आथ्वीआनो मां द्वितीयो मनुष्येषु सृष्टिमति संस्कृतवान् जगति । तां तस्मै उपकृतिं चक्रे । तत् तस्मिन् संप्राप समृद्धत्वम् । २४. यद् अस्य पुत्रः उच्चैर्जातः वेश्मशस्त्रः फ्रेदूनः । (अस्य वेश्मशस्त्रत्वं इदं अभूत् यत् वेश्मनि अन्वयात् पितॄणां बहूनि [शस्त्राणि?] आसन्[१] । तच्च यत् देहाकस्य[२] [शस्त्राणि?] हठेन जग्राह[३] । समग्राणि च तानि यानि स्ववर्गस्य न-प्रकाशीनि आसन् असौ उद्दध्रे ) ॥

॥ ८ ॥ २५. यो जघान अहिं दहाकं[44] त्रिलपनं त्रिमस्तकम् । षड्लोचनं सहस्रप्रणिधिम्[१] । २६. महाबलं देवं[२] द्रूजम् । दुष्टं लोकेषु दुर्गतिनम् । ( हानिकरं इत्यर्थः ) । २७. यं महाबलतमं द्रूजं प्राकरोत्[३] अंग्रोमइनिओशु । ( आहर्मनः ) । उपरि एतस्मिन् सृष्टिमति जगति मृत्यवे पुण्यलोकस्य । ( किल द्रूजेभ्यो जगत्याः एकः स बलिष्ठतरो दत्तः "को श्वाम् यिं अहुरेम् मज्दाम्" अपरे गणना यतः समग्रामपि हानिं यां असौ सृष्टिषु होर्मिज्दस्य शक्तो बभूव कर्तुं तां सर्वां[४] चकार । नाभूत् किंचिदपि तत् यद् असौ शक्तो बभूव कर्तुं परं न चक्रे ) [45] ॥

॥ ९ ॥ २८. कस्त्वां तृतीयो हूम मनुष्येषु सृष्टिमति संस्कृतवान् जगति । कां तस्मै उपकृतिं चकृषे । ( तत् शुभं किल यथा मे भवेत् ) । किं तस्मिन् संप्राप संमृद्धत्वम् ॥

॥ १० ॥ २९. ततो मयि [मे?] अयं[मह्यं?] प्रत्युत्तरं अभाषत हूमो मुक्तिमान् दूरमृत्युः । ३०. थ्रितो[46] [थ्रितो] ( तृतीयः ) सामानो लाभेप्सुः । ( अस्य थ्रितत्वं च इदं यत् पुत्रः तृतीयो बभूव । अस्य लाभेप्सुता च इयं यत् असौ लाभं सृष्टीनां सुंदरं विवेद समीहितुम् ) । तृतीयो मां मनुष्येषु सृष्टिमति संस्कृतवान् जगति । तां तस्मै उपकृतिं चक्रे । तत्तस्मिन् संप्राप संमृद्धत्वम् । ३१. यदस्य पुत्रौ उच्चैर्जातौ उरूआक्षः[१] केरेसास्पश्च ॥ ३२. न्यायाधिपः अन्योऽभूत् । ( किल न्यायं न्यायाधिपत्यं च चक्रे ) । आचाररचयिता । ( किल आचारं शुद्धतया सन्निहितवान् )[1a] । ३३. तस्मात् अन्यः उत्कृष्टकार्यः[1b] । उत्साही गासूरो[२] गदाधरः । ( किल कार्यं गदया प्रभूतं चकार । गाशूरजातो[2a] ताजीकानां[३] बभूव अत एव गाशूरः ) ॥

---

EMU$_{16}$' H$_2$, MFL भक्त. ४. MLHL$_1$ राजान्; SP. राजानः; EMU$_{15}$, EMU$_{17}$ राजान; EMU$_{16}$ राजनि; JJM$_2$ राजने.

॥ ६ ॥ १. MLHL$_1$ यद्वामे.

॥ ७ ॥ १. EMU$_{15}$, MLHL$_1$, H$_2$, EMU$_{17}$, EMU$_{16}$, TDA$_2$ बहून्वासन् (?) [बहव आसन्; बहून्यासन्]. २. MFL दाहकश्च. ३. MLHL$_1$ जग्रेह.

॥ ८ ॥ १. EMU$_{17}$, EMU$_{15}$ सहस्रसेवकप्रणिधिं. २. EMU$_{15}$ दैवं. ३. Most MSS. परकरोत्. ४. SP. वंचकोऽसौभभूत्; EMU$_{15}$, EMU$_{17}$ वांचकास । नाभूत्; TDA$_2$ तांचकार । नाभूत्; MLHL$_1$ सर्वांचकार । नाभूत्; EMU$_{16}$ वांचकार । नाभूत्.

॥ १० ॥ १. Some MSS. उरुआप्सः १a. Some MSS. सन्नितवान् [संनीतवान् ?]. १b. EMU$_{16}$ उत्कृष्टकायां; EMU$_{17}$, TDA$_2$ °काया; H$_2$, EMU$_{15}$ उत्कृष्टकायाः २. EMU$_{16}$ गाश्शुरो. २a. EMU$_{15}$, EMU$_{17}$, MLHL$_1$ गसूरजातो. ३. EMU$_{16}$ ताजिकानां.

॥ ११ ॥ ३४. यो जघान अहिं श्रुवरं यं अश्वगिलं नरगिलम् । यं विषमंतं लोहितम् । ३५. यत्रोपरि विषं प्रावहत् मुष्टयंगुष्टतुंगं पाटलम् । ३६. यत्रोपरि केरेसास्पः लोहकटाहे पाकं पपाच । ३७. आ रपिथ्विनिकालम् । ( आमध्याह्नसंध्याकालम् )[2] । तत्रश्च स नृशंसः[2a] चुक्षुभे । ( किल द्विपादो बभूव ) । ३८. प्रकुष्टं च लोहकटाहं[3] अवाकिरत् । मलवतीः अपः पराजगाम[4] । ३९. परतस्त्रासेन अपससर्प[5] पौरुषमानसत्वं[6] [पौरुषमानसः] केरेसास्पः । ( अस्य पौरुषमानसत्वं[47] इदं बभूव यद् असौ चैतन्यं स्थाने दधौ ) ॥

॥ १२ ॥ ४०. कस्त्वां चतुर्थो हूम मनुष्येषु सृष्टिमति संस्कृतवान् जगति । कां तस्मै उपकृतिं[1] चकृषे । ( तत् किल शुभं[1a] यथा मे भवेत् ) । किं तस्मै[2] संप्राप संमृद्धत्वम् ॥

॥ १३ ॥ ४१. ततो मयि [मे?] अयं [मह्यं?] प्रत्युत्तरं अभाषत हूमो मुक्तिमान् दूरमृत्युः । ४२. पोउरूशास्पो[48] मां चतुर्थो मनुष्येषु सृष्टिमति संस्कृतवान् जगति । तां तस्मै उपकृतिं चक्रे । तत्तस्मिन् संप्राप संमृद्धत्वम् । ४३. यद् अस्य त्वं उच्चैर्जातः । त्वं निर्मलो जरथुश्त्र मंदिरे पोउरुशास्पीये विभिन्नदेवो होर्मिज्द्न्यायी ॥

॥ १४ ॥ ४४. विख्यातः परांग्वेजदेशे[1] । [49] त्वं पूर्वं जरथुश्त्र अहुनवरं प्रावोचः[50] विना क्रमणेन[1a] ( अभाषणेन च )[2] । ४५. ············पश्चात् गाढतरः प्रौढस्वरेण ॥

॥ १५ ॥ ४६. त्वं जगतीगुप्तान्[1] [51] अकरोः विश्वान् देवान् जरथुश्त्र । ये प्राक् तस्मात् वीरविक्रमाः अपतन्[2] उपरि अस्यां जगत्याम् । ( सर्वे ये वपुः अदृश्यं शक्ता बभूवुः कर्तुं तेषां कलेवरं भग्नं । ये न शक्ताः बभूवुः कर्तुं तेषां स्वयमेव भग्नम् । कलेवरभंजनस्य कार्यं इदं यतः [यत्] ते तस्माद् ऊर्ध्वं देवकलेवरतया पापं कर्तुं [न] समर्थो बभूवुः । अन्यथा तु पशुकलेवरत्वेन मनुष्यकलेवरत्वेन हंजमनानि समूहानि कुर्वन्ति[3] ) । ४७. यो बलवत्तमः यो दृढतमः । यो व्यवसायितमः यो वेगवत्तमः योऽसि[4] विजयवत्तमो जातः परलोकिनां सृष्टिभ्यः । ( सृष्टिभ्यः परलोकिनां स्वाधीनाभ्यः ) ॥

॥ १६ ॥ ४८. तं अभाषत जरथुश्त्रो नमो हूमाय । ४९. उत्तमो हूमः सुदानम्[1] [सुदत्तः] (किल सद्व्यापारतया दत्तोऽसि) । हूमः सत्यदानः । ( किल किंचित् तस्मै दत्ते यस्मै युज्यते दातुम् ) । ५० उत्तमदानः अरोग्यकरश्च । ( किल किंचित् उत्तमदानं ददासि आरोग्यं करोषि[1a] ) । सुकलेवरोऽसि । (किल ते कलेवरं सुमंजुलतरम् ) । सुकामोऽसि । ( किल ते समीहितं सद्व्यापारि ) । ५२. विजयी सुवर्णवर्णो मृदुपल्लवोऽसि । ( किल ते किसलयाः कोमलतराः ) । ५३. यः स्वादयतां[2] उत्कृष्टत्वं आत्मने संचयितृतमोऽस्ति[3] । ( किल निधिं आत्मनो त्वया उत्तमतरं शक्यते कर्तुं यतः [52]गरोथमानित्वं[4] त्वया भवति ) ॥

---

॥ ११ ॥ १. $EMU_{16}$ लोहकडापाकं; २. $EMU_{16}$ आमध्याह्नः कालं. २a. Several MSS. श्रुशं श्रुषंसः ३. $EMU_{16}$ लोहकडाहं. ४. $EMU_{16}$ मलयती अपः परागा· जगाम; $EMU_{15}$, $H_2$, $MLHL_1$, $TDA_2$, $EMU_{17}$ मलवति अपः पराजगान् पराजगाम. ५. $EMU_{16}$ असस्पर्प. ६. [ पौरुष्मानसः ] $EMU_{15}$, $H_2$, $TDA_2$, $EMU_{17}$ पुरुषमानसत्वं.

॥ १२ ॥ १. $EMU_{17}$ उपपस्तिं. १a: $EMU_{17}$, $TDA_2$, $EMU_{16}$ तत् शुभं किल. २. $EMU_{16}$, $EMU_{17}$, $TDA_2$ तस्मिन्.

॥ १४ ॥ १. SP. इरांग्वेज; $EMU_{16}$, $EMU_{17}$, $TDA_2$ एरांग्वेजदेशे. १a. $EMU_{17}$, $TDA_2$, $MLHL_1$, $H_2$ कर्मणेन [क्रमणेन]. २. SP. आभाषेणच; $EMU_{17}$, $TDA_2$, $H_2$, MLHL, आभाषणेनच.

॥ १५ ॥ १. SP., $EMU_{15}$, $H_2$ जगतीगुप्तवान्. २. $EMU_{16}$, $EMU_{17}$, $TDA_2$, $H_2$ आपतत्. ३. $EMU_{15}$, $EMU_{16}$, $EMU_{17}$ $TDA_2$, $MLHL_1$, $H_2$ अकुर्व्वन्. ४. SP. $EMU_{17}$, $TDA_2$, $MLHL_1$, $H_2$ अस्ति.

॥ १६ ॥ १. Thus all [ सुदानी ? ]. १a. Thus all [ कुरुषे ]. २. $H_2$ स्वादयतो. ३. Thus all [ असि ]. ४. All गरुथ्मानत्वं.

॥ १७ ॥ ५४. नितांतं त्वं सुवर्णाभं[1] विद्यां[2] ब्रूहि। ( किल किंचित् तन्मे विद्यायां ब्रूहि येन मे परिज्ञानित्वं भवेत् ) । ५५. नितांतं महोत्साहित्वम् । ( महामानसत्वं यत् कस्यापि साहाय्यं नापेक्षते ) । नितांतं विजयित्वम् । ५६. नितांतं सुरूपत्वं नितांतं अरोग्यत्वम् । ( किल मह्यं देहि ) । ५७. नितांतं वृद्धिदातिं नितांतं पुष्टिदातिम् । ५८. नितांतं ओजः विश्वस्मै वपुषे । नितांतं निर्वाणज्ञानितां विश्वस्मिन् विरचिताम् । ( यो निर्वाणज्ञानं किंचित् वेत्ति तस्य सर्वज्ञानित्वं देहि तेजः ) । ५९. नितांतं तस्मात् यथा जगति कामप्रजानः प्रचरामो बाधां निहन्मो द्रुजं अपनयामः ।

॥ १८ ॥ ६०. नितांतं तस्मात् यथा निहन्मो विश्वेषां बाधाकराणां बाधाः । देवानां मनुष्याणां च । ६१. शाकिनीनां महाराक्षसीनां च अन्यायिकानां अदर्शकानां अश्रोतॄणां च। (अदर्शकाः अश्रोतारश्च ते ये किंचित् ईअज्दीयं द्रष्टुं श्रोतुं न शक्नुवन्ति ) । ६२. नृशंसानां च द्विचरणानाम् । आस्मोगानां[53] च द्विचरणानाम् । व्याघ्रादीनां च चतुरंघ्रीणाम्[1] । ६३. हयूनानां[54] च पृथुलानीकानां ( किल ) प्रतारणतया पतताम् ॥

॥ १९ ॥ ६४. इदं त्वत्तः प्रथमं कल्याणं ह्रूम याचयामि [याचे] दूरमृत्यो उत्कृष्टतरं भुवनं मुक्तात्मनां[55] सदोद्द्योतं समस्तशुभम् ॥ ६५. इदं त्वत्तः द्वितीयं कल्याणं ह्रूम याचयामि [याचे] दूरमृत्यो रूपप्रवृत्तिं [ उपप्रवृत्तिम् ] एतस्मै वपुषे ॥ ६६. इदं त्वत्तः तृतीयं कल्याणं ह्रूम याचयामि [ याचे ] दूरमृत्यो दीर्घं जीवितं जीवस्य ॥

॥ २० ॥ ६७. इदं त्वत्तः चतुर्थं कल्याणं ह्रूम याचयामि [ याचे ] दूरमृत्यो यथा सोत्सवाः महोत्साहाः समृद्धाः प्रचरामो जगत्यां उपरि बाधां निहन्मो द्रुजं अपनयामः ॥ ६८. इदं त्वत्तः पंचमं कल्याणं ह्रूम याचयामि [ याचे ] दूरमृत्यो यथा विजयिनः टालकयूनः[1] [ टालकयुद्धेन ] प्रचरामो जगत्यां[2] उपरि बाधां निहन्मो द्रुजं अपनयामः । ( टालकाः अशुभस्य ) ॥

॥ २१ ॥ ६९. इदं त्वत्तः षष्ठं कल्याणं ह्रूम याचयामि [ याचे ] दूरमृत्यो यत् पुरश्चौरेभ्यः पुरो नृशंसेभ्यः पुरो व्याघ्रादिभ्यः पश्याम । ( उपायम् ) ॥ ७०. मा कश्चित् पुरा [पुरः] पश्यतु । पुरोऽस्मान्[1] ॥ वयं सर्वेभ्यः पुरः पश्याम । ( उपायं । अहं शिष्याश्च[2] [मे] ) ॥

॥ २२ ॥ ७१. ह्रूमस्तेषां ये शास्त्रमंतः[1] सहायान्[56] अध्यवसायिनः कुरुते । ( किल अश्वान् क्षत्रियाणाम् ) प्राणं ओजश्च वर्षति[57] [ वर्धयति ] ॥ ७२. ह्रूमः अजातकेभ्यो[58] विशेषतो ददाति दीप्तिमंतं पुत्रम् यं एवं पुण्यसंततिम् ॥ ७३. ह्रूमस्तेभ्यश्चित् ये गृहस्थाः[1a] नस्कप्रशिक्षया[59] निषीदंति । ( किल अध्ययनं कर्तुम् ) । महत्त्वं[2] निर्वाणज्ञानं च वर्षति ॥

---

॥ १७ ॥ १. Some MSS. सुवर्णाभि. २. Some MSS. विद्याया.

॥ १८ ॥ १. Sp, $EMU_{15}$, $TDA_2$, $MLHL_1$, $EMU_{16}$, $EMU_{17}$, $H_2$, $K_7$ चतुरंघ्रीणां.

॥ १९ ॥ १. $K_7$, $H_2$, $MLHL_1$, $EMU_{15}$ °त्योःरूपप्रवृत्तिं.

॥ २० ॥ १. $K_7$ व्यून (?), $H_2$ व्यूद्धेन, $EMU_{15}$, $EMU_{16}$, $EMU_{17}$ टालका यु–न [टालकाः युद्धेन ]. २. $H_2$ जगत्यामुपरि.

॥ २१ ॥ १. $K_7$, $H_2$, $MLHL_1$, $EMU_{15}$, $EMU_{17}$ अस्मात्; $EMU_{16}$ पुरोऽस्मत्. २. $K_7$ शिष्यामः, $MLHL_1$, $EMU_{15}$, $EMU_{17}$ उपायं अहं शिष्याम [ शिष्या मे ].

॥ २२ ॥ १. Sp. शास्त्रिमंतः; $EMU_{15}$, $MLHL_1$, $TDA_2$, $K_7$ शस्त्रमंतः [[illegible]]. १a. Several MSS. गृहस्तः. २. $EMU_{15}$ महंम्तं (?); $K_7$, $MLHL_1$, महांम्तं [ [illegible] ? ]; $TDA_2$, $H_2$ महांतं; $EMU_{16}$ महत्तां; $EMU_{17}$ महाद्दू (?).

॥ २३ ॥ ७४. हूमस्ताञ्यश्चित् याः कुमार्ये[60] [अविवाहितस्थित्यां] निषीदंति दीर्घं अगृहीताः । ( अपरिणीताः इत्यर्थः । किल न पतिसेविताः भवन्ति )। प्रकटं दातारं च वर्षति । ( किल ताभ्यो भर्तारं प्रकाशयति )। आशु याचयितारं सुबुद्धिम् । ( किल तत्कालमेव अन्तः कार्ये संतिष्ठमानम् ) ॥

॥ २४ ॥ ७५. हूमस्तांश्चित् ये कलशियाकाः[१][61] अपराज्यान्[१a]* निषादयति[२] । ( येषां प्रबोधः[62] तर्शाकेदीनिः[३][63] )। ये समुदिताः राजकामतया । ( किल राजत्वेन उपरि समागताः सन्ति )। ७६. ये प्रलपंति मा अस्माकं पश्चात् आचार्यः अधिकाध्ययनतया स्वेच्छया ग्रामेषु प्रचरतु[३a] । ७७. स[64] विश्वेषां वृद्धं[४] [ वृन्दं? ] टालयति । नितांतं सर्वेषां वृद्धं [ वृंदं? ] निहन्ति । ( प्राक् पश्चाच्च ) ॥

॥ २५ ॥ ७८. शोभनः[१] त्वं यो निजौजसा कामराजाऽसि हूम । (किल त्वं ओजः[१a] तस्मिन् कार्ये यत् तुभ्यं रोचते शक्नोषि कर्तुम्[२] ) ॥ ७९. शोभनः त्वं मध्यं [ अधिकं ?] जानासि[३] प्रचुरवचसां सत्योक्तानाम् । (यतो अस्ति वचः सत्यं येन[४] [यत् न ] सद्यापरि[65] । उक्तं च "का ना वच अर्ज़ुखुधं[५]" ) ॥ ८०. शोभनः त्वं न[६] ऋते प्रश्नत्वात् सत्योक्तां पृच्छसि वाचम् । ( किल किंचिदपि नोद्गिरसि यद् होर्मिज्दः अन्तः प्रश्नत्वे नोवाच ) ॥

॥ २६ ॥ ८१. प्रकृष्टं इदं[१] तुभ्यं होर्मिज्दोऽदात् प्राक्तनां [66]अइविअंघनतां[२] ताराचितां परलोकघटितां उत्तमां दीनिं माज्दईअस्नीम् । ( अस्य अइविअंघनत्वं इदं यत् यथा कुस्ती समं मनुष्येण ऐकीकृता[३] दीनिश्च एवं समं हूमेन ऐकीकृता[३] । अस्याः ऐकीकृतत्वं इदं यत् यावत् हूमं न खादति दीन्या सुनिश्चितो[३a] न भवति । हूमखादनकार्ये अन्तरिजिश्नौ[67] आस्ते[४] )। ८२. ततस्तया असि आवेष्टितः शिखरेषु उपरि गिरीणाम् । ( यत्र त्वं समुदितोऽसि तत्र इयं ऐकीकृता[४] आस्ते )। दीर्घो[५] उत्कृष्टप्रवृत्ति यावत् गृहीतोऽसि मांथ्रवाण्या । ( किल त्वं यावत् वपुः पाश्चात्यं[68] अंतर् इजिश्निकार्ये समादिष्टोऽसि ) ॥

---

॥ २३ ॥ १. MLHL$_1$, TDA$_2$, H$_2$, EMU$_{16}$ कुमार्यौ.

॥ २४ ॥ १. TDA$_2$, H$_2$ कलेशीयाकाः; EMU$_{16}$ कलिशियाकाः; EMU$_{17}$ कलुशियाकाः १a. EMU$_{15}$, EMU$_{17}$ अपराजान्. २. Corrected EMU$_{15}$, MLHL$_1$, K$_7$ निषीदयति. Several MSS. निषीदयिति. ३. EMU$_{15}$ तशकिदीनः; TDA$_2$, K$_7$, H$_2$ तशीकदीनः; EMU$_{16}$ तर्शाकदीने. ३a. EMU$_{16}$ प्रचरत्. ४. EMU$_{15}$ वृंद्धं [वृन्दं]; MLHL$_1$ वृंद, TDA$_2$, EMU$_{16}$ वृंद्धं; K$_7$, EMU$_{16}$ वृंदं.

॥ २५ ॥ १. EMU$_{16}$ सोभन [हे शोभन !]. १a. EMU$_{17}$ ओजिः (?). २. EMU$_{16}$ शक्नोऽसिधर्तुं; H$_2$, MLHL$_1$, TDA$_2$, K$_7$, EMU$_{17}$ शक्नोऽसि कर्तुम्. ३. Thus all [ अधिकं जानासि ? ]. ४. EMU$_{16}$ न. ५. EMU$_{16}$ Avestic "*Arzhukhdha*"; EMU$_{17}$, TDA$_2$, H$_2$ "*arshukhdha*". ६. EMU$_{16}$ omits न.

॥ २६ ॥ १. EMU$_{15}$, EMU$_{16}$ omit इदं. २. EMU$_{16}$ अइवंघनां. ३. EMU$_{15}$, EMU$_{16}$, EMU$_{17}$, TDA$_2$, K$_7$, H$_2$ ऐक्यीकृता and ऐक्यीकृतात्वं. ३a. H$_2$ सुनिश्चित्वो. ४. EMU$_{16}$ omits आस्ते. ५. Most MSS. दीर्घं.

॥ २७ ॥ ८३. हूम गृहपतिरसि वीस्पतिरसि जन्दपतिरसि ग्रामपतिरसि । ( किल त्वं अदृश्यतया सर्वेषां पतिरसि ) । बृद्धेः वेपृतायाः पतिरसि । ( किल त्वं शक्तोऽसि दातुम् ) । ८४. महोत्साहत्वं त्वं विजयत्वं [ विजयित्वं ] च मदीये उपरि च ब्रूहि वपुषि । ( आशीर्वादेन ) । ( महोत्साहत्वं महामानसत्वं यत् कस्यापि साहाय्यं नापेक्षते[2] ) । ऋद्धत्वं च यत् संपूर्णशुद्धिं[3] । ( वित्तं यस्मात् शुभं प्रभूतम् ) ॥

॥ २८ ॥ ८५. विना अस्मान्[1] [ अस्माकं ] बाधाकराणां बाधां विना मनश्च कुरु कष्टं वासयताम् । ८६. यः कश्चिच्च अस्मिन् गृहे योऽस्मिन् वीसे योऽस्मिन् जन्दे योऽस्मिन् ग्रामे द्वेषी अस्ति मनुष्यः । ( पापकारी ) ।

॥ २९ ॥ ८७. गृहाण तस्य पादयोः प्राणम्[1] । ८८. प्रकृष्टं तस्य चैतन्यं परिवर्तय । ८९. भंगं तस्य मनसः कुरु । ( अक्षमत्वं कुरु ) । ९०. मा पादाभ्यां प्रपतयताम् । मा पाणिभ्यां अधिकं शक्नोतु । ९१. मा जगतीं विलोकयतु अक्षिभ्याम् । मा गां विलोकयतु अक्षिभ्याम् । ९२. यो द्वेष्टि नो मनः । ( किल यस्मात् वयं किंचित् यद् सह्यापारि[2] अवमंतुं न शक्नुमः ) । यो द्वेष्टि नः कलेवरम् । ( किल समं कलेवरेण अस्माकं द्वेषं धत्ते ) ॥

॥ ३० ॥ ९३. उपरि अहौ लोहिते भयंकरे विषावाप्ते । ९४. कलेवरं विनाशयति पुण्यात्मनो हूम सुवर्णाभ प्रकाशय विघातम् । ( किल उपायं कथय ) ॥ ९५. उपरि नृशंसे विछिन्नकर्मणि छेदकर्तरि पीडयितरि । ९६. कलेवरं विनाशयति पुण्यात्मनो हूम सुवर्णाभ प्रकाशय विघातम् । ( किल उपायं कथय ) ॥

॥ ३१ ॥ ९७. उपरि मनुष्यस्य दुर्गतिमतो अन्यायिनः अधिकनिंदादातुं[1] मस्तके । ९८. कलेवरं विनाशयतः पुण्यात्मनो हूम सुवर्णाभ प्रकाशय विघातम् । ( किल उपायं कथय ) ॥ ९९. उपरि आश्मोगे अमुक्तात्मनि भुवनविनाशके अस्याः दीनेः मनोवचोदातरि[2] न कर्मणां[3] परिप्राप्ते । ( किल मन्यते यद् ब्रवीमि करोमि वा न करोमि ) । १००. कलेवरं विनाशयति पुण्यात्मनो हूम सुवर्णाभ प्रकाशय विघातम् । ( किल उपायं कथय ) ॥

॥ ३२ ॥ १०१. उपरि वेश्यायां शाकिन्यां मंदत्वं कुर्वाणायाम् । ( किल किंचित् न [?]विनाशि कुरुते[1] ) । प्रतिपक्षत्वं बिभ्राणायाम्[2] । ( किल रक्षां पापकर्मिणां कुरुते ) । यस्याः प्रस्फुरति मनः यथा अभ्रं वातोत्सारितम् । १०२. कलेवरं विनाशयंत्यां पुण्यात्मनो हूम सुवर्णाभ प्रकाशय विघातम् । ( किल उपायं कथय ) ॥ १०३. योऽस्य कलेवरं विनाशयति पुण्यात्मनो हूम सुवर्णाभ तस्मिन् प्रकाशय विघातम् । ( किल उपायं कथय ) ॥

---

॥ २७ ॥ १. Sp, $TDA_2$, and some other MSS. वीसपतिरसि. २. Sp. नोपेक्षते. ३. Sp. संपूर्णशुद्धिम्.

॥ २८ ॥ १. Thus corrected by Sp., some MSS. अस्मात्, others अस्मत्.

॥ २९ ॥ १. $EMU_{16}$ प्राणां. २. $EMU_{16}$ सह्यापारं.

॥ ३१ ॥ १. Sp. अधिकानंददातुः; $EMU_{15}$ अधिकनंदोदातुः [अधिकनिंद्रादातुः ? ]; $EMU_{17}$ अधिकनंददातुः; $H_2$, $TDA_2$, $K_7$ अधिकनिंदां दातुः. २. Several MSS. मनोवचेदातरि. ३. S. कर्मणि.

॥ ३२ ॥ १. Sp. $EMU_{17}$ and several others विनाशं कुरुते. २. Several MSS. erroneously बिभ्रामणायां.

## हा १०.

॥ १ ॥ १. ऋते पश्चात् अस्मात् प्रपतंति ऋते देवाः ऋते देवसहायाः। (देव्यः)। २. उत्तमः श्रोशो निवसति। (किल अभ्यागतो भवति)। ३. अर्शिशवंघलक्ष्मी[:] इह निवसति अर्शिशवंघलक्ष्मी[:] प्रीणाति इह। (किल अभ्यागता भवति क्रीडयति च)। अन्तरस्मिन् गृहे यत् होर्मीज्दीयं यत् हूमस्य मुक्तिजननेः। (अनयोः स्वाधीनं यत्) ॥

॥ २ ॥ ४. परान्मुखायां [पराङ्मुखायां] त्वां हाऊअनायां वचसा उपस्तौमि सुबुद्धेः [सुबुद्धे] यत्ते पल्लवान् संगृह्णामि। (किल यत् त्वां मध्ये करोमि)। ५. ऊर्ध्वायां[1] च त्वां हाऊअनायां वचसा उपस्तौमि सुबुद्धेः [सुबुद्धे] यत्र निहन्मि नरौजसां[2] ॥

॥ ३ ॥ ६. स्तौमि मेघं च वृष्टिं च यौ ते कलेवरं विकाशयतः शिखरेषु उपरि गिरीणाम्। ७. स्तौमि गिरीन् उदग्रतरान् यत्र हूम समुदितोऽसि[1] ॥

॥ ४ ॥ ८. स्तौमि जगतीं परिक्रमिणीं पृथुलां स्वामिकामिनीं क्षमापरां धात्रीं त्वां [तव] हूम मुक्तिमय। ९. स्तौमि जगतीम्। (किल तत् स्थानं नामांकितं स्तौमि)। यस्मिन् स्थाने सुगंधत्वं साधनत्वं कृत्वाऽसि[2]। १०. एवं महत्तरोदयम्। (सुगंधत्वं साधनत्वं इहलोके[3] महोदयं च परलोके)। हूम समुदितोऽसि गिरौ उपरि ॥

॥ ५ ॥ ११. एवं प्रदत्तोऽसि बहुपथिषु। प्रकटं पुण्यस्य खनिः असि। (किल कार्यं पुण्यं प्रवर्धयसि)। विरचय मनो वचः (किल सद्व्यापारतरं कुरु) १२. विश्वेषु च उपरि स्कंधेषु विश्वासु च उपरि शाखासु विश्वेषु च उपरि पल्लवेषु ॥

॥ ६ ॥ १३. हूमः समुन्मिलति स्तूयमानः[70]। एवं ना यस्तं स्तौति विजयवत्तरो भवति ॥ १४. हीनतमेनापि हूमसंस्कारेण[1] हीनतमेनापि हूमस्तवेन हीनतमेन अपि हूमखादेन[2] ससहस्र······देवेषु। (लघुइअस्तोऽपि[3] [71]) ॥

॥ ७ ॥ १५. प्रणश्यंति एकहेलया प्रकृष्टं कृता स्तस्माद् गृहाद् आपादः[1] [आपदः] १६. यत्र नित्यं उपश्लेषयंति[2] यत्र नित्यं उपस्तुवंति हूमं अरोग्यकरम्। १७. प्रकाशयति सौन्दर्यं[3] अरोग्यं तस्मिन् वेश्मनि एवं प्रासादे ॥

---

॥ १० ॥

॥ २ ॥ १. Thus corrected by Spiegel; $TDA_2$, $K_7$, $H_2$, $EMU_{15}$, $EMU_{17}$, $MLHL_1$ उर्द्धवाचि. २. Some MSS. नरोजसा.

॥ ३ ॥ १. $EMU_{16}$ समुदितोरसि; $K_7$, $MLHL_1$, $EMU_{15}$ समुदितो ऽसि.

॥ ४ ॥ १. Thus all. २. $EMU_{16}$, $EMU_{15}$, कर्तोऽसि. ३. $EMU_{16}$ इहिलोके.

॥ ६ ॥ १. $EMU_{15}$, $MLHL_1$, $EMU_{16}$, $EMU_{17}$, $H_2$, $K_7$, $TDA_2$ संस्करणेन. २. $EMU_{15}$, $EMU_{17}$, $H_2$, $K_7$, $TDA_2$, $MLHL_1$ खादनेन. ३. $EMU_{15}$, $K_7$, लघुऽअश्तापि; $EMU_{16}$ ससुसहस्र अस्ति देवेषु ॥ लघुऽअश्तपि; $H_2$ सहस्रदेवेषु ॥ लघुऽअस्तापि.

॥ ७ ॥ १. $MLHL_1$ आपदे. २. $TDA_2$, $K_7$, $H_2$, $EMU_{16}$, $MLHL_1$ उपाश्लेषयंति. ३. $TDA_2$, $EMU_{17}$, $H_2$, $K_7$, $MLHL_1$ सौवैम् [सौर्यम् ?].

॥ ८ ॥ १८. विश्वा यतो अन्या विद्याः क्रोधेन आश्लिष्टा[1] हिंसाशस्त्रेण । १९. ततः सा या हूमस्य विद्या पुण्येन आश्लिष्टा[2] प्रमोदेन[3] [प्रमोदिना] । (कार्यं पुण्यं मनुष्याणां प्रमोदेन धत्ते ) २०. लघ्वी[4] हूमस्य विद्या । (न किंचित्[5] भारिता [भारितरा][6] इत्यर्थः)। २१. ये यथा पुत्रं शिशुं हूमं संगृह्णन्ति मनुष्याः । ( किल प्रति यत्नं[7] कुर्वन्ति ) । २२. प्रकृष्टं तेषां तनोः हूमः प्रतिकरोति पाटवम्[12] ॥

॥ ९ ॥ २३. हूम देहि मे अरोग्याणि यैरसि अरोग्यकरः । ( किल यैः शक्तोऽसि कर्तुम् ) । २४. हूम देहि मे विजयत्वानि[1] यैरसि विजयतया हंता । २५. प्रकृष्टं ते प्रतिकरोमि मित्रत्वं स्तुतिकर्ति च । ( किल ते मित्रं[2] भवामि स्तौमि च ) ॥ ( यगः? ) [ यतः ] मित्रं स्तुतिकरं उत्तमं अददां इत्यभाषत स्वामी महाज्ञानी यं पुण्यात् यत् उत्कृष्टतरम् । ( किल अहं दीनिवाहकं उत्तमं अददां दीनेः । यतः दीनेः प्रवृत्तिः प्रभावेण दीनिवाहकस्य शक्ता[3] भवितुम् ) ॥

॥ १० ॥ २६. साधकं त्वां[1] ज्ञानिन् दाता अघटयत् क्षमालुः । ( परलोकतया ) । २७. साधकं त्वां ज्ञानिन् दाता न्यददात् [ न्यदधात् ] क्षमालुः ।

॥ ११ ॥ २८. २९. हरबुर्जे उपरि उद्ग्रतरे[1] । ( इहलोकतया ) । ततस्त्वां [त्वं] तस्मात् महत्तराणां प्रचिह्नतया विहगैः विभिन्नं[2] [ विभिन्नः ] प्रक्षिप्तोऽसि उपरि विचित्रे पारासिकस्य[3] । ( किल इअज्दिआनां[4] सुलक्षणतया )॥ ३०. ( अयं कियान् अर्थो न अलेखि ) ॥

॥ १२ ॥ ३१. ३२. ततः तेषु पवित्रनिकरेषु[1] संपूर्णजातिः समुदितोऽसि । हूम गौल्य सुवर्णवर्ण ततस्त्वं अरोग्ययुक्तोऽसि उत्तममनसः प्रमाणेन । ( यत् कियत् रोचते ) ॥ ३३. ततो मयि अस्य दुष्टस्वरस्य पश्चात् परिवर्तय मनः । ३४. ततोऽस्य नितांतं मनोमंत्रित्वं[2] यो मयि दुष्टस्वरेण आस्ते । ( किल ममाभिमुखं किंचित् निकृष्टं ब्रूते ) ॥

॥ १३ ॥ ३५. नमो हूमाय ॥ यः करोषि दरिद्रिणं तुल्यं महामनसां यथा ऋद्धिमहत्तरम् । ( यस्य किंचिनात् [ किंचनात् ] कस्माच्चित् आनंदं[1] एवं कुरुषे यथा प्रभूतात् कस्माच्चित् ) ॥ ३६. नमो हूमाय ॥ यः करोषि दरिद्रिणं तुल्यं महामनसां यथा मोइवदानां मोइवदम् । ( यस्य इअजिश्निकरणत्वात् आनंदं एवं कुर्वाणो[2] यथा मुद्राव्यापारात् पार्थिवत्वाच्च ) ॥ ३७. प्रचुरान् नरान् त्वं करोषि पृथुलतरान् निर्वाणज्ञानसहायिनः । ३८. ये त्वां नित्यं हूम सुवर्णाभ गोसंश्लिष्टं विभजन्ते ॥

---

॥ ८ ॥ १. NMRL$_1$ श्लिष्टा. २. NMRL$_1$ श्लिष्टा. ३. TDA$_2$, EMU$_{15}$, K$_7$, H$_2$, EMU$_{16}$ प्रमोदिन्ना; EMU$_{17}$, NMRL$_1$ प्रमोदिताः. ४. NMRL$_1$ लक्ष्मी. ५. EMU$_{15}$, TDA$_2$, K$_7$, H$_2$, NMRL$_1$ किंचिदपि. ६. EMU$_{16}$ भारितरा. ७. NMRL$_1$ परियत्नं.

॥ ९ ॥ १. NMRL$_1$ विययित्वानि ; MFL विययतया. २ EMU$_{16}$ मित्रो. ३. H$_2$, K$_7$ TDA$_2$ EMU$_{15}$, EMU$_{16}$, MFL शक्नोति.

॥ १० ॥ १. K$_7$, NMRL$_1$, EMU$_{15}$, Sp., EMU$_{17}$ साधक त्वां; EMU$_{16}$, TDA$_2$, H$_2$ साधकत्वं.

॥ ११ ॥ १. NMRL$_1$, TDA$_2$, EMU$_{15}$, H$_2$, EMU$_{17}$, EMU$_{16}$ उद्ग्रते [ उद्ग्रिते? ]. २. EMU$_{16}$ विभंञ विभञं. ३. Thus Sp. EMU$_{15}$, EMU$_{16}$, NMRL$_1$, TDA$_2$, K$_7$, H$_2$, पारसीक, MFL पारसीके. ४. NMRL$_1$ EMU$_{16}$, ॰अज्दानां; MFL ॰अज्ञानां [ ॰अज्दानां ].

॥ १२ ॥ १. EMU$_{16}$, NMRL$_1$, EMU$_{15}$, K$_7$, पवित्रनिर्करेषु. २. MFL मनोमन्त्रत्वं.

॥ १३ ॥ १. Some MSS. आल्हानंदं [ i. e. आल्हादनं ! ]. २. Some MSS. कुर्वाण.

॥ १४ ॥ ३९. मा मे यथा गोपताकीया[1] आशु विग्रहात् प्रचर। (यथा गोपताकीया एकस्मिन्नेव स्थाने आस्ते एवं पापकर्मिणो मे. वपुषि अभ्यागतो मा भव) ॥ ४०. प्रकृष्टं प्रब्रवीमि ते विद्याम्। (किल संग्रहं करोमि)। कामाय स्वामिनः संप्राप्नुहि। (किल मे मनसः कामं स्वामिकामेन[2] समानं कुरु) ॥ ४१. उपरि ते हूम मुक्तात्मन् मुक्तिजनने[3] ददामि इमां तनुं[4] या मे विलोक्यते शुभोदिता[5] ॥

॥ १५ ॥ ४२. अवक्षेपय[1] अपघाते श्रेणिं नृशंसानां परिभ्रष्टबुद्धीनाम्। (किल वर्गं निकृष्टानाम्)। ४३. ये मन्यन्ते (किल प्रतारयामः)। प्रतारयंतिच आचार्यंच हूमीयंच (योऽध्ययनं कुरुते यश्च इजिश्नीं कुरुते)। तान् तया प्रतारणया अपनाशय (किल अप्रकटान् कुरु) ॥ ४४. एवं यो हूमस्य उत्सवं खादनाय निवेदयति[2] (किल हूमद्रूणं न एजयति [याजयति] खादतिच) न तस्मै आचार्यं पुत्रं न दत्तेच सुपुत्रत्वम् (अन्यदपि) ॥

॥ १६ ॥ ४५. पंचसु अस्मि पंचसु नास्मि। (किल अहं पंचसु अभ्यागतोऽस्मि पंचसु नास्मि)। ४६. सुमतिनि अस्मि दुर्मतिनि नास्मि। ४७. सूक्तिनि अस्मि दुरुक्तिनि नास्मि। ४८. सुकृतिनि अस्मि दुष्कृतिनि नास्मि। ४९. आदेशिनि अस्मि। (यो गुरुं गृह्णाति)। अनादेशिनि नास्मि। (यो गुरुं न गृह्णाति[1])। ५०. मुक्तिमत्सु अस्मि दुर्गतिमत्सु नास्मि। ५१. तावत् यस्मात् यावत्[2] निदानं परलोकिनां अस्ति विभक्तिः। (अस्माकं इदं किंचित् एवम्) ॥

॥ १७ ॥ ५२. तं अभाषत जरथुश्त्रो यत् नमो हूमाय मज्ददत्ताय। उत्तमः हूमः मज्ददत्तः। नमो हूमाय (पुनः नमस्कृतिकरणेन तिरोहितः) ॥ ५३. विश्वान् हूमान् उपस्तौमि। येच शिखरेषु उपरि गिरीणां ये च अगाधेषु तोयाशयेषु[1]······स्मान······दतया दधते[2]······उपार्जयतारः······अरत्वं[3] प्रभूतं तस्मात् या नीरंग अव्यापारितेनं[4] कुरुते)। ५४. तत् अंतः यत्······धत्तात्[5] हिरण्मये उपरि टपाख[6]······मि। ५५.······करोमि जगत्यां उपरि। एवं ऋद्धिमत्तममूल्योऽसि। (किल मूल्यं······मनुष्यस्य सर्वसाधनवतः[73]) ॥

---

॥ १४ ॥ १. Most MSS. गौपताकिया. २. $EMU_{17}$ स्वामिन [:] समानं. ३. Thus $Sp_1$. $TDA_2$ $K_7$, $EMU_{15}$, $MLHL_1$, $H_2$, $EMU_{16}$, $EMU_{17}$, मुक्तिजनने:. ४. $EMU_{17}$, $K_7$, $MLHL_1$, $EMU_{162}$ तनुंवा. ५. $EMU_{17}$ निषुभोदिता (?); MFL, निशुभोदिता (?).

॥ १५ ॥ १. $EMU_{15}$ corrects *seconda manu* अपक्षेपय. २. $EMU_{16}$ निषेदयति [निषेधयति?]

॥ १६ ॥ १. Most MSS. गृह्णासि (?). २. $EMU_{15}$, $EMU_{17}$ यावत् यस्मात् यां वः (?); $EMU_{16}$ ·· तव ·· स्मात् यावत् (?).

॥ १७ ॥ १. $EMU_{16}$ तोयाशायिषु. २. $EMU_{16}$ दधते. ३. $MLHL_1$ आरत्वं; $TDA_2$ धाटत्वं; $EMU_{15}$ आटत्वं; $K_7$, $H_2$ पाटत्वं; $EMU_{17}$ आद्यत्वं (?). ४. $TDA_2$, $EMU_{16}$ अधापारितेनं; $MLHL_1$, MFL अध्यापारितेन; $EMU_{15}$, $H_2$ अधापारितेनं. ५. $EMU_{16}$ धात्रात् [पात्रात्?]. ६. $EMU_{16}$. उपरिपरिटपाख. ७. $K_7$ सवर्णसाधनतवः [सुवर्णसाधनवतः?].

॥ १८ ॥ ५६. इमास्ते हुम गाथाः । ( एतस्याः [74]प्रकृते[1]: ) । इमाः सन्ति स्तुतयः । ( इति[2] स्तुतिस्ते इयं[3] प्रकृतिः ) । ५७. इमाः सन्ति याः काश्चित् आस्वादनाः । ( निरंगेण वारत्रयं स्वादनं किंचित् तस्य च निदाने त्यजनम् ) । इमाः सन्ति सत्योक्ताः वाचः (...... तास्ते[4] इयं प्रकृतिः.........[75]५८.[76]५९. सौंदर्यं[5] विजयत्वं च उपरि-अरोग्यया [ अरोग्यां ] अरोग्याय ( किल शांतिर्म्[6] कुरु ) ॥

॥ १९ ॥ ६०. इमां त्वं च [ त्वत्तः ? ] अहं च प्रकृष्टं प्रभुवे ते विद्याम् ( किल संग्रहं करोमि ) । निर्मलां प्रब्रूहि ते विद्याम्[1] लघुतरां समुदीरय विद्याम् (शीघ्रतरं इत्यर्थः ) । ६१. विजयिनः भवन्ति ते[2] स्तोतारः सर्वं यत् गाथाभिः उक्तम्[3]

॥ २० ॥ ६२. यत् गवां प्रणामिनः गोभ्यः प्रणामः । ( यः गोभ्यां [ गोभ्यः वा गवां ] प्रणामी उदकेन गोचारेण[1] तस्य गोभ्यः प्रणामः क्षीरं च वत्साश्चं[2] ) । ६३. गोभ्यो वाक्यं[3] गोभ्यो विजयः । ६४. गोभ्यः खाद्यं गोभ्यो वस्त्रम् । ( यथा गाथाभिरुक्तं यत् यो गोपशूनां प्रणामी तस्य गोपशुभ्यः प्रणामः । अत्रापि इदं ब्रवीमि येन[a] विजयवत्तरो भवति ) । ६५. गवां विरचयिता पशुपाता सोऽस्मभ्यं खाद्यं स्फीतयति [ स्फाययति ] ( किल असत्तनुं उद्वर्धयति[4] ) ॥

हूमं सुवर्णाभं उन्नतं आ० ॥ हूमं फ्रास्मेम् वृद्धिदं भूसंभूतेः आ० ॥ हूमं दूरमृत्युं आ० ॥ विश्वान् हूमान् आ० ॥ जरथुश्त्रस्य स्पितामपुत्रस्य इह पुण्यात्मनो पुण्यं[5] च वृद्धिं च आ० ॥ ( आराधनावाक् ).

---

## हा ११.

॥ १ ॥ १. त्रयः परिस्फुटं पुण्यात्मानः आशीर्वचसा आक्रोशयन्ति । ( किल शापं कुर्वन्ति ) । २. गौश्च अश्वश्च हूमश्च । ३. गौः गृहीतारं [ ग्रहीतारं ] आक्रोशयति । ( यो अन्तः संग्रहणे आस्ते ) । ४. त्वं भव अप्रसूतिभाक् एवं दुःकीर्त्या उपगूहितः । ५. यो मे लक्ष्मीं[1] न वर्षसि ( अनुरूपेभ्यः ) । ६. तन्मां त्वं स्फीतयसि [ स्फावयसि ] कलत्राय वा पुत्राय वा स्वीयाय वा दुष्टोदराय ॥

---

॥ १८ ॥ १. $EMU_{16}$ एतस्मा (?) प्रकृतिः; $EMU_{17}$ एतस्मा (?) प्रकृते; $H_2$ $TDA_2$ $EMU_{15}$ एतस्मा (?) प्रकृते $MLHL_1$ एतस्मात् प्रकृते; MFL एतस्मात् प्रकृति. २. Thus Sp.; $EMU_{17}$, $H_2$, $MLHL_1$, $TDA_2$ ८°मां इति स्थितिस्ते. ३. $K_7$, $TDA_2$, $EMU_{15}$ इं. ४. $K_7$, $EMU_{16}$, $EMU_{17}$, $H_2$, $MLHL_1$, $EMU_{15}$ नस्ते. ५. Most MSS. सौदर्यं. ६. Corrected : Sp. शिंतम् ; $K_7$, $EMU_{17}$, $EMU_{15}$, शिंत्वं; $TDA_2$, $H_2$, $MLHL_1$ शित्वं; MFL शक्तित्वं.

॥ १९ ॥ १. $TDA_2$, $MLHL_1$, $H_2$ $EMU_{17}$, $K_7$ विवष्याः (?); $EMU_{15}$ ते विद्या विवख्याः; $EMU_{16}$ वेविद्याः. २. $MLHL_1$, $EMU_{15}$, $H_2$, $EMU_{17}$, $EMU_{16}$, $TDA_2$, $K_7$ त्वां. ३. All MSS. give सर्वं यत् यथाभिरुक्तम् [ यथा आभिर्गाथाभिरुक्तं].

॥ २० ॥ १. $EMU_{16}$ गोवारेण. २. $K_7$ वृसाश्च (?); $MLHL_1$ वसाश्च. ३. $EMU_{16}$ नाक्यं (?) ३ a. $MLHL_1$, $TDA_2$, $EMU_{17}$, $H_2$ $EMU_{15}$ $K_7$ योति वाक्यं योति विजयवत्तरो. ४. $K_7$ हुर्थद्वयति (?); $EMU_{16}$ उहुर्थद्वयति (?); $EMU_{17}$ उर्थद्वयंति (?) $H_2$ हुर्थउद्वयति (?); $EMU_{15}$, $MLHL_1$ हुर्थद्वयति (?) $TDA_2$ हुर्थउद्वयति, MFL उद्वयति. ५. $EMU_{15}$ कार्यं हुपुण्यं, $EMU_{15}$ पुण्यं कार्यं.

॥ ११ ॥

॥ १ ॥ १. $MLHL_1$, $EMU_{15}$ $H_2$, $EMU_{17}$, $EMU_{16}$, $TDA_2$ लक्ष्म्या.

॥ २ ॥ ७. अश्वो नेतारं आक्रोशयति। ८. मा भव साधकानां वाहयिता। (साधकाः प्रधानकार्यिणः अश्वाः)। मा साधकानां उपरि उपवेष्य (उपवेष्टा)[1]। मा साधकानां निधाने[2] निहितः। (किल धर्तुं मा शक्तो भव)। ९. यो मे प्राणेन न उपक्रमसि। (कार्यन्याये वा[3])। १०. प्रचुरेषु प्राप्तेषु समूहेन प्रचुरेषु नरेषु कृतकार्येषु ॥

॥ ३ ॥[77] ११. हूमः भोकारं[1] आक्रोशयति। १२. एवं भव अप्रसूतिभाक् एवं दुःकीर्त्या उपगूहितः। १३. यो मे[2]………१४. यथा……१५. नव अस्मि……अहं यत् हूमः पुण्यः दूरमृत्युः ॥

॥ ४ ॥ १६.……उच्चैः उपरि हूमः द्रूणः……अहुर्मज्दं……समं जिह्वायां……

॥ ५ ॥ १७. यत् मां तत् द्रूणं जघान वा पीडयति वा उप वा……यत् मयि [मे] ददाति अहुरमज्दः……समं जिह्वायां……

॥ ६ ॥ १८. न नं अस्मिन् किल गृहस्य…… आचार्याः…न च……१९. प्रकृति तं[2] अस्मिन् किल गृहस्य प्रासवतं[3] चिह्नं च माद्यं च निंदितारः संपूर्णया[4]……

॥ ७ ॥ २०. शीघ्रम्। (उत्कृष्टतरं विदेशयेत्[1])। पशून् व्यापादयेत् दृढतमः हूमोत्सवः। (हूमद्रूणः प्रकाटयेत्[2]……२१. मा ते संख्याबंधः [शृंखलाबद्धः] हूमो बंधेत् [?] तं तुरस्का अक्रुष्णा त्रिभागमध्यपृथिव्यां सन्ति। (तथा ते बंधनं न भवति[3])। २२.……

॥ ८ ॥ २३. तं अभाषत जरथुश्त्रो यत् नमो हूमाय। उत्तमो हूमो मज्दद‌त्तो[1]। नमो हूमाय ॥

॥ ९ ॥[78] २४. यत्[1] अस्मत्तः एकम्। (किल पुण्यं यत् मनुष्यैः कुरुते)। एवं तत् द्विगुणं त्रिगुणं चतुर्गुणं पंचगुणं षड्गुणं सप्तगुणं अष्टगुणं नवगुणं दशगुणम् (स्वीयं शक्नोति भवितुम्) यत् युष्मत्तः प्राप्तं अस्ति (इदं शुभम्) ॥

---

॥ २ ॥ १. MLHL$_1$, उपवष्या K$_7$ उपवेष्य TDA$_2$ H$_2$ उपवेश्य. २. TDA$_2$, H$_2$, EMU$_{16}$ निधापय MLHL$_1$ निधापयं K$_7$ निधापयः EMU$_{16}$ निधा ...EMU$_{17}$ निधायपय. ३. K$_7$ EMU$_{17}$ H$_2$ TDA$_2$ कार्यन्यायेवा.

॥ ३ ॥ १. MLHL$_1$, K$_7$, EMU$_{17}$, EMU$_{15}$ रोत्कारं, [आरोत्कारं ? cf. Gujarati આરોગવું to eat ] Sp. सेत्कारं a clerical mistake, से for रो. २. From here up to Para. ॥ ९ ॥ the MSS. give mutilated Sanskrit translation or have blank pages.

॥ ६ ॥ १. EMU$_{15}$ निना २. EMU$_{15}$ प्रकृति तं. ३. EMU$_{15}$ प्रस्वेत्. ४. EMU$_{15}$ संपूर्ण याति [जाति] णुर्कि (?); EMU$_{17}$ शीघ्रं। संपूर्ण याति [जाति] धुर्किदितारः (?)। उत्कृष्टतरं विंदारयेत [विदारयेत] पशू [पशुं] व्यापादयेत्। दृढतमः होमोत्सवः हुमहूतः [व्हुतः] प्रकटायते सुव्यवसायिन्। मा ते संख्या [शृंखला] बंधः हुमो बंधेत् [बंधयेत्].

॥ ७ ॥ १. EMU$_{15}$ विदारयेत्. २. EMU$_{15}$ प्रकटायते सुव्यवसा. ३. EMU$_{15}$ इदं तूरतुरष्का अत्र (?) प्या [अफ्रासिआब] तृ [त्रि] भागमध्ये पृथिव्या [:] संति तथा ते बंधनं न भवति ॥ EMU$_{17}$ य इदं त्वर [तुर?] तुरष्का अत्तद्त्र (?)[अफ्रासीआब?]तृ [त्रि]भागमध्य पृथिव्यां संति तथा ते बंधनं न भवति।

॥ ८ ॥ १. MLHL$_1$; EMU$_{15}$; K$_7$; EMU$_{17}$ मज्ददातो.

॥ ९ ॥ १. TDA$_2$; H$_2$ यो. २. EMU$_{15}$ ; K$_7$; EMU$_{17}$ मनुष्ये.

॥ १० ॥ २५. उपरि ते हूम मुक्तात्मन् मुक्तिजनन दधामि इमां तनुं या मे विलोक्यते शुभोदिता । २६. यत् स्यामि हूमविद्यायै[2] [यत् स्यान्मे होमविद्यायै] । ( किल तत् परिज्ञानं यावन्मात्रंचै[3] ) । उत्तमाय हूमाय मुक्तये च । ( किल निर्मलत्वाय ) । २७. प्रकृष्टं मह्यं त्वमपि च देहि हूम मुक्तिमान् [ मुक्तिमन् ] दूरमृत्यो उत्कृष्टं भुवनं मुक्तात्मनां रोचिष्मान्[4] [ रोचिष्मत् ] विश्वशुभम् ॥ [ अशेम् वोहू ३ ]

॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ [ यथा हा ८§§५,६,७,८ ]

॥ १७ ॥ ( हा १२ ) १. प्रकृष्टं स्तौमि सुमतानि च सूक्तानि च सुकृतानि च । मनसा च वचसा च कर्मणा च[1] । २. अधिकं ग्रहणं करोमि समस्तानां सुमतानां सूक्तानां सुकृतानां च । ३. परित्यागं करोमि समस्तानां दुर्मतानां दुरुक्तानां दुःकृतानां च ॥

॥ १८ ॥ ४. प्रकृष्टं युष्मदूभ्यं दक्षिणयामि । ( किल दक्षिणीकरोमि ) । हे अमिशास्पिता । ५. इजिस्नीं[1] च नमस्कृतिं च । ६. प्रकृष्टेन मनसा प्रकृष्टेन वचसा प्रकृष्टेन कर्मणा प्रकृष्टेन ऊहेन । ( किल प्रज्ञोन्मेषेण[2] ) । प्रकृष्टं तनुश्चं[3] [ तनोश्च ] निजं (च) जीवम्[4] । ( किल स्वाधीनतया युष्माकं धारयामि ) । ( स्वाधीनतया युष्माकं धारणं एवं किल यदि तनुः आत्मार्थे दातुं योग्यं तत् विशेषेण ददामि[79] ) ॥ [ स्तौमि पुण्यं ] ॥

---

## हा १२.

॥ १ ॥ ( हा १३ ) १. निंदयामि देवान् । ( अहो समानं एव इदं यत् चेत्[1] पुण्यं स्तौमि[1a] देवाः स्वयं एव निंदिता भवन्ति तथापि तान् प्रकृष्टतया विशेषेण निंदयामि ) ॥ प्रब्रवीमि माज्दईअस्नीं जरथुस्त्रियां विभिन्नदेवां होर्मिज्दन्यायवतीम् ( किल मध्ये पाणकर्मिणां[2] ब्रवीमि ) ॥ २. स्तौमि अमरान् महत्तरान् आराधये अमरान् महत्तरान् । ( किल अंतरिजिस्नौ स्तौमि ) ॥ ३. स्वामिने महाज्ञानिने[3] उत्तमाय उत्तमप्रमाणाय विश्वां विभूतिं आस्वादयामि । ( किल समग्रां स्वाधीनतया [ स्वाधीनतायां ] होर्मिज्दस्य ददामि[4] ) । ४. ५. पुण्यात्मनः शुद्धिमतः श्रीमतः । यस्य यतो या काचित् उत्कृष्टतमता । ( किल यां कांचित् उत्कृष्टतमतां असौ ददौ ) । यस्य गोपशवः यस्य पुण्यं यस्य रोचिः[5] यस्य च रोचिःसंश्लिष्टानि[6] शुभानि । ( किल सर्वं शुभं असौ ददौ ) ॥

---

॥ १० ॥ १. $MLHL_1$ योविलोक्यतानि $EMU_{17}$, $H_2$, MFL, $K_7$, $TDA_2$ योमे विलोक्यतानि $EMU_{16}$ यामिविलोकानि. २. $MLHL_1$, $TDA_2$, $K_7$, $H_2$, $EMU_{17}$, $EMU_{16}$ यवस्यामि हुम विद्यायै MFL यवस्यामि हूम विधि. ३. $MLHL_1$, $TDA_2$, MFL, $H_2$, $EMU_{17}$ यावन्मेत्ताच $K_7$ यावन्मोक्ताच $EMU_{16}$ यावन्मत्ताच. ४. $EMU_{16}$ सदोद्द्योतम्.

॥ १७ ॥ १. $EMU_{16}$ मनसा वचसा कर्मणा च.

॥ १८ ॥ १. $EMU_{17}$, $EMU_{16}$ इअजिश्नंच $H_2$, $K_7$, $TDA_2$, $MLHL_1$, $EMU_{15}$, ७९अजश्निंच MFL ८८जश्निंच. २. $EMU_{17}$, $H_2$, MFL, $TDA_2$, $MLHL_1$, $EMU_{15}$, $EMU_{16}$, प्रज्ञोन्मेषेण Sp. प्रज्ञान्वेषणेन. ३. $EMU_{16}$, $EMU_{17}$, $H_2$, MFL, $K_7$, $TDA_2$, $MLHL_1$, $EMU_{15}$, तनुश्च. ४. $EMU_{16}$ निजं जीवं.

---

॥ १२ ॥

॥ १ ॥ १. $EMU_{15}$ यचित्. १a. $EMU_{16}$ स्तुतम्. २. $EMU_{15}$, $K_7$ ऽपापकर्मिणां $H_2$, $EMU_{17}$ पापकर्मणां. ३. $EMU_{15}$, $MLHL_1$, $K_7$, $EMU_{17}$ स्वामिनो महाज्ञानिनो. ४. $EMU_{15}$, $K_7$ दधामि $MLHL_1$ दधामि. ५. Sp. रुचिः. ६. $MLHL_1$, $K_7$, $EMU_{15}$ रोचिषि श्लिष्टानि.

॥ २ ॥ ६. पृथ्वीसंपूर्णमानसतां[१] [पृथ्वीं संपूर्णमानसतां] उत्तमां निमंत्रयामि सा: मेऽस्तु । (किल मे वपुषि अभ्यागता[80] अस्तु[२]) ॥ ७. उच्चैः गोपशून् स्तौमि स्तेनेभ्यः[३] हठिभ्यश्च[४] । (किल एषां न स्वाधीनाः । स्तेनः चौरः हठी बलात्कारी) । ८. उच्चैः मज्दइअस्नानां[४a]...... [वेश्मनां] हानिभ्यश्च उद्वासेभ्यश्च[५] । (किल न युज्यते कर्तुम्) ॥

॥ ३ ॥ ९. प्रकृष्टं मनसा दक्षिणीभवामि कामेन[१] समागंतृभ्यः कामेन च सहायितृभ्यः । (किल ये अभीष्टतया दीनौ समायान्ति उपरि च दीनौ निषीदंति तेषां उपरि मनो दक्षिणीकरोमि) । १०. ये उपरि अस्यां जगत्यां गोपशुमत्तयासु निवसंति[२][81] [०मत्तया संनिवसंति] । (चिह्नं ब्रूते) ॥ ११. नमस्कृतिं पुण्यां[३] [पुण्याय] उच्चैः ददामि । (किल तनुं दीयेन [देयेन] ददामि[४]) । उपरि च एवं स्तौमि । (किल किंचित् यत् मनोहरतरम्) ॥ १२. न तस्मात् (यतो न युज्यते कर्तुम्) । हानितयां[४a] न च उद्वासतयां[५] प्रचरामि मज्दइअस्नानां उपरि वेश्मनाम् । १३. न च तनोः न च जीवस्य च वल्लभतायै । (न च भव्यजी[82]वनये[६] न च भूरिं[७]जीवनये न च दीनीतः[७a] अन्यथा तिष्ठामि) ॥

॥ ४ ॥ १४. ऋते देवेभ्यः[१] विदुष्टेभ्यः अनुत्तमेभ्यः......भ्यः अन्यायतरेभ्यः[२] [अन्यायरतेभ्यः][83] निकृष्टदानेभ्यः स्वामित्वं ब्रवीमि । (किल देवाः स्वामित्वे न युज्यते धर्तुम्) । १५. सतां दुर्जनतमेभ्यः सतां क्षुद्रतमेभ्यः । सतां अधमतमेभ्यः । १६. ऋते देवेभ्यः ऋते देवसहायिभ्यः । (देवीभ्यः) । ऋते राक्षसेभ्यः ऋते राक्षसीभ्यः । ऋते केभ्यश्चित् सतां निकृष्टतमेभ्यः । १७. विशेषेण मनसा विशेषेण वचसा विशेषेण कर्मणा विशेषेण प्रकाशतया । ऋते यतस्तेभ्यः स्वामित्वं ब्रवीमि ये एवं दुर्गतिनः छेदकाः संति ॥

॥ ५ ॥ १८. एवं एवंचित् स्वामी महाज्ञानी जरथुश्त्रं प्रत्यभाषत । १९. विश्वेषुच संप्राप्तेषु[१] [संप्रश्नेषु] विश्वेषुच समायोगेषु यान् अपृच्छत् होर्मिज्दात् जरथुश्त्रः (तस्य इदं जगाद यत् देवाः स्वामित्वे न युज्यते धर्तुम्) ॥

---

॥ २ ॥ १. Thus Sp.; $EMU_{15}$, $K_7$, MFL प्रथ्वी [पृथ्वी] संपूर्णमानसां $TDA_2$, $MLHL_1$, $EMU_{17}$, $H_2$ प्रथ्वीसंपूर्णमानसां $EMU_{16}$ पृथ्वीं संपूर्णमानसां. २. Sp. अस्ति. ३. $K_7$, $TDA_2$, $MLHL_1$, $EMU_{17}$, MFL, $EMU_{15}$ स्तेयेभ्यः. ४. $EMU_{15}$, $K_7$, $TDA_2$, $MLHL_1$, $EMU_{17}$ हठेभ्यः MFL हठेयेभ्यश्च. ४a. Insert वेश्मनां which word Neriosengh seems to have inadvertantly omitted. ५. $K_7$ उद्वारेभ्यश्च.

॥ ३ ॥ १. $EMU_{16}$ कामे समागंतृभ्यः कामेनचासयितृभ्यः; MFL कामेन समागतेभ्यः कामेन सहापितृभ्यः; $EMU_{17}$ कामेन नासहायितृभ्यः; $EMU_{15}$ कामेनचासहायितृभ्यः [helpless], in Gujarati on the margin आशावंत desirous, needy. २. $EMU_{16}$ °शुमत्तयासु निवसंति MFL गोपशुमत्या सुनिवसंति $EMU_{17}$, $K_7$ $TDA_2$, गोपशुमत्तया सुनिवसंति. ३. $EMU_{16}$ पण्याय $H_2$ $MLHL_1$ पुण्यान [पुण्यान्]. ४. $H_2$, MFL तनुं ददामि $EMU_{17}$, $MLHL_1$ तनुंदिददामि [देददामि ?]. ४a. $EMU_{16}$ हाहानितया $H_2$, $TDA_2$, हानितयानिचसतया MFL हानितयानिश्वस्तया $K_7$, $EMU_{17}$, $MLHL_1$ हाहानितया निचसतया. ५. $EMU_{16}$ नचसतया. ६. $H_2$, MFL नचभव्यजीव $EMU_{17}$०जीवा. ७. $K_7$ तूरि $EMU_{15}$ त्वरि (?). $EMU_{16}$ नचात्वरिजीव. ७a. $H_2$ न दीनितो.

॥ ४ ॥ १. $EMU_{15}$ inserts on the margine विदुष्टेभ्यः with Persian "*bad*" under it. २. $EMU_{15}$, $TDA_2$ अन्यायरतेभ्यः.

॥ ५ ॥ १. $H_2$, MFL, $K_7$, $MLHL_1$, $EMU_{16}$ संप्रेषेषु (?) [संप्रश्नेषु]; $EMU_{17}$ संप्राप्तेषु.

॥ ६ ॥ २०. एवं एवंचित् जरथुश्त्रो देवेभ्यः स्वामित्वं ऋते अब्रवीत् । २१. विश्वेषुच संप्रासेषु [ संप्रश्नेषु ] विश्वेषु च समायोगेषु यान् अपृच्छत् होर्मिज्दात् जरथुश्त्रः । ( सदैव यत् संप्रणत्वात्[1] [ संप्रश्नत्वात् ] व्यावृत्त्य समागतः असौ इदं जगाद यत् देवाः स्वामित्वे न युज्यते धर्तुम् ) ॥ २२. एवं अहं यत्[2] [ अहंचित्=अहमपि ] यो मज्द्दअस्नो जरथुश्त्रीयो देवेभ्यः स्वामित्वं ऋते ब्रवीमि यथा तेभ्यो ऋते अब्रवीत्[3] यो मुक्तात्मा जरथुश्त्रः॥

॥ ७ ॥ २३. कामो नः अपाम् । ( किल यः अपां कामः सोऽस्माकं कामः ) । कामो नो वनस्पतीनाम् । कामो नो गोपशूनां उत्तमदानानां कामो नः स्वामिनो महाज्ञानिनः यो गां ददौ नरं पुण्यात्मानम् । २४. कामो नो योऽभूत् जरथुश्त्रस्य कामो नो राज्ञो गुस्तास्पस्य कामो नो फेरशौश्त्रस्य जामास्पस्य कामो नः केषांचित् लाभमतां प्रकटकर्मणां[1] पुण्यात्मनाम्।

॥ ८ ॥ २५. तेन कामेन च न्यायेन च मज्द्दअस्नोऽस्मि । ( किल नरेषु उत्तमनरो भवामि ) । माज्द्दअस्नीं जरथुश्त्रियां प्रकाशयामि । ( किल अंतः जगति प्रवर्तमानां करोमि ) २६. आस्तिकश्च प्रवक्ताच[1] ॥

॥ ९ ॥ २७. आस्तुवे सुमतं मनसा । आस्तुवे सूक्तं वचसा । आस्तुवे सुकृतं कर्मणा । आस्तुवे दीनिं माज्द्दअस्नीं परित्यक्तप्रतिवादां संन्यस्तशस्त्राम् । ( इदं एतस्मात् प्रकटं यत् अप्रतिवादगुरुत्वे उपरि केषांचित् न युज्यते गंतुं यश्च अप्रतिवादगुरुत्वे उपरि आयाति तेन सह प्रतिवादगुरुत्वं शुद्धतया युज्यते कर्तुम्)। २८. षुअएतुअद्थवर्ती [खुअ०] पुण्यात्मनीम् । ( षुअएतुअदथं एतस्याः प्रकटं किल युज्यते एव कर्तुम् ) । या वर्तमानेभ्यश्च अतीतेभ्यश्च[84] महत्तरा च उत्कृष्टतरा च [ सुन्दरतरा च ][85] या होर्मिज्दीया जरथुश्त्रिया । ( किल अनयोः स्वाधीना ) ॥ २९. स्वामिने महाज्ञानिने विश्वां विभूतिं आस्वादयामि ॥ (किल समग्रां स्वाधीनतया होर्मिज्दस्य दधामि) ॥ एषा अस्ति दीनेः माज्द्दअस्न्याः आस्तिकता । ( कृतनिश्चयता परिपूर्णा ) ॥

---

## हा १३.

॥ १ ॥ ( हा १४ ) १. स्वामिने महाज्ञानिने [ स्वामिनं महाज्ञानिनं ] ब्रवीमि किल गृहस्य गृहपतिं गुरुताम्[1] [ ०पतेर्गुरुं तं ][86] ( सप्तनरनारीयुग्मं गृहम् ) । वीसस्य वीसपतिं[3] गुरुताम्[1] । ( पंचदशनरनारीयुग्मं वीसम् ) । जंदस्य जन्दपतिं गुरुताम्[1] । ( त्रिंशन्नरनारीयुग्मं जन्दम् ) । ग्रामस्य ग्रामपतिं गुरुत्वम्[1] । ( पंचाशन्नरनारीयुग्मं ग्रामम् ) ॥

---

॥ ६ ॥ १. $H_2$ MFL, $EMU_{17}$, $MLHL_1$, $EMU_{16}$ संप्रणत्वात् (?) [ संप्रश्नत्वात् ]. २. Thus some MSS., others चित्. ३. Some MSS. मेब्रवीमि (?) [ मेऽब्रवि ? ].

॥ ७ ॥ १. $MLHL_1$, $EMU_{15}$, $TDA_2$, प्रकटकर्म्मिणां.

॥ ८ ॥ १. Sp. प्रवृत्ता.

---

॥ १३ ॥

॥ १ ॥ १. $TDA_2$, $MLHL_1$, $EMU_{15}$, MFL, $H_2$, $K_7$ गुरुतं [ गुरुत्वं ] or गुरुस्त्वं or [ गुरुं त्वं ]; $EMU_{17}$, गुरुतरं. २. Sp. पशु. ३. $K_7$ वीसपतिं.

२. अंगनानां गुरुं ब्रवीमि दीनिं माज्द्इअन्नीं अशिशवंघलक्ष्मीं पारिंद्नाज्नीं च । ( पारिंद्नाज्नी निखातरक्षका ) । ३. यां च ह्विपद्चारिणीं पुण्यात्मनीं । (किल नारीं च शोभनां शुद्धहृदयाम् ) । ( अंगनानां गुरुं ब्रवीमि ) । एनां च जगतीं या अस्मान् बिभर्ति ॥

॥ २ ॥ ४. मित्रं निवेदिततनुं गुरुं ब्रवीमि अग्नेः स्वामिनो महाज्ञानिनः । ( यः होर्मिज्द्मित्रः तं गुरुं अग्नौ[१] [ अग्नेः ] ब्रवीमि यतः तस्य वपुषि अभ्यागतोऽस्ति ) ॥ ५. बहुक्लेशहनतमम्[३] [ बहुक्लेशसहिष्णुतमं ][37] कार्यकर्तृतमं च नरेभ्यः पुण्यात्मभ्यः सस्यं[3a] स्फीतयतां ( कुटुंबिनां )[3b] गुरुं ब्रवीमि ॥ ६. लघुहस्ततमं पुण्येन शरेणं ( शस्त्रेण ) क्षत्रियाणां गुरुं ब्रवीमि ॥

॥ ३ ॥ ७. महत्तरं वेत्तारं दीन्याः माज्द्ईअस्न्याः आचार्याणां गुरुं ब्रवीमि परिज्ञापकतमं च तेभ्यः ॥ ८. गुरुं ब्रवीमि गुरौ च संतिष्ठामि अमरेभ्यश्च महत्तरेभ्यः लाभमत्तमेभ्यश्च ज्ञानितमं सत्यवाकृतमं उपरिसमागंतृतमं बहुबुद्धिकर्तृतमं च ॥ ९. महत्तरं महामानसं ब्रवीमि दीनेः माज्द्ईअस्न्याः आचार्याणां च क्षत्रियाणां च सस्यं च स्फीतयतां च कुटुंबिनां गुरुम् । ( स महामनाः यो दीनौ विषये कस्यापि साहाय्यं न अपेक्षते ) ॥

॥ ४ ॥ १०. प्रकृष्टं युष्मभ्यं हे अमराः महत्तराः सुराजानः सुदानिनः ददामि तनुंचित्[१] निजं च जीवम् । ११. प्रकृष्टं विश्वाः सुजीवनीः[२] ( समग्रं मूलं फलम् ) ॥ १२. एवं मनसा मन्ये एवं समुच्चरामि एवं च समाचरामि ॥

॥ ५ ॥ १३. एवं यथा त्वं तेन[१] ह्वितयेन[२] स्वामिन् महाज्ञानिन् मनसि वर्तसे[३] ( किल तत् ह्वितयं परलोकीयं इहलोकीयं किंचित् यत् ते मनसि ) । वचसि च वर्तसे ( किल किंचित् यत् ते वचसि ) । दाने च कर्मणि च ( किल किंचित् यत् ते दाने च कर्मणि च ) यत् उत्तमम् ।१४. एवं ते ददामि (आत्मने[3a] ) [आत्मानं] । एवं च आस्वादयामि (अपरेषाम् ) । एवं ते आगमनेन आराधये ( दीन्यागतः सन्[४] ) । १५. एवं प्रणामय माम् ( किल शुभेन इहलोकीयेन मां प्रणामिनं कुरु ) । एवं प्रणये[५] मां त्वं[६] महाज्ञानिन् स्वामिन् ( किल मे ऋणं त्वया[६] भूयात् ) ॥

---

॥ २ ॥ १. $K_7$, $EMU_{15}$ अग्नो. २. $K_7$, $EMU_{15}$, अग्नो. ३. $MLHL_1$, $K_7$, $EMU_{17}$, $EMU_{15}$, बहुक्लेशहष्ण [ हर्ष ? ] तमं ? $EMU_{16}$ बहुक्लेशहष्णुतमं [ बहुक्लेशसहिष्णुतमं]. ३a. $EMU_{16}$ स्तभ्यं (?); Some MSS. सत्यं. ३b. Most MSS. कुटंबिनो cf. Gujarati કણબી. ४. $EMU_{15}$ शरेण.

॥ ३ ॥ १. $EMU_{15}$ कुर्वतियां (?) $K_7$ कुटंबिज्ञांतियां (?) $MLHL_1$ कुटंबितयां $EMU_{17}$ कुबंतियां (?).

॥ ४ ॥ १. $MLHL_1$ तनुंच. २. $K_7$ सुजीवनः.

॥ ५ ॥ १. $EMU_{15}$ स्वत्तोन. २. MFL, $H_2$, $TDA_2$ $EMU_{15}$ ह्वितियेन $EMU_{17}$ ह्वितीयेन. ३. $EMU_{15}$, $EMU_{17}$, MFL, $H_2$, $TDA_2$, वर्त्तते. ३a. $H_2$ $EMU_{17}$, $TDA_2$, $K_7$ आत्मानं. ४. MFL, $H_2$, $TDA_2$, $MLHL_1$ $K_7$, $EMU_{15}$ सए $EMU_{17}$ सण. ५. $MLHL_1$, $EMU_{15}$, $EMU_{17}$ मे प्रवर्णच $H_2$, MFL मे प्रविणंच $TDA_2$ प्रवीणंच $K_7$ प्रणांच. ६. $EMU_{17}$, $MLHL_1$, $EMU_{15}$ महत्व(?) MFL, $H_2$, $TDA_2$ महत्वय $K_7$ महत्तवं (?)

॥ ६ ॥ १६. उत्तमया स्वाधीनतया स्वाधीनप्रवृत्त्या च ( किल यत् ते स्वाधीनोऽस्मि त्वयि च संतिष्ठामि ) उत्तमया च भक्त्या त्वयि परिप्राप्नोमि ( किल भक्तिं वस्तुनि[1] ते [भक्तिं च स्तुतिं च ते] उत्तमां करोमि ) ॥ १७. उत्तमेन च स्वामित्वेन ( किल स्वामित्वं वस्तुनि उत्तमं करोमि ) । उत्तमेन च संपूर्णमनसा ( किल वस्तुनि उत्तमे पूर्णमनाः भवामि ) ॥

॥ ७ ॥ १८. गोपशूनां[1] उत्तमदानानां गइओमर्द्स्य[88] मुक्तात्मनो वृद्धिं[89] आराधये ॥ १९. जरथुश्त्रस्य स्पितमपुत्रस्य इह पुण्यात्मनो पुण्यं च वृद्धिं[89] च आराधये ॥

( आराधना वाक्[90] ) । [ अहुनवर ४ अशेमूवोहू ३ ] अहुनवरं आ० । पुण्यं उत्कृष्टतरं सुंदरं अमरं महत्तरं आराधये । फ्रउरइतीं[2] प्रकृतिं[91] आ० । प्रवक्तृत्वं आस्तिकत्वं यत् दीनेः माज्दइअस्न्याः आ० ( सः अदृश्यमूर्तिः यत् दीनौ समायान्ति दीनौ च आस्तिका भवन्ति प्रभावेण अस्य ) ॥ ( आराधना वाक् ) ॥

---

## हा १४.

॥ १ ॥ ( हा १५ ) १. प्रतिकुर्वे युष्मत्तः हे अमराः महत्तराः स्तुतिं च मुख्यतां च आह्वानं[1] च आराधनं च प्रकृष्टाध्ययनं च उपरिसंग्रहणं युष्माकं आराधनाय नमस्करणाय ये अमराः महत्तराः स्थ । २. अस्माकं उत्तमोहाय[92] मुक्तये च ये च लाभमंतः पुण्यात्मनोऽस्मः ॥

॥ २ ॥ ३. प्रकृष्टं युष्मद्भ्यं हे अमराः महत्तराः सुराजानः सुदानिनः ददामि तनूंचित् निजं च जीवम् । ४. प्रकृष्टं विश्वाः सुजीवनीः । ( समग्रं मूलं फलम् ) ॥

॥ ३ ॥ ५. अनेन प्राणेन च बरेस्मनेन च विश्वान् पुण्यात्मनः इअज्दान् समीहे इजिश्नौ । विश्वान् पुण्यगुरून् समीहे इजिश्नौ ।६. हाऊअनायाः उपरि गुरुतायाम् । साऊअंघायाः वीसीनाह्नयाश्च प्रकृष्टं गुरुतायाम् । गुरूणां विश्वेषां महत्तराणां उपरि गुरुतायाम् ॥

॥ ४ ॥ ७. ८. ९. १०. ( यथा उपरि लिखितम् )[93] ॥

---

## हा १५.

॥ १ ॥ ( हा १६ ) १. शिक्षया[1] च ( किल किंचित् यत् सदाचारि शिक्षितोऽस्मि ) साहाय्येन च ( अमराणाम्[2] ) प्रमोदेन च ( स्वीयेन ) २. अमरान् महत्तरान् उत्तमेन

---

• ॥ ६ ॥ १. $K_7$, $TDA_2$, $MLHL_1$, $EMU_{15}$, $H_2$, MFL, $EMU_{17}$ भक्तिं च स्तुतिं.

॥ ७ ॥ १. Sp. पशूनां. २. $K_7$, प्रकृष्टंफ्रऽती. ३. $TDA_2$, $MLHL_1$, $H_2$, MFL, $EMU_{17}$, $K_7$ वतु (?) $EMU_{15}$ वस्तु.

---

॥ १४ ॥

॥ १ ॥ १. Sp. आहवननांच $H_2$ ,$TDA_2$, $EMU_{15}$, $EMU_{17}$ आह्वाननंच $MLHL_1$ आह्लादनंच [ आह्लादनंच ? ! ] २. $EMU_{17}$, $H_2$, $MLHL_1$, $TDA_2$, $EMU_{15}$ आस्छा.

---

॥ १५ ॥

॥ १ ॥ १. $TDA_2$, $MLHL_1$, $H_2$, $EMU_{17}$ सिख्याच. २. $TDA_2$, $MLHL_1$, $H_2$, $EMU_{17}$ अमराणामेव.

सुंदरतरेण नाम्ना आमंत्रये । ३. प्रकृष्टं च आराधये अभीप्सया उत्तमस्य धर्मस्य अभीप्सया दीनेः उत्तमायाः माज्दईअक्ष्याः ॥

॥ २ ॥ ४. [94]ये मे पुण्यात् संश्लेषात्[1] उत्कृष्टतरायां इजिश्नौ उपरि । ५. वेसुः स्वामिनः महाज्ञानिनः । ये अभवन्[2a] ये च संति । ६. तान् आराधये निजैः नामभिः ( अपरान् अमिशास्पिदान् ) उपरि च संप्राप्नोमि साहाय्यमत्तायाम् ( किल तेषां समग्रां साहाय्यमत्तां करोमि ) ॥ ७. [95] उत्तमां स्वामिकामिनीं विभूतिं[4] उपरि वर्षामि ( किल अहं पार्थिवत्वं तस्मै ददामि यस्मात् मम च शुभम् ) ॥

॥ ३ ॥ ८. [96]श्रोता इहं अस्तु स्वामी महाज्ञानी इजिश्नौ लाभेप्सुः पुण्यात्मा ( किल अस्यां इजिश्नौ संप्राप्नोतु ) । यो अस्मान् अभीप्सयिता ( किल अस्मद्भ्यं शुभं समीहते ) यथा पूर्वं तथा निदानं चित् । ( किल यथा पूर्वं मनसा अंतरिजिश्नौ संस्थितोऽस्मि[1a] एवं मनसा अस्याः संपूर्णं करोमि ) ॥ ९. एवं च[1b] अत्र श्रोता अस्तु स्वामी महाज्ञानी इजिश्नौ लाभेप्सुः पुण्यात्मा योऽस्मान्[2] अभीप्सयिता ॥ [ "यथा अहू वइर्यो यो आतर्वक्षो इत्यादि" ] ( पूर्वोक्तवत् ) ॥

---

## हा १६.

॥ १ ॥ ( हा १७ ) १. अहुरमज्दं पुण्यात्मकं पुण्यगुरुं आराधये । २. उत्तमदानिनं महत्तरं ईअज्दं आराधये यं लाभाभिलाषिणं वृद्धिदं पृथिवीविभूतेः ३. दातारं उत्तमानां सृष्टीनाम् ॥ ४. अमीभिश्च दक्षिणीकृतैः प्राणैः सत्योक्ताभिश्च वाणीभिः (अविस्तावाग्भिः सत्यैः ) समग्रं पुण्यात्मकं परलोकचारिणं इअज्दगणं आराधये ॥

॥ २ ॥ ५. जरथुश्त्रं पुण्यात्मकं पुण्यगुरुं आराधये ॥ ६. अमीभिश्च दक्षिणीकृतैः प्राणैः ( अंतः प्राणदानाम्[97] ) सत्योक्ताभिश्च वाणीभिः (अविस्तावाग्भिः सत्यैः ) समग्रं पुण्यात्मकं पृथ्वीचारिणं इअज्दगणं आराधये ॥ ७. जरथुश्त्रस्य पुण्यात्मनो वृद्धिं आराधये । ८. जरथुश्त्रस्य उक्तिं आराधये ॥ ९. जरथुश्त्रस्य दीनिं आराधये ॥ १०. जरथुश्त्रस्य अभिलाषं न्यायं च आराधये ॥

॥ ३ ॥ ११. अंतः भुवनेषु पुण्याभिलाषितरस्य प्रागुद्दत्ताभ्यः सृष्टिभ्यः पुण्यात्मकाभ्यः ॥ १२. दातारं अहुर्मज्दं शुद्धिमंतं श्रीमंतं आराधये । १३. उत्तमं मनः आराधये ( ब्वहमनं गोपशूनां अधिपतिम् ) । १४. पुण्यं अतःपरं आराधये ( अर्दिबहिस्तं अग्नीनां अधिपतिम् ) । १५. सहरेवरं आराधये ( सप्तधातूनां अधिपतिम् ) । १६. गुर्वीं उत्तमां संपूर्णमानसतां[1] आराधये [ स्पिदारमदं पृथिव्याः अधिपतिम् ] । १७. अविरदादं आरा-

---

॥ २ ॥ १. $EMU_{15}$, $MLHL_1$, $TDA_2$, $H_2$, $EMU_{17}$, $K_7$ पुण्यं. २. $EMU_{15}$, $MLHL_1$, $TDA_2$, $H_2$, $EMU_{17}$, $K_7$ संश्लेषान्. २a. $MLHL_1$ येनऽभवत् $TDA_2$ येचअभवत्. ३. $EMU_{15}$ निजैर्नाम्नाभिः $TDA_2$ निजैर्नामाभिः $K_7$, $MLHL_1$ निजैनमिभिः [ नामेभिः= नामभिः ?]. ४. Most MSS. उत्तमस्वामिकामिनिविभूतं or ०विभूतिं.

॥ ३ ॥ १. Some MSS. इदा. १a. Some MSS. असि. १b. $H_2$, $TDA_2$, $K_7$ $MLHL_1$ वा. २ .Some MSS. अस्मात्.

---

॥ १६ ॥

॥ ३ ॥ १. Most MSS. संपूर्णमानसं.

धये (अपां अधिपतिम्। इउरवतातिं इति सर्वप्रचारम्)। १८. अमिर्दादं आराधये (वनस्पतीनां अधिपतिम् अमिरतातिं अमृत्युप्रचारम्)॥

॥ ४ ॥ १९. दातारं स्वामिनं महाज्ञानिनं आराधये। २०. अग्निं स्वामिनः महाज्ञानिनः पुत्रं आराधये। २१. अपः उत्तमाः मज्ददत्ताः पुण्यात्मनीः आराधये। २२. सूर्यं तेजस्विनं वेगवदश्वं आराधये। २३. चंद्रं पशुबीजं आराधये। २४. तिस्तरं तारकं शुद्धिमंतं श्रीमंतं आराधये। २५. गोः उत्तमदानिन्याः आत्मानं आराधये॥

॥ ५ ॥ दातारं अहुरमज्दं आराधये। २७. मिहिरं निवासितारण्यं आराधये (मैत्रीपतिम्)। २८. श्रोशं पुण्यात्मकं आराधये (आदेशपतिम्)। २९. रश्नं शुद्धं आराधये (सत्यपतिम्)। ३०. मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धीः आराधये। ३१. बहिरामं होर्मिज्ददत्तं आराधये (विजयपतिम्) ३२. आनंदं आस्वादं आराधये (रामईअजदम्)। ३३. वातं गुरुतरं उत्तमदानिनं आराधये॥

॥ ६ ॥ ३४. दातारं अहुरमज्दं आराधये। ३५. दीनिं उत्तमां माज्दइअस्नीं आराधये। ३६. लक्ष्मीं उत्तमां आराधये। ३७. आस्तादं ईअजदं आराधये। वृद्धिदं पृथिवीविभूतेः। ३८. आकाशं आराधये। ३९. पृथिवीं उत्तमदानिनीं आराधये। ४०. मांथ्रीं वाणीं गुर्वीं आराधये। ४१. अनंतानि तेजांसि स्वयंदत्तानि आराधये॥

॥ ७ ॥ ४२. [98]शुभकृताः पुण्यकृतीः[1] आराधये। ४३. यासु[1a] परोक्षाणां[2] आत्मनः[2a] समाधानयन्ति यान् पुण्यमयनिवहान्[3]॥ ४४. उत्कृष्टतरं भुवनं मुक्तात्मनां आराधये[3a] सदोद्द्योतं [सदा-उद्द्युतं] समस्तशुभम्॥

॥ ८ ॥ ४५. गौल्यं चोपं[99] च आराधये। वहतो जलान् वृद्धेर्वनस्पतेः [वहंति जलानि वृद्धान् वनस्पतीन्]। ४६. लोभस्य[100] देवदत्तस्य प्रतिद्वंद्वतायै (प्रतिघाताय) तस्याः मुश्नाम्न्याः राक्षस्याः तस्याः परीनाम्न्याः महाराक्षस्याः अन्यथास्थितये च (किल यावत् पापकर्मत्वात् अन्यथा भवति)। ४७. प्रतिविनाशतायै च प्रतिविलयतायै च (किल यावत् विनश्यति विलयति च)। ४८. प्रति……खं[101] गमनायै [प्रत्यभिमुखं गमनाय] [102]कर्षस्य [द्वेषस्य किंवा कष्टस्य] च (किल [103] यावत् स्थानात् न आयासि)। ४९. आस्मोगस्य अमुक्तात्मनः (छद्मकस्य) अन्यायिनश्च प्रभूतमृत्योः॥

॥ ९ ॥ ५०. आराधये समस्ताः अपः आराधये समस्तान् वनस्पतीन्। ५१. आरा-

॥ ७ ॥ १. $H_2$ पुण्याकृतीः. १a. $MLHL_1$, $TDA_2$, MFL, $K_7$ यासूत्र [यासु (अत्र)?] $EMU_{15}$, $EMU_{17}$ यास्तत्र. २. MFL, $EMU_{17}$, $K_7$ परोक्षीणां $TDA_2$, $H_2$, परोक्षिणां $MLHL_1$ परोक्षीणं. २a. $EMU_{17}$, MFL आत्मानः ३. $K_7$ पुण्यौमयचहीन् $TDA_2$, $H_2$, MFL, $EMU_{17}$, $MLHL_1$ पुण्योमयचहीन् $EMU_{15}$ पुण्यामयनीचहीन्. ३a., $EMU_{17}$ शुद्ध आराधये [(शुद्धं) आराधये].

॥ ८ ॥ १. Thus $K_7$, $EMU_{17}$, $MLHL_1$, $TDA_2$, $H_2$, $EMU_{17}$. २. $MLHL_1$, $TDA_2$, $H_2$, MFL, $K_7$ प्रति.... खंगमन्याय $EMU_{17}$, $EMU_{15}$ प्रतिखंगमनाय [प्रतिक्षेपंगमनाय?]. ३. $EMU_{15}$, $K_7$ कर्सस्यच, $EMU_{17}$ कर्शस्यच [कर्शनस्यच?] $EMU_{16}$ कस्यच. ४. $K_7$ न्यायासि, $EMU_{15}$, $MLHL_1$, $TDA_2$, $H_2$ नायासि $EMU_{17}$ नायामि. ५. Most MSS. अन्यावितश्च.

ध्ये समस्तान् उत्तमान् नराकृतीन् आराधये समस्ताः उत्तमाः स्त्रीआकृतीः । ५२. आराधये समस्तान् परलोकचारिणः ईअजदान् पृथिवीचारिणश्च (आराधये) यान् उत्तमज्ञानिनः पुण्यात्मकान् ॥

॥ १० ॥ ५३. आराधये ते गृहिणीं यां संपूर्णमानसीं (पृथिवीम्) । ५४. आराधये त्वां गृहस्य पतिं पुण्यमय अहुरमज्द । ५५. अरोग्यान् पशुसमूहान् अरोग्यान् नरान् अरोग्याणि पुण्यप्रकटानि (एतस्मात् अरोग्याणि) । यथा हि केषांचित् शरीरिणां मध्ये[1] दीर्घतरान्[2] अहं मनसा चिंतये[104] (किल अजीवं[3] च [अजीवंति च] मा भवंतु) । एवं उष्णकाले एवं शीतकाले ॥

---

## हा १७.

॥ १–१० ॥ ५६. ६१. पूर्वोक्तवत् [यथा हा ६ मध्ये लिखितं यावत्] दिनाधिपतिं आराधये मासाधिपतिं आराधये ॥

॥ ११ ॥ ६२. त्वां अग्निं स्वामिनो महाज्ञानिनः पुत्रं......आराधये । ६३. अग्निं [105]उदग्रजोतिषं[1] आराधये । (यः सदैव ज्योतिष्मान्[2] समीपस्थो होर्मिज्दस्य आस्ते) । ६४. अग्निं [106]उत्तमसखायं आराधये । (यः सदैव देहस्थो भक्षति पिबति च) । ६५. अग्निं [107]वनस्पतिस्थं आराधये । (यः सदैव पिबति एव न खादति) । ६६. अग्निं विद्युद्रूपं[108] आराधये । (यः सदैव निर्मलतरो वृष्टिकरः न खादति न च पिबति) । ६७. अग्निं पयःस्थं[3][109] आराधये । (यः सदैव रत्नानां[4] निष्पादयिता) । ६८. राजनाभिं नेर्‌इरिओसंघं इअजदं आराधये । (अस्य राजनाभिता च इयं यत् नाभेः राज्ञां देशपतीनां अन्वयस्य च प्रभुत्वमतां महत्तराणां बीजं एतस्मात्) । ६९. अग्निं सर्वेषां गृहाणां गृहपतिं मज्ददत्तं स्वामिनो महाज्ञानिनः पुत्रं पुण्यात्मानं पुण्यगुरुं आराधये समं समग्रैः अग्निभिः ॥

॥ १२–१४ ॥ ७०. ७१. पूर्वोक्तवत् [यथा हा ६ मध्ये लिखितं यावत्] मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धीः स्तौमि निमंत्रयामि स्वाधीनतया च ।

॥ १५–१९ ॥ ७२. गृहाणां च वीसानां च जंदानां च ग्रामाणां च जरथुश्त्रोतिमानां च । ७३. ७४. पूर्वोक्तवत् [यथा हा २६ मध्ये] ।

(आराधना वाक्) ॥

---

॥ १० ॥ १. Sp. अथ. २. $EMU_{17}$ दीर्घतरां तान् Sp. दीर्घतरं. ३. $EMU_{17}$ आजीवाचिंत (?) $TDA_2$, $H_2$ अजीवचंतिं Sp. अजीवंच इति $EMU_{15}$, $K_7$, $MLHL_1$ अजीवचिंति.

॥ १७ ॥

॥ ११ ॥ १. $K_7$ उदग्रज्योतिष्मान्; $MLHL_1$, $EMU_{15}$, $EMU_{17}$ उदग्रज्योतिषां; $TDA_2$, $H_2$, उदग्रज्योतिषं. २. $EMU_{17}$, $EMU_{15}$, $K_7$ ज्योतिष्मान्, $TDA_2$, $H_2$ ज्योतिष्मान्. ३. Corrected from पयस्थं in all MSS. ४. MFL वरमैनां.

## हा १८.

॥ १ ॥ देहि मह्यं यो गवां घटयिताऽसि । अपां च वनस्पतीनां च । (एषां च घटयितासि) । अमिर्दादस्य (वनस्पतिपतेः) अविर्दादस्य (अपां पतेः) (अनयोर्श्च[1a] घटयितासि) । महत्तर अदृश्य महाज्ञानिन् । अध्यवसायस्य च शक्तिमतः (अस्यापि घटयितासि) । मनसापि उत्तमेन शिक्षां[2] (किल मह्यं देहि । यतः सद्यापारिण्या शिक्षया सर्व्वं स्वाधीनं शक्यते कर्तुं) ॥ (प्रत्युत्तरवाक्[3] होर्मिज्दस्य[110]) ॥

॥ २ ॥ १. महत्तरात् अदृश्यत्वात् उत्कृष्टतराच्च मनसः (यत् प्राप्तमस्ति अस्मभ्यं कृतं यत् न प्राप्तमस्ति तन्मया [न] आलोकितं[1]) । संश्लिष्टात् पुण्येन कर्म्मणश्च वचसश्च[2] (कर्म्मणे च सद्यापारिणे[3] अस्माकं कृतं वचसे च सदाचारिणे अस्माकं उक्तं) । अस्मभ्यं (स्वाधीनेभ्यो मनुष्येभ्यः) ददौ[4] अविर्दादं (उदकं) अमिर्दादं (वनस्पतिं) । महाज्ञानिनः राज्यार्यं[4a] [राज्यं अयं ?] संपूर्णमनसा स्वामी ॥ (प्रत्युत्तरवाक् प्रकृष्टा वाक् होर्म्मिज्दस्य[5]) ॥

॥ ३ ॥ २. अस्य अदृश्यमूर्तेः महत्तरस्य उत्कृष्टतरस्य । जिह्वायां [जिह्वया] वचां [वचांसि] उत्तमेन मुखेनच[1] मनसा (किल यत् जिह्वया मुखेन च युज्यते वक्तुं सद्यापारितरं ब्रूते) । संपूर्णमनसा हस्ताभ्यां कर्म्मणिं[1a] [कर्माणि] कुरुते । स निर्व्वाणी ज्ञानी[1b] [निर्वाणज्ञानी] (किल निर्व्वाणज्ञानं सद्यापारितया वेत्ते [वेत्ति]) । स पिता [पाता] पुण्यस्य महाज्ञानतयां[2] (किल पालनां सृष्टेः सद्यापारतया कुरुते) ॥ (प्रकृष्टा वाक् जरथुश्त्रस्य) ॥

॥ ४ ॥ ३. असौ अदृश्यमूर्त्तिः त्वम्ऽसि महत्तरः । योऽस्मभ्यं (स्वाधीनेभ्यः) गां दक्षिणाकरं समासृजत् । एवं तस्याः आहाराय आनंदाय च अदाः संपूर्णमनसा । यः संश्लिष्टः उत्तमस्य महाज्ञानिन् समं प्रश्नेन मनसः (यस्य बह्मनो दत्तोऽभूत् समग्रं[1] यत् चक्रे[2] संप्रश्नतयां[3] ब्वह्मणस्य चक्रे) ॥ (प्रकृष्टावाक् जरथुश्त्रस्य प्रत्युत्तरवाक् होर्म्मिज्दस्य) ॥

---

॥ १८ ॥

॥ १ ॥ १. TDA$_2$, H$_2$ वनस्य वनस्पतिपतेः. १a. EMU$_{15}$, EMU$_{17}$ अन्याश्च. २. EMU$_{15}$ शिक्षं. ३. EMU$_{17}$, MFL प्रत्युक्तवाक्.

॥ २ ॥ १. K$_7$ विलोकितं. २. EMU$_{15}$, EMU$_{17}$ वचश्च. ३. EMU$_{15}$ कर्मणा सद्व्यापारिणा. ४. EMU$_{15}$ दादां (?). ४a. Sp. राज्याय. ५. MFL, TDA$_2$ प्रकृष्टा वाक् जरथुश्त्रस्य.

॥ ३ ॥ १. TDA$_2$, H$_2$, EMU$_{17}$, MFL, Sp. मुखेच. १a. K$_7$ कर्मिणि. १b. Sp. निर्वाणे ज्ञानी. २. EMU$_{17}$ महाज्ञानितया.

॥ ४ ॥ १. MLHL$_1$, K$_7$, Sp., EMU$_{15}$, EMU$_{17}$ समर्थं. २. MLHL$_1$, K$_7$, EMU$_{15}$, H$_2$, EMU$_{17}$ चक्रेण. ३. MFL प्रकृततया.

॥ ५ ॥ ४. तस्मात् परलोकिनां दक्षिणां छिंदंति दुर्गतिमंतः महाज्ञानिन् महत्तरात् । ( तस्मात् महत्तरात् उत्तमात् पुरुषात् निश्चलधर्म्मस्य[1a] यः सद्व्यापारतया संजातोऽस्ति । तं विभ्रंशयंति ये आश्मोगाः कपटकर्म्माणः । येषां वपुषि देवाः सदैव अभ्यागताः संति ) न एवं पुण्यात्मा । ( यतोऽसौ न विभ्रंशयति ) । कर्तृतयाच ना पुण्यात्मा कृतस्य च पातृतयाऽस्ति । (कार्यं पुण्यं करोति कृतं च रक्षति ) । अभिलाषुकश्च अस्ति । प्रचुरतरं हंता दुर्गतीनां । ( अत्यर्थं[3] [अत्यंतं] निहंति दुर्गतिमंतः [ दुर्गतिमतः ] ) ॥ ( प्रकृष्टा वाक् जरथुश्त्रस्य प्रत्युत्तरवाक् होर्म्मिज्दस्य ) ॥

॥ ६ ॥ ५. ततश्च महत्तर अदृश्य महाज्ञानिन् स्वामिन् ( किल चेत् दक्षिणां न छिंदंति ) । पुण्यात्मभ्यो आस्वादयति यां कांचित् उत्कृष्टतमतां ( किल तस्मात् शुभं सर्व्वं उत्तमेभ्यो दत्तं ) । ऋते तव समीहितात्[1] दुर्गतिनो वर्षंति । ( किल लक्ष्मीं न अभीप्सितेन ते दधाते[1a] ) । तस्य कर्मणि निकृष्टस्य आ[2] निवासात् मनसः ( किल अस्यागतत्वं अकुमनस्[3] वपुषि तस्य यः पापं कुरुते) ॥ ( प्रकृष्टा वाक् जरथुश्त्रस्य प्रत्युत्तरवाक् होर्म्मिज्दस्य)॥

॥ ७ ॥ ६. तस्यां ददौ महत्तरोऽदृश्यो महाज्ञानी स्वामी । अग्निं विवेकैः दातारं प्रतिवादकृतां । ( किल शुद्धं अशुद्धं प्रकटीकुरुते[1] ) । संपूर्णमनसे महत्तराय पुण्याय च । स यतः[2] प्रचुरान् पश्यतः प्रतिबोधयति ( दुर्गतिनः ) ॥

॥ ८-९ ॥ ( "स्पंतामइन्यू" द्विवारं ॥ "अशेम्वोहू" ३ ॥ "स्पेन्तामइन्यू हाइतीं" आराधये ( एनां प्रकृतिं ) । आराधनावाक् । "अहुनवर" ४ "अशेम्वोहू" ३ । अहुनवरं आराधये । पुण्यं उत्कृष्टतरं सुन्दरं अमरं महत्तरं आराधये । ( आराधना वाक् ) ॥

---

## हा १९.

॥१॥ १. अपृच्छत् जरथुश्त्रः अहुर्मज्दात् । अहुर्मज्द अदृश्यमूर्ते गुरुतर दातः शरीरिणां अस्थिमतां पुण्यमय । ( अस्ति अहुर्मज्दो दाता पुण्यमयः इति सर्वत्र त्रिधाकरणं[1] [ त्रिधा आकारणं] परं अपरं स्तुत्यायातं [स्तुत्या आयातं[2]] । यत्[अहुर्मज्दो] दाता पुण्यमयः इति उक्तं अस्य अहुर्मज्दता स्वामिता गुरुता महाज्ञानिता च । अस्य दातृता सृष्टिदातिः । अस्य महत्ता च इयं यत् किंचिन्मात् प्रचुरं किंचित् शक्नोति वर्धयितुं । अहुरमज्दः स्थानं दीनिः समयः सर्वदा अभूत् सर्वदा अस्ति । तस्मात् स्थानात्[2a] भवति प्रकटं[3] । अस्य दीनिः वाणी

---

॥ ५ ॥ १. $H_2$, महत्तरात्. १a. $EMU_{15}$ निश्चलधर्मस्य. २. Sp. प्राकृतया, $EMU_{15}$ पात्रतया. ३. $H_2$ $K_7$, $MLHL_1$, $TDA_2$ अन्यर्थं(?); $EMU_{17}$, अन्यथा.

॥ ६ ॥ १. Most MSS. समीहितात्. १a. Sp. दधने. २. Sp. omits आ, $MLHL_1$ अनिवासात्. Sp., $MLHL_1$, $TDA_2$, MFL, $EMU_{17}$ $H_2$ अकमनस्य.

॥ ७ ॥ १. Sp. कुरुते only. २. $EMU_{16}$ सुमतः.

---

॥ १९ ॥

॥ १ ॥ १. $MLHL_1$ त्रिस्राआकारणं. $K_7$, $TDA_2$, $EMU_{15}$, $H_2$ त्रिधाआकारणं. २. $MLHL_1$, $TDA_2$, $EMU_{15}$, $H_2$, $K_7$ स्तुत्यायातं. २a. Except $H_2$ and MEL, all MSS. अस्थानात्; evidently a Gujarati word for Sk. स्थानात्; for the original Pahlavi is "*Jîvâk*" = Pers. "*Jâê*". The Pahlavi phrase is "*min zak Jîvâk pêdâk* = अस्मात् स्थानात् प्रकटं. ३. $MLHL_1$, $TDA_2$, $K_7$ insert here as scriptural authority the Avestic words *miçvânahê gâtavahê khva-*

च । समयश्च सदाकालतायाः [ सदाकालतया ] । अहुर्मज्द्स्य प्रवृत्तिकारी [ प्रवृत्तिकारिणः ? ] सर्वस्य कस्यचित् ) ॥ २. किं तत् वचः आसीत् अहुरमज्द् यत् मे प्रावोचः ।

॥ २ ॥ ३. प्राक् आकाशात् । प्राक् उदकात् । प्राक् जगत्याः । प्राक् गोः । प्राक् वनस्पतिभ्यः । प्राक् अग्नेः स्वामिनः महाज्ञानिनः पुत्रात् । प्राक् नरात् पुण्यात्मनः (गइओमर्दात्)। प्राक् देवेभ्यश्च बुद्धिजडेभ्यः मनुष्येभ्यश्च । प्राक् सर्वस्मात् जगतः सृष्टिमतः । प्राक् सर्वस्याः विभूतेः मज्ददत्तायाः पुण्यात् प्रकटायाः ॥

॥ ३ ॥ ४. तं अब्रवीत् अहुरमज्दः । विभंजना सा आसीत् अहुनवरात् स्पितम जरथुश्त्र । ( सः अदृश्यरूपी यो दीनिं प्रवर्तमानां कुरुते । सा दीनिः अहुनवरात् विनिर्मिता आस्ते ) । यां [ विभंजनां ] ते प्रावोचम् ।

॥ ४ ॥ ५. प्राक् आकाशात् । ( यथा उपरि लिखितम् ) ॥

॥ ५ ॥ ६. सा मे विभंजना या अहुनवरात् स्पितम जरथुश्त्र । अनधिकोक्त्या ( किल अविस्तात् अन्यात् मध्ये न वक्ति ) अनधिकशैथिल्येन ( किल न शेते ) उदीर्यमाणा । ७. शतेन उपरि अपरासां गुरुतराणां गाथानाम् अनधिकोक्त्या अनधिकशैथिल्येन उदीर्यमाणानाम् ॥ ८. चेत् अधिकोक्त्या अधिकशैथिल्येन उदीर्यमाणः [०माणा] । दशकेन उपरि अपरासां गाथानां गुरुतराणाम् ॥

॥ ६ ॥ ९. यश्च मे एतस्मिन् भुवने यत् सृष्टिमति[1] स्पितम जरथुश्त्र विभंजनां यां अहुनवरात् अध्येति [ अधीते ] ( किल पोषयति[2] [ घोषयति ? ] ) प्रकृष्टं तत् अधीतं गुणयति ( किल कोमलीकुरुते ) प्रकृष्टं तत् गुणितं उद्गिरति ( किल निरंगविधिं जानाति ) प्रकृष्टं तत् उद्गिरितं [ उदीरितं ] आराधयति । १०. त्रीन् वारान् चांदोरपुहुलेन सेतुना तस्य आत्मानं उत्कृष्टतरं भुवनं प्रापयामि अहं यः स्वामी महाज्ञानी । ( अंतः अस्मिन् दिने यत्र इजिश्निं नोनावरायाः कुरुते ) । ११. तस्मिन् यत् उत्कृष्टतरं भुवनम् । तस्मिन् यत् उत्कृष्टतरं पुण्यम् । तासु या उत्कृष्टतरा रोचिषः ॥

॥ ७ ॥ १२. यश्च मे एतस्मिन् भुवने यत् सृष्टिमति[1] स्पितम जरथुश्त्र विभंजनां यां अहुनवरात् अधीत्य[1a] परिहरति । १३. यावत् वा अर्धम् । यावन्तं वा तृतीयांशम् । यावन्तं वा चतुर्थांशम् । यावन्तं वा पंचमांशम् । १४. प्रकृष्टं तस्य विश्लेषयामि अहं यत् [ यः ] स्वामी महाज्ञानी आत्मानं उत्कृष्टतरात् भुवनात् । ( किल स्वर्गलोकं पृथक्करोमि[2] ) । १५. तावन्मात्रेण पिंडेन पृथुलत्वेन विश्लेषयिता यावती इयं जगती ॥ अस्ति च इयं जगती तावन्मात्रेण पिंडेन यावती पृथुलत्वेन ॥

---

*dhâtahe.* ४. $K_7$ सदाकालतयोः; $MLHL_1$ सदाकालतया.

॥ २ ॥ १. $MLHL_1$, $TDA_2$, $K_7$ मुक्तात्मनः. २. $MLHL_1$ $TDA_2$ बुद्धिजडिभ्यः.

॥ ६ ॥ १. $MLHL_1$, $TDA_2$, $EMU_{17}$, $K_7$ $EMU_{15}$ यत् सृष्टिमत्. २. $TDA_2$ पोशयति; $MFL$, $H_2$ षोशयति.

॥ ७ ॥ १. $MLHL_1$, $TDA_2$, $H_3$ सृष्टिमत्. १a. some MSS. अधीत्य. २. some MSS. स्वर्गलोकपृथक्करोमि.

॥ ८ ॥ १६. प्रकृष्टं च एतत् वचः उक्तं यत् स्वामिमत् यत् गुरुमत् । ( इदं एतस्मात् प्रकटं यत् स्वामिनो गुरो ग्रहणम् ) । १७. प्राक् तस्मात् आकाशात् दत्तम् । प्राक् उदकात् प्राक् जगत्याः प्राक् वनस्पतिभ्यः । १८. प्राक् गो श्चतुष्पद्[1]चारिण्याः सृष्टेः । ( गोः अइथोदातेः ) । १९. प्राक् नरात् मुक्तात्मनः द्विपद्[2]चारिण्याः सृष्टेः । ( गइओमर्दात् ) । २०. प्राक् तस्मात् सूर्यस्य विनिर्मितकायात् । अनालोके[111] च अमराणां गुरूणां दत्तम् ॥

॥ ९ ॥ २१. प्रकृष्टं अहं गुरुतया अदृश्यतया अवोचम् । (गुरुत्वात् अदृश्यात् अहं शक्तो अभुवं [अभवं] वक्तुम् ) । २२. समग्रायै मुक्तात्मनां सृष्टये वर्तमानायै अतीतायै भविष्यायै च २३. कर्मप्रवृत्तौ । ( किल यावत् तत् यत् एतस्मात् प्रकटं कुर्वंति ) । कर्मणां अंतः भुवने होर्मिज्दाय । ( एतत्[1] [ यस् ] तत् कुरुते यत् होर्मिज्दाय रोचते तेन एवं कार्यं यथा एतस्याः प्रकृतेः प्रकटम् ) ॥

॥ १० ॥ २४. एतच्च एतेभ्यो वाक्येभ्यो वाक्यतमम् ( किल मूलतमम् ) यः कदाचित् प्रकृष्टं अवोचत् प्रकृष्टं च ब्रूते प्रकृष्टं च वक्ष्यति ॥ २५. अस्ति यतः तत् एतावत् वाक्यम् ( किल एवं कार्येऽस्ति ) यथा यत् समग्रलोकः सृष्टिमान् २६. शिक्षितं अशिक्षत्[1] ( किल कोमलीकुर्वाणः ) दधानः ( किल उपरि संतिष्ठानः [ संतस्थानः ] ) ऋते मरणत्वात् [ मरणात् ] स्थितिं स्वामित्वायति ( किल अमरो भवति ) ॥

॥ ११ ॥ २७. एतच्च अस्माभिर्वचः प्रकृष्टं उक्तम् ( दीनिमध्ये[112] धृतं[1] अस्यां प्रकृतौ उक्तम् ) शिक्षणीयं च ( किल कोमलं कार्यम् ) उदीरणीयं च ( किल अंतरिजिस्नौ धार्यम् ) एवं कस्यचित् सतां पुण्यात् यः उत्कृष्टतरः ( यः अंतरिजिस्नौ एनां प्रकृतिं ब्रूते तस्य आत्मा अमरो भवति ) ॥

॥ १२ ॥ २८. यथा प्रकृष्टं अत्र उक्तम् ( किल स्वामिनो गुरोर्ग्रहणम् ) २९. यः तं[1] स्वामिने गुरवे च दधाति ( किल वपुः आचार्याय दत्ते ) एवं ताभ्यः आस्वादयति याः होर्मिज्दस्य मनसि प्राक्तनाः सृष्टयः । ( किल सृष्टीः प्रवर्तमानाः कुर्वन्नास्ते । होर्मिज्दमनःप्रमोदकरः ) ॥ ३०. यः इदं वपुः सर्वेभ्यो महत्तराय आस्वादयति ( किल वपुः राज्ञां राज्ञो दासत्वेन धत्ते ) एवं तस्य सृष्टिभ्यः आस्वादयति ( किल सृष्टीः प्रवर्तमानाः कुर्वन्नास्ते )॥

॥ १३ ॥ ३१. यः होर्मिज्दाय सुजीवनिं[1]ः ( किल मूलं स्वाधीनतया होर्मिज्दस्य धत्ते ) उत्तमेन अत्र तृतीयन्यायी ( किल उत्तमेन अहुनवरेण तृतीयन्यायमूलभूतः ) उदीरणं[2] ददाति ग्वह्मनेन ( किल वाणीं सदाचारिणीं ब्रूते ) (एवं कुर्वाणः सन् ) प्रकृष्टं इह यत् ग्वह्मनेन आस्वादयन्नास्ते । ( किल प्रसादं दानं[3] यत् ग्वह्मनेन ददन्ते[4] [ ददते ] तच्च असौ ददाति ) ॥ ३२. यः प्रकृष्टं चिह्नयिता ग्वह्मनेन ( किल किंचित् यत् सदाचारितरं चिह्नेन कुरुते ) मनसि च एवं अनेन संक्षिप्तो भूतः ( किल संपूर्णो भूतः ) ३३. कर्मभिश्च[5] इहांतर्भुवने संक्षिप्तः । (किल संपूर्णो भूतः ) ।

॥ ८ ॥ १. NMRL$_1$, MLHL$_1$ चतुष्पद्प्रचारिण्याः. २. MLHL$_1$, NMRL$_1$, द्विपद्प्रचारिण्याः.
॥ ९ ॥ १. NMRL$_1$, TDA$_2$ K$_7$ EMU$_{17}$, MFL$_1$, H$_2$ येस् [ यस् ].
॥ १० ॥ १. EMU$_{16}$ शिक्षिताशिक्षत्; K$_7$, TDA$_2$, MLHL$_1$ शिक्षित शिक्षत्.
॥ ११ ॥ १. MLHL$_1$, TDA$_2$, K$_7$, EMU$_{17}$, MFL, H$_2$, धर्तुं.
॥ १२ ॥ १. NMRL$_4$, EMU$_{17}$ यस्तां (सृष्टिं); MLHL$_1$, K$_7$ यस्तान्; MFL यतस्तत्; H$_2$ यस्तत्.
॥ १३ ॥ १. H$_2$, EMU$_{17}$, K$_7$, MLHL$_1$,TDA$_2$, NMRL$_4$ सुजिवतिः २. K$_7$, उदीर. ३. H$_2$, K$_7$, MLHL$_1$, TDA$_2$ प्रसाददानं. ४. K$_7$, MLHL$_1$, TDA$_2$ ददंते. ५. H$_2$K$_7$, MLHL$_1$, TDA$_2$, EMU$_{17}$ कर्मणिश्च.

॥ १४ ॥ ३४. यस्तां सृष्टिं आस्वादयति होर्मिज्दस्य । (किल मनुष्येषु ज्ञापयति)। एवं तस्मिन् यथा तस्य सृष्टिः । (किल एवं निर्मलतया स्वाधीनत्वेन[1] होर्मिज्दस्य प्रयाति यथा होर्मिज्दः निर्मलत्वेन ददौ) । ३५. राज्यं होर्मिज्दाय आस्वादयति ॥ तस्मिन् महाज्ञानिन् ते राज्यम्। (किल तेन[2] होर्मिज्दः उपरि वपुषि स्वीये राजा कृतो भवति) । यः दुर्बलेभ्यो आहारं आस्वादयन्नास्ते । (किल शुभं तेभ्यो कुर्वन्नास्ते) । ३६. यथा[3] मित्रं स्पितमाय पंचन्यायी भूतः । (किल पंचसु न्यायेषु मध्ये भूतः) ॥ ३७. समग्रं वचः प्रकृष्टं वचः[4] बभूव सर्वं वचो यत् होर्मिज्दस्य बभूव ॥

॥ १५ ॥ ३८. वर्धयित्रे[1] होर्मिज्दः अहुनवरं प्रावोचत् (पालनायै [पालनाय] सृष्टेः[1a]) वृद्धिकारितया समग्रं संक्षिप्तो भूतः (किल संपूर्णोऽभूत्) । ३९. झटिति हंता[1b] बभूव । (किल विप्रक्षान्तः प्रस्नियात्[2] [प्रासर्पत्]) अंतश्च दुर्गतिनः प्रोक्तः । ४०. सा अन्तर्वाक् । ४१ यत् न अस्माकं मनः (किल अहं न तत् किंचित् मन्ये यत् त्वं मन्यसे यतोऽहं तत् यत् सद्व्यापारितरं मन्ये त्वं च तत् यत् कुव्यापारितरं मन्यसे) न च शिक्षा (अहं न तत् शिक्षापयन्नस्मि यत् त्वं शिक्षापयन्नसि यतोऽहं तत् यत् सद्व्यापारितरं शिक्षापयन्नस्मि त्वं च तत् यत् अव्यापारितरम् [असद्व्यापारितरं]) न च बुद्धिः (यतोऽहं बुद्धिं सद्व्यापारितया दधामि त्वं च कुव्यापारितया दधासि) ४२. न च कामः (यतो मह्यं रोचते सद्व्यापारितरं तुभ्यं च कुव्यापारितरम्) न च वाक्यम्[3] (यतोऽहं तत् यत् सद्व्यापारितरं ब्रवीमि त्वंच तत् यत् कुव्यापारितरं ब्रूषे[4]) न च कर्म (यतो मे कर्म सद्व्यापारितरं ते च कुव्यापारितरम्) ४३. न च दीनिः (यतो मे दीनिः गाथाभवा ते च राक्षसी) न च आत्मानः संश्लिष्यंते[5] (ते च मे दीनौ ये तिष्ठंति ते च ये ते तिष्ठंति तेषां आत्मानः नैकत्र) ॥

॥ १६ ॥ ४४. एतच्च वचो मज्दोक्तम् । त्रिप्रमाणं चतुर्विधं पंचगुरु । दक्षिणया संक्षिप्तम् (किल संपूर्णं एवं स्वाधीनत्वे शक्नुवन्ति कर्तुं यदि वपुः गुरवे दक्षिणयंति) ॥ ४५. किं तस्य प्रमाणं । सुमतं सूक्तं सुकृतम् (किंचित् यत् सदाचारि अंतः प्रमाणे दीनेः) ॥

॥ १७ ॥ ४६. काः विद्याः । आचार्यः क्षत्रियः कुटुंबी[1] प्रकृतिकर्मा[113] । ४७. समग्रं[2] इदं[114] संश्लिष्यं नरे मुक्तात्मनि सत्यमनसि सत्यवचसि सत्यकर्मणि । ४८. गुरुपाठिते (किल गुरुसंयुक्ते) दीनिशिक्षिते (किल येन इमस्तिः कृता आस्ते) । ४९ यः कर्मणा जगति पुण्यस्य वृद्धिदाता ॥

---

॥ १४ ॥ १. TDA$_2$, H$_2$ स्वाधीनत्वे. २. TDA$_2$ K$_7$, EMU$_{17}$, H$_2$ तेत्वेन (?); MFL तत्वेन. ३. NMRL$_4$ TDA$_2$ यो. ४. NMRL$_1$,TDA$_2$,EMU$_{17}$, MFL H$_2$ वाक्.

॥ १५ ॥ १. NMRL$_4$, EMU$_{17}$, MLHL$_1$ वृद्धियित्रे; H$_2$, MFL, TDA$_2$, K$_7$ वर्धियित्रे. १a. Some MSS. सृष्टेः १b. Some MSS. हंतो. २. NMRL$_4$, EMU$_{17}$, K$_7$ किल विपक्षांत प्रोसर्पत् corrected *seconda manu* सर्प्यंत; H$_2$, MFL, TDA$_2$, किल विपक्षांतः परिसर्प्यंत्; MLHL$_1$, °असिर्प्यत्. ३. NMRL$_4$ नचाहः corrected *seconda manu* नचाध्ययनं; TDA$_2$, K$_2$, MLHL$_1$, नचव्यापारः; EMU$_{17}$ नचाहुथारः (?) [नचोद्गारः]; MFL, नचव्यावार [नचव्योचारः ?]. ४. corrected from ब्रूते in most MSS. ५. Sp. संश्लिष्टं.

॥ १७ ॥ १. All कुटंबी [cf. Gujarati કણબી]. २. Some MSS. समर्थं [समग्रं समर्थं].

॥ १८ ॥ ५०. के गुरवः । गृहपतिः वीसपतिः जंद्पति ग्रामपतिः जरथुश्त्रः पंचमः । (सप्तनरनारीयुग्मं गृहं पंचदशनरनारीयुग्मं वीसं त्रिंशन्नरनारीयुग्मं जंदं पंचाशन्नरनारीयुग्मं ग्रामम्) । ५१. तेषु ग्रामेषु यानि अन्यानि रगात्[1] [115] जरथुश्त्रीयात् । चत्वारो गुरवः रगे जरथुश्त्रीये ॥ ५२. के तस्मिन् गुरवः । गृहपतिः वीसपतिः जंद्पतिः जरथुश्त्रश्चतुर्थः । (तस्मिन् ग्रामे यत् स्वीयं आसीत् असौ गुरु श्चतुर्थोऽभूत्) ॥

॥ १९ ॥ ५३. कथं सुमते[1] । (किल दीनिः सुमतपादं कथं तस्थौ) ॥ मुक्तात्मना ख्यात्रा[2] प्राक्तनेन । (किल गइओमर्देन बभूव) ॥ ५४. कथं सूक्ते । मांथ्रस्पितवाण्याः । (किल अविस्तावाण्याः) ॥ ५५. कथं सुकृते । स्तुत्या पुण्येनच प्राक्तनायाः सृष्टेः । (किल इजिश्निः अपरं च पुण्यं यत् सृष्ट्या क्रियते) ॥

॥ २० ॥ ५६. महाज्ञानी प्रावोचत् ॥ कस्मै प्रावोचत् ॥ पुण्यात्मकाय इहलोकीयाय परलोकीयाय । (किल शुभाय इहलोकीयाय परलोकीयाय) ॥ ५७. किमर्थं प्रावोचत् । (कस्मै कामाय प्रावोचत्) ॥ प्रकृष्टवाचो वृद्धिकर्तुः पार्थिवतायै । (किल यावत् प्रकृष्टवाक् वृद्धिकर्ता पार्थिवो भवेत्) ॥ ५८. कियत् ॥ मुक्तात्मभ्यः (किलं समीहितं वक्तुम्) वृद्धिकर्तारं अकामराजानं यावत् (किल यावत् वृद्धिकर्ता भवति स च यः अकामराजा) ॥

विभंजनां[1] यां अहुनवरात् आराधये (किल शुभं यत् एतस्याः प्रकृतेः) । अहुनवरं आराधये । प्रकृष्टोक्त्या (किल ये अविस्ताउक्तौ अभ्यागता [ः] तन्मध्ये) । प्रकृष्टाध्ययनेन (किल यत् नामांकितं उच्यते तन्मध्ये) । प्रकृष्टं गाथया (किल ये अविस्ता केवलं निजगाथायां तैश्च) । प्रकृष्टं च इजिश्न्या ॥ आराधना वाक् ॥

---

## हा २०.

॥ १ ॥ १. प्रकृष्टं वाक् बभूव होर्मिज्दस्य "पुण्यं समृद्धिः उत्कृष्टतरा अस्ति" । प्रकृष्टं तस्मै समृद्धिं उत्कृष्टतरां आस्वादयन्नास्ते (किल शुभं तस्मै कुर्वन्नास्ते) यः स्वीये[1] स्वयंप्रवृत्तौ[2] समृद्ध्या उत्कृष्टया अस्ति (किल यत् युज्यते दातुं तत् ददाति) एवं न्यायेन संक्षिप्तो भूतः (किल संपूर्णो भूतः) ॥

॥ २ ॥ २. "शोभनं अस्ति[1] (तत् पुण्यम्) । शोभनः सः" । शुभप्रवृत्ति सर्वेषां मुक्तात्मनाम् (किल भवितुं योग्यम्) सर्वेभ्यो मुक्तात्मभ्यः आस्वादयन्नास्ते (किल शुभं तेभ्यः कुर्वन्नास्ते) यो ना स्थितिं[2] सर्वेषां मुक्तात्मनाम् (किल सत्कार्यतां यां युज्यते कर्तुम्) सर्वेभ्यो मुक्तात्मभ्यः आस्वादयन्नास्ते (किल कुर्वन्नास्ते) ॥

---

॥ १८ ॥ १. Most MSS. रंगात्.

॥ १९ ॥ १. EMU$_{17}$ सुमतेन. २. H$_2$, MLHL$_1$, TDA$_2$ ख्याता.

॥ २० ॥ १. Omitted in all, except Spiegel.

॥ २० ॥

॥ १ ॥ १. EMU$_{17}$ स्वामीये [स्वामिने ?]. २. NMRL$_1$ स्वयप्रवृत्ता; TDA$_2$, K$_7$, EMU$_{17}$, H$_2$, MFL स्वयप्रवृत्या; MLHL$_1$ स्वयप्रवृत्यां.

॥ २ ॥ १. EMU$_{17}$ अभितत् [अपि सत्]. २. Spiegel joins ना and स्थितिं into नास्थितिं.

॥ ३ ॥ ३. "यः पुण्यात् [illegible]शिता उत्कृष्टतरं पुण्यं" आस्वादयन्नास्ते । समग्रं मांथ्रम् (कार्यं पुण्यं यत् मांथ्रवाण्या प्रकटम्) समग्रं मांथ्रवाचे । (कार्यं पुण्यं यः अविस्ता अविस्तार्थेन प्रकटीकुरुते) ४. यः पुण्याय राज्यं आस्वादयति (किल पार्थिवत्वं सदाचारतया धत्ते) । ५. यश्च आकारयित्रे मुक्तात्मने सत्यं आस्वादयति (किल न्याय्यं सत्यं कुरुते) ६. यश्च युष्मभ्यं सत्यं आस्वादयति ये लाभमन्तो [लाभवन्तः] स्थ (किल मध्यस्थं[2] सत्यं कुरुते) त्रिन्यायी भूतः (किल न्यायेषु त्रिषु मध्ये भूतः) ॥ ७. समग्रं वचः प्रकृष्टं वचो बभूव । सर्वं वचो यत् हार्मिज्दस्य बभूव ॥

॥ ४ ॥ ८. महाज्ञानी प्रावोचत् ॥ कस्मै प्रावोचत् ॥ पुण्यात्मकाय इहलोकीयाय परलोकीयाय । (किल शुभाय इहलोकीयाय परलोकीयाय) ॥ ९. किमर्थं प्रावोचत् । (कस्मै कामाय प्रावोचत्) ॥ प्रकृष्टवाचो[1] वृद्धिकर्तुः पार्थिवतायै । (किल यावत् प्रकृष्टवाक् वृद्धिकर्ता पार्थिवो भवेत्) ॥ १०. कियत् ॥ मुक्तात्मभ्यः (किल समीहितं वक्तुम्) वृद्धिकर्तारं अकामराजानं[2] यावत् । (किल यावत् वृद्धिकर्ता भवति सच यः अकामराजा) ॥

विभंजनां पुण्यात् उत्कृष्टतरात् आराधये । पुण्यं उत्कृष्टतरं आराधये । प्रकृष्टोक्त्या (किल अविस्ता ये उक्तौ अभ्यागताः तन्मध्ये) । प्रकृष्टाध्ययनेन (किल यत् नामांकितं उच्यते तन्मध्ये) । प्रकृष्टं च गाथया (किल ये अविस्ता केवलं निजगाथायां तैश्च) । प्रकृष्टं इजिश्नौ ॥ आराधना वाक् ॥

---

## हा २१.

॥ १ ॥ १. इजिश्निवाक् बभूव मुक्तात्मनो जरथुश्त्रस्य "यो विद्यमानेभ्यः एवं इजिश्नी उपरि" । योऽत्र महाज्ञानिनः इजिश्निं आस्वादयन्नास्ते । यो दत्ते[1] [दाता] स्वामिने[2] विद्यमानेभ्यः इजिश्निं आस्वादयति । यैः कुटुंबिनां जीवितस्य आकांक्षी (किल तत् किंचित् वक्ति येन ते साधु शक्नुवंति[4] जीवितुम्) ॥

॥ २ ॥ २. इह मुक्तात्मनां संपूर्णमनसा प्राक्तनानां इजिश्निं आस्वादयन्नास्ते । ३. यः प्रणामं अमिशास्पितेभ्यः (किल हुसाफ्रीदं[1] अमिशास्पितानां कुरुते) त्रिन्यायी[2] भूतः (किल न्यायेषु त्रिषु मध्ये[3] भूतः) ॥ समग्रं वचः पेजिस्न्यं बभूव ॥ कस्य उपरि इजिश्निः ॥ अमराणां गुरुतराणां उपरि इजिश्निः ॥

---

• ॥ ३ ॥ १. NMRL₄ यस्य. २. Sp., K₇, MLHL₁, EMU₁₇ मध्येस्तं.
॥ ४ ॥ १. Most MSS. प्रकृष्टावाचो. २. Most MSS. अकामराजानां.

॥ २१ ॥

॥ १ ॥ १. TDA₂, MLHL₁, K₇, MFL, H₂, NMRL₄ दाता; EMU₁₇ दत्ता (?). २. TDA₂, MLHL₁, H₂ स्वामिनो. ३. TDA₂, H₂ जः [ यः ]. ४. MLHL₁, K₇, MFL, H₂, EMU₁₇, TDA₂ कुर्वन्ति.

॥ २ ॥ १. NMRL₄ हुसूफ्रीदं; EMU₁₇, H₂, MFL, K₇, MLHL₁ TDA₂, हुस्तफ्रीदं. २. TDA₂, NMRL₄, EMU₁₇, H₂, K₇, MLHL₁ त्रिन्यायभूतः [ त्रिन्यायभूतः ]. ३. Most MSS. मध्येषु. ४. NMRL₄ पेजिस्न्यं; TDA₂, H₂ ऽजिश्नियं; K₇ इजिश्नि.

॥ ३ ॥ ४. तं उवाच होर्मिज्दः । "सुंदराय तस्मै[1] शुभं कस्मैचित् । ५. स्वेच्छया राज्यं महाज्ञानी ददाति स्वामी" । ( किल समीहितेन निजेन ) ॥

॥ ४ ॥ ६. किं तस्मिनुपरि वचः प्रत्यवोचत् ॥ ७. शुभप्रवृत्तिं प्रत्यवोचत् ( किल प्रसादम् ) । शुभप्रवृत्तिं सर्वेषां मुक्तात्मनां सतां च अतीतानांच भविष्याणां च ॥ ८. वृद्धिकर्ता वृद्धिकर्तृतया प्रत्यवोचत् । वृद्धिकर्तृतया होर्मिज्दः प्रत्यवोचत् "वृद्धिकर्तारं पुण्यात्मानं तं ब्रवीमि यो वर्धयति पुण्यात्मनः" ॥

विभंजनां यां[1] इअंघेहातां[2] शुद्धप्रबोधनं[3]-इजिश्नितया पुण्यात्मनीं आराधये ॥ ( पूर्वोक्तवत ) ॥

---

## हा २२.

॥ १ ॥ १. बरेस्मनेन उपरि-रचितेन समं जोरेण दात्रे[1] स्वामिने महाज्ञानिने[2] शुद्धिमते श्रीमते अमरेभ्यो गुरुतरेभ्यः २. इमं हूमं पुण्येन उच्चैर्दत्तम् ( किल सदाचारतया रचितं आस्ते ) समीहे इजिश्नौ । ३. इमां च गां जीवामनाम्नीं पुण्येन उच्चैर्दत्ताम् ( किल दुग्धं यत् पुण्यतया रचितं आस्ते ) समीहे इजिश्नौ । ४. इमं च वनस्पतिं हिनवानामानं पुण्येन ...र्दत्तम् समीहे इजिश्नौ । ( उर्वराम‌म् ) ।

॥ २ ॥ ५. अपां उत्तमानां अमून् प्राणान् हूममतः गोमतः हिनवामतः पुण्येन उच्चैर्दत्तान् ( किल सदाचारतया समारचितान् ) समीहे इजिश्नौ । ६. अपां उत्तमानां अपः[1] हूमीयाः समीहे इजिश्नौ । ७. रौप्यीयां च हाऊअनीम् ( घंटाम् ) समीहे इजिश्नौ । लोहीयां च हाऊअनीम् ( घंटाम् ) समीहे इजिश्नौ ।

॥ ३ ॥ ८. इमां च वानस्पत्यां बरेस्मनीं संप्राप्तां गुर्वनुज्ञया[1] । अध्ययनं च आचरणं[2] च दीनेः उत्तमायाः माज्दइअस्न्याः । ९. गाथानां च उक्तिं संप्राप्तां पुण्यात्मन्यां पुण्यगुर्व्यां गुर्वनुज्ञया । १०. इमां समिधं च गंधं च समीहे इजिश्नौ ते अग्ने स्वामिनो महाज्ञानिनः पुत्र ( किल यं तुभ्यं समारचितं आस्ते ) । ११. विश्वाश्च विभूतीः मज्ददत्ताः पुण्यात् प्रकटाः समीहे इजिश्नौ ॥

॥ ४ ॥ १२. सन्मानकृत्या ( किल पूजाकरणेन ) स्वामिनो महाज्ञानिनः अमराणां च महत्तराणां श्रोशस्य च पुण्यात्मनः अग्नेः स्वामिनो महाज्ञानिनः गुरोश्च महतो यः पुण्यस्य उक्तः । १३-२१. समीहे इजिश्नौ ( इमं हूमं पुण्येन उच्चैर्दत्तं समीहे इजिश्नौ यावत् यत् विश्वाः विभूतीः मज्ददत्ताः पुण्यात् प्रकटाः समीहे इजिश्नौ सन्मानकृत्या किल पूजाकरणेन इति सर्वत्र ज्ञेयम् ) ॥

---

॥ ३ ॥ १. TDA$_2$, MLHL$_1$, K$_7$, MFL, H$_2$, EMU$_{17}$ यस्य.

॥ ४ ॥ १. Some MSS. विभजनायां. २. Some MSS. इअंघे हातात्. ३. TDA$_2$, MLHL$_1$, K$_7$, H$_2$, EMU$_{17}$ शुद्धप्रबोधान् [ शुद्धप्रबोधात् ].

॥ २२ ॥

॥ १ ॥ १. Corrected of दात्रेण in almost all MSS.; EMU$_{17}$ दात्रेतृण (?). २. Forgotten in Some MSS.

॥ २ ॥ १. K$_7$ अपश्च.

॥ ३ ॥ १. K$_7$, TDA$_2$ गुर्वनुज्ञाय; NMRL$_4$ गुर्वनुज्ञाया (?). २. Most MSS. आचारणं.

॥ ५-२२ ॥ २२. अहां पुण्यगुरूणाम् ( तत् यत् संध्यायाः अंतः संध्यायां शक्यते गंतुं प्रभावेण अस्य ) हाउअननाख्याः प्रातःसंध्यायाः पुण्यात्मकायाः पुण्यगुर्व्याः । ( यथा श्रोशद्रूणे[1] यावत् इमं ह्रुमं पुण्येन उत्रै र्दत्तम् किल सदाचारतया समारब्धितं समीहे इजिश्नौ यावत् २३. विश्वाश्च विभूतीः मज्द्दत्ताः पुण्यात् प्रकटाः समीहे इजिश्नौ यावत् ) ॥

॥ २३ ॥ २४. सन्मानकृत्या ( किल पूजाकरणेन ) स्वामिनो महाज्ञानिनः शुद्धिमतः श्रीमतः अमिशास्पितानाम् ॥ २५. [116]मिहिरो निवासितारण्यः ( मैत्रीपतिः ) आनंदः निर्भयत्वं आस्वादश्च ( स इअज्दः ये [ न ] मनुष्याः खाद्यस्य स्वादं जानंति ) ।

॥ २४ ॥ २६. सूर्योऽमरः तेजस्वी वेगवदश्वः । २७. पक्षिणः उपरिकार्यस्य विनष्टं क्रियते सर्वस्य सृष्टेः एवं ते पक्षिणः संति दादारस्य सृष्टेः स्वयं एव । २८. शुद्धा निर्वाणज्ञानिनी मज्द्दत्ता पुण्यात्मनी दीनिः उत्तमा माज्दइअस्नी ।

॥ २५ ॥ २९. मांथ्रवाणीं गुर्वीं पुण्यात्मनीं स्वामिकामाम् ( किल कामं यत् मनसा सह स्वामिना तुल्यं करोति ) । न्यायं विभिन्नदेवं न्यायं जरथुश्त्रियम् ( निर्मलतरम् ) । दीर्घां उपरिप्रवृत्तिम् ( शिक्षां अदृश्यरूपिणीम् ) दीनिं च उत्तमां माज्दइअस्नीम् । ( एकहेलया एव ) । सुप्रबुद्धां मांथ्रीं वाणीं नैसर्गिकां बुद्धिं स्वामिदत्तां कर्णश्रुतां बुद्धिं स्वामिदत्ताम् ।

॥ २६ ॥ ३०. अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य । त्वं अग्ने पुत्र स्वामिनो महाज्ञानिनः । अग्नेः[1] स्वामिनो महाज्ञानिनः पुत्रस्य समं समग्रैः अग्निभिः । ३१. गिरि हौशदास्तारः मज्द्दत्तः पुण्यशुभः । ( स[2] गिरिः यः चैतन्यं मनुष्याणां स्थाने दधाति रक्षति च ) ।

---

॥ ५ ॥ १. Most MSS. °द्रूणेन.

॥ २६ ॥ १. NMRL$_4$, EMU$_{17}$, and Spiegel in his foot notes, give here some more passages from the Âtash Nyâêsh, as follows :—

श्रियो लाभस्य मज्द्दत्तस्य । एरांदेशश्रीणां मज्द्दत्तानाम् । राजलक्ष्म्याश्च मज्द्दत्तायाः ( अयं अग्निः आदरफ्रा नाम । अस्य कार्यं आचार्यविद्या [ Sp. आचार्यी विद्या ] इदं किल तस्मिन् पक्षे आचार्याः ज्ञानवंतः क्रियावंतश्च भवंति प्रभावेन अस्य । तथा स यः समं [ Sp. यस्य समं ] दहाकेन प्रतिवादं अकरोत् [ Sp. असौ अभूत् ].

अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य । राज्ञः कएखुस्रवस्य । गुफायाश्च कएखुस्रवीयायाः ( अकरोत् असौऽभूत् । या आदरबादिगांदेशे अस्ति ) । अस्नवंदगिरेश्च मज्द्दत्तस्य चयाचिस्तरन्ध्रस्य मज्द्दत्तस्य ( चयाचिस्तरंध्रात् सा गुफा चतुर्भिर्योजनैरस्ति ) । राजलक्ष्म्याश्च मज्द्दत्तायाः । ( अग्निः आदरगुशस्प-नामा । अस्य कार्यं क्षत्रियविद्या । इदं किल आदरबादिगांदेशपक्षे क्षत्रियाः शीघ्रतराः शूरतराश्च भवंति प्रभावेन अस्य । तथा स यः पुरतः अहुरमज्दस्य आक्रंदत् असौ अभूत् ) ।

अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य । रएवंदगिरेः मज्द्दत्तस्य । राजलक्ष्म्याश्च मज्द्दत्तायाः ( अयं अग्निः आदरबुर्जिन्महिर-नाम । अस्य कार्यं कृषिविद्या । इदं किल तस्मिन् पक्षे कृषिकर्मिणः [ Sp. कृषिकर्मणः ] व्यवसायितराः कृषिकर्मज्ञानतराः धौतवस्त्रतराश्च भवंति प्रभावेन अस्य । तथा स यः समं गुस्तास्पेन राज्ञा प्रतिवादं अकरोत् अयं अभूत् ) ।........................ ।

अग्नेः स्वामिनो महाज्ञानिनः पुत्रस्य समं समग्रैः अग्निभिः । राजनाभे नैहरिओसंघस्य ईअज्दस्य ( अस्य राजनाभिता च इयं यत् नाभे राज्ञां देशपतीनां अन्वयस्यच प्रभुत्वमतां महत्तराणां बीजं एतस्मात् ) । २. NMRL$_4$, EMU$_{17}$ स गिरिः याश्चैतन्यं.

॥ २७ ॥ ३२. समग्रान् इअज्द्वानां पुण्यात्मनां परलोकचारिणां पृथिवीचारिणां च । ३३. पुण्येन ददामि मुक्तात्मनां वृद्धीनां बलिष्ठानां अधिकशक्तीनां[1] पूर्वन्यायवतां वृद्धीनां नवान्वयनिकटानां वृद्धीनाम् । उक्तमाज्ञः इअज्दस्य । ( किल नाम अनया वीन्या उक्तं आस्ते ) ।

( श्रुमनिः[2] या भवति सा द्विवारं उच्चरणीया यावत् निजात्मनो वृद्धेः । पूर्वोक्तवत् ) ॥

---

हा २३........[1]

---

॥ २७ ॥ १. Some MSS. अधिकशक्तानां. २. NMRL$_4$ श्स्नूमनिः.

॥ २३ ॥

१. The Hâ 23 and its Sanskrit translation are in all MSS. omitted here. $K_7$ leaves here a blank page. This omission is most probably owing to the loss of some pages here in the one original MS. of Neriosengh, from which all our copies have descended. There seems no other reason to believe that Neriosengh himself did not translate this Hâ, of which the Pahlavi translation is extant

---

# हा २४.

॥ १ ॥ १. स्वामिनं महाज्ञानिनं हूमे[1] अभिमंत्रयामि । २. इमं हूमं च मिअज्दं च । (भोजनदानम्) । प्राणं च । (उदकसंभूतम्[1a]) । बरेस्मनं च पुण्येन परिग्रथितं[2] । गां च उत्तमदानाम् । ३. इमां च गां जीवामनाम्नीं पुण्येन उश्चैर्दत्ताम् । (किल दुग्धं यत् पुण्यतया समारचितं अस्ति) । ४. इमं च वनस्पतिं हिनवानामानं पुण्येन उश्चैर्दत्तम् । (किल उरुअरामं यत् पुण्यतया समारचितम्) ।

॥ २ ॥ ५. अपां उत्तमानां अमून् प्राणान् हूममतः गोमतः हिनवामतः पुण्येन उश्चैर्दत्तान् । (किल सदाचारतया समारचितान्) । ६. अपां उत्तमानां अपश्च हूमीयाः । ७. रौप्यीयां च हाऊअनीम् (घंटाम्) लोहीयां च हाऊअनीम् (घंटाम्) ।

॥ ३ ॥ ८. इमां च वानस्पत्यां बरेस्मनीं संप्राप्तां गुर्वनुज्ञया । अध्ययनं च आचरणं[1] च दीनेः उत्तमायाः माज्दइअस्न्याः । ९. गाथानां च उक्तिं संप्राप्तां पुण्यात्मन्या पुण्यगुर्व्या गुर्वनुज्ञया । १०. इमां समिधं च गंधं च ते अग्ने स्वामिनो महाज्ञानिनः पुत्र । विश्वाश्च विभूतीः मज्दद्त्ताः पुण्यात् प्रकटाः ॥

॥ ४ ॥ ११. प्रकृष्टं च ददामि । तस्य च निमंत्रयामि । १२. तेषु च निमंत्रयामि । (अस्मदुक्तेषु) । स्वामिनश्च महाज्ञानिनः । ओशस्यचं[1] पुण्यात्मनः । (आदेशपतेः) । अमराणां च गुरूणाम् । मुक्तात्मनां च वृद्धीनाम् । मुक्तात्मनां च आत्मनाम् । अग्नेश्च होर्मिज्दस्य । गुरोश्च महतः । सर्वासां च यासां कासांचित् मुक्तात्मनां पंक्तीनां आराधनाय नमस्करणाय माननाय प्रकाशनाय ।

---

॥ २४ ॥

॥ १ ॥ १. $K_7$ हूमं. १a. Most MSS. उदकं संभूतं; $EMU_{17}$ उदकेच संभूतं. २. $TDA_3$, $H_2$ परिगर्थितं.

॥ ३ ॥ १. Most MSS. आचारणं.

॥ ४ ॥ १. $EMU_{17}$ ओश्यस्यच.

॥ ५ ॥ १३. तेषु निमंत्रयामि । (अस्मद् उक्तेषु) । जरथुश्त्रस्य स्पितामपुत्रस्य पुण्यात्मनो वृद्धेः आराधनाय नमस्करणाय माननाय प्रकाशनाय । १४. अंतर्भुवने पुण्याभिलाषनः[1] [०षिणः] । समं समग्राभिः मुक्तात्मनां वृद्धिभिः । याः परोक्षाणां मुक्तात्मनाम् । याश्च जीवतां मुक्तात्मनाम् । याश्च नराणां अजातानां अक्षयत्वकारिणां लाभमताम् ।

॥ ६-८ ॥ १५-२३. इमं हूमंच मिअज्दंच (यावत्) विश्वाश्च विभूतीः मज्दद्त्ताः पुण्यात् प्रकटाः २४. प्रकृष्टं च ददामि । तस्यच निमंत्रयामि । तेषुच निमंत्रयामि । (अस्मद् उक्तेषु) ।

॥ ९ ॥ २५. अमराणांच महत्तराणां सुस्वामिनां सुदानिनां सदाजीवानां सदालाभानाम् । (एकं इदं यत् स्वयं न म्रियते एकंच इदं यत् निहंतुं न शक्यते) । २६. ये उत्तमेन मनसा निवसंति । (तेषां अभ्यागतिस्तस्मिन् स्थाने यत्र ग्वह्मनः) । येच एवम् । (संभवोऽपि ग्वह्मनात्) । २७. तेषु निमंत्रयामि । (अस्मदुक्तेषु) । प्रभूततया अस्य गृहस्य । (किल यावत् संख्याः प्रभूताः भवंति) । वृद्धिदात्या अस्य गृहस्य । (किल यावत् अधिकं प्रवर्धते) । पशूनांच नराणांच जातानांच जनिमतांच मुक्तात्मनां ये एते संति । २८. तेषु निमंत्रयामि । (अस्मदुक्तेषु) । मुक्तात्मनां उत्तमानां वृद्धीनां याः बलिष्ठाश्च अधिकशक्ताश्च मुक्तात्मनां सहायतया । २९. तेषु निमंत्रयामि । (अस्मदुक्तेषु) । दातुः स्वामिनो महाज्ञानिनः शुद्धिमतः श्रीमतः । अदृश्येभ्योऽदृश्यतमस्य अमरेभ्यो गुरुतरेभ्यः। (किल अंतश्च अमराणां गुरूणां यदि असौ अभिवांछति अंतः अदृश्यानां वपुः अदृश्यं शक्नोति कर्तुम्) । आराधनाय नमस्करणाय माननाय प्रकाशनाय[2] । ३०. तेषु निमंत्रयामि । (अस्मदुक्तेषु) । अह्नां पुण्यगुरूणां हाउअननाझ्याः (प्रातःसंध्यायाः) पुण्यात्मकायाः पुण्यगुर्व्याः आराधनाय नमस्करणाय माननाय प्रकाशनाय (यथा श्रोशद्रूणे "आयसे" लिखितं अत्रस्थाने "आअद् दीश्" उच्चरणीयं यावत् । आ० न० मा० प्र० इति सर्वत्र ज्ञेयम्) । तेषु निमंत्रयामि । (अस्मदुक्तेषु) । (क्ष्नूमनिः या भवति तां उक्त्वा) । सन्मानकृत्या । (किल आनंदकरणेन) । आराधनाय नमस्करणाय माननाय प्रकाशनाय ॥

मुक्तात्मनाम् वृद्धीनां बलिष्ठानां अधिकशक्तीनां पूर्वन्यायवतां वृद्धीनां नवान्वयनिकटानां वृद्धीनां निजस्य च आत्मनो वृद्धेश्च आ० न० मा० प्र० ॥ विश्वेषां पुण्यगुरूणां आ० न० मा० प्र० ॥ विश्वेषां उत्तमदानानां इअज्दानां परलोकचारिणां पृथ्वीचारिणां च ये सन्ति आराधनीयाश्च नमस्करणीयाश्च पुण्यात् उत्कृष्टतरात् ॥

---

॥ ५ ॥ १. All MSS. पुण्याभिलाषिनः.

॥ ९ ॥ १. The following paragraphs to the end of the Hâ are omitted in Spiegel's edition. २. Some MSS. आदरकरणेन.

## हा २५.

॥ १ ॥ १. अमरान् महत्तरान् सुस्वामिनः सुदानिनः आ० [ आराधये ] । २. इमं हूमं पुण्येन उच्चैर्दत्तं आ० । ( किल सदाचारतया रचितं आस्ते ) । ३. इमां च गां जीवामनाम्नीं पुण्येन उच्चैर्दत्तां आराधये । ( किल दुग्धं यत् पुण्यतया रचितं आस्ते ) । ४. इमं च वनस्पतिं हिनवानामानं पुण्येन उच्चैर्दत्तं आराधये । ( उरुअरामम् ) ।

॥ २ ॥ ५. अपां उत्तमानां अमून् प्राणान् हूममतः गोमतः हिनवामतः पुण्येन उच्चैर्दत्तान् आराधये । ( किल सदाचारतया समारचितान् ) । ६. अपां उत्तमानां अपश्च हूमीयाः आराधये । ७. रौप्यीयां च हाऊअनीम् । ( घंटाम् ) । आराधये । ८. लोहियां च हाऊअनीम् । ( घंटाम् ) । आराधये ।

॥ ३ ॥ ९. इमांच वानस्पत्यां बरेस्मनीं संप्राप्तां गुर्वनुज्ञया । अध्ययनं च आचरणं[1] च दीनेः उत्तमायाः माज्दइअस्न्याः । १०. गाथानां च उक्तिं संप्राप्तां पुण्यात्मन्या पुण्यगुर्व्या गुर्वनुज्ञया । ११. इमां समिधं च गंधं च आ० ते अग्ने स्वामिनो महाज्ञानिनः पुत्र । विश्वाश्च विभूतीः मज्ददत्ताः पुण्यात् प्रकटाः आराधये ॥

॥ ४ ॥ १२. स्वामिनं महाज्ञानिनं शुद्धिमंतं श्रीमंतं आराधये । १३. अमरान् महत्तरान् सुस्वामिनः सुदानिनः आराधये । ( क्षणूमनिः याः भवति सा आराधनीया यावत् )[1] ॥

---

## हा २६.

॥ १ ॥ १. मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धिं [ वृद्धीः ] स्तौमि २. निमंत्रयामि स्वाधीनतया[1] आराधये । गृहाणां च वीसानां च जंदानां च[117] ग्रामाणां च जरःथुश्त्रोतिमां [ तिमानां ] च ॥

॥ २ ॥ ३. सर्वेषां अमीषां पूर्वन्यायवतां वृद्धिं [ वृद्धीः ] अत्र आराधये । वृद्धीः[118] एतेषां यत् अहुर्मज्दात् ( वृद्धीः प्रथमं अत्र आ० ) । ४. उत्तमानाम ( तनुः [ तनूः ] अंतःप्राणम्[2] [ अतःपराणां ] ) श्रेष्ठतमानां महत्तराणाम् । ५. गाढतराणाम् ( कार्यन्यायानाम् ) बुद्धितमानाम् [ बुद्धिमत्तमानां ] ( ज्ञानिनाम् ) सुकलेवराणाम् ( यत् कार्यन्याये[3] ) ६. पुण्यात् प्रधानतमां [ तमानां ] च ( सदाचारात् ) । ( किल होर्मिज्दात् यद् वपुः पुण्येन तन्महत्तरम् ) ॥

---

॥ २५ ॥

॥ ३ ॥ १. Several MSS. आचारणं.

॥ ४ ॥ १. $K_7$ adds प्रोक्षाणां आत्मनः आ० यावत् पुण्यवतां वृद्धीनां ॥ आराधना वाक् ॥ पूर्वोक्तवत् ॥.

॥ २६ ॥

॥ १ ॥ १. $TDA_2$, $K_7$, $H_2$, $EMU_{17}$ $NMRL_1$ $MLHL_1$ स्वाधीनया.

॥ २ ॥ १. Sp. अमीषां वृद्धिः प्रथमं अव. २. $TDA_2$, $H_2$ $EMU_{17}$ $NMRL_1$, $MLHL_1$, तनुः अतः प्राणं; $K_7$ तनुः अतः प्राणां [ तनूः अतः पराणां ? ] ३. Several MSS. कार्यन्याया.

॥ ३ ॥ ७. मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धिं [ वृद्धीः ] आराधये। ८. यत् अमिशास्पिंतानां स्वामिनां अभिलाषश्रेष्ठः [ अभिलाषनेत्राणां ? ] । ( यत् शुभं अभीप्सयां[1] क्रियते ) । ९. कार्यं[2] पारंपर्येण ( कार्यं[3] [ कार्येण ? ] इदं न्यायेन ) दृढता [ दृढानां ] स्वामिनाम् ।

॥ ४ ॥ १०. यत् अमृत्युमतां[1] मुक्तात्मनां ॥ पूर्वन्यायवतां प्रथमं शिक्षापनायं[1a] [ शिक्षापणायां ये ] ( प्रथमं शिष्याः जरथुश्त्रस्य संजाता अभवन् ) ११. अत्र मुक्तात्मनां नराणां नारीणां स्वामिनां[119] दीनिकृतानां संपूर्णतेजवतां [ ०तेजस्विनां ] आत्मनां वृद्धिं आराधये । १२. यत् उत्तमाः नराः मुक्तात्म [ मुक्तात्मानः ] संजाता [:] संति ॥ १३. गोजातीनां उत्तमदानानां आत्मानं आराधये ।

॥ ५ ॥ यत् उत्तमाः नराः मुक्तात्मानः संजाताः संति । गइओमर्दस्य मुक्तात्मनः वृद्धिं आराधये । १५. जरथुश्त्रस्य स्पितामपुत्रस्य अत्र मुक्तात्मनः पुण्यं कार्यं पुण्यां वृद्धिं आराधये । १६. कइगुस्तास्पस्य मुक्तात्मनः वृद्धिं आराधये । १७. इसदवास्त्रस्य जरथुश्त्रपुत्रस्य मुक्तात्मनः वृद्धिं आराधये ॥

॥ ६ ॥ १८. नवान्वयनिकटानां अत्र मुक्तात्मनां मुक्तात्म[नी]नां[1] नराणां नारीणां स्वामिनां स्थानं दीनिकृतानां संपूर्णप्रकटपरिस्फुटात्मनां वृद्धिं [ वृद्धीः ] आराधये । १९. यत् उत्तमाः नराः मुक्तात्मानः संजाताः संति । २०. समं समग्राभिः मुक्तात्मनां वृद्धिभिः याः परोक्षाणां मुक्तात्मनां याश्च जीवमतां मुक्तात्मनां याश्च नराणां अजातानां अक्षयत्वकारिणां लाभमताम् ॥

॥ ७ ॥ २१. अत्र एतेषां यत् मृतानां आत्मनां आराधये यत् मुक्तात्मनां वृद्धिम् [ वृद्धीः ] २२. सर्वेषां तत् यत् इदं गृहाणां [ अस्य गृहस्य ] नवान्वयनिकटानां मृतानां एर्वदानां शिष्याणां आत्मनां [ आत्मनो ] नराणां नारीणां अत्र मुक्तात्मनां आराधये ॥

॥ ८ ॥ २३. सर्वेषां एर्वदानां मुक्तात्मनां वृद्धिं [ वृद्धीः ] आराधये ॥ २४. सर्वेषां शिष्याणां मुक्तात्मनां वृद्धिं [ वृद्धीः ] आराधये ॥ २५. सर्वेषां नराणां मुक्तात्मनां वृद्धिं [ वृद्धीः ] आराधये ॥ २६. सर्वासां नारीणां मुक्तात्मनां वृद्धिं [ वृद्धीः ] आराधये ॥

॥ ९ ॥ २७. सर्वेषां असंपूर्णनराणां उत्तमकार्याणां मुक्तात्मनां वृद्धिं [ वृद्धीः ] आराधये ॥ २८. ग्रामाणां च मुक्तात्मनां वृद्धिं [ वृद्धीः ] आराधये ॥ २९. बलिष्ठग्रामाणां मुक्तात्मनां वृद्धिं [ वृद्धीः ] आराधये ॥

॥ १० ॥ ३०. नराणां च मुक्तात्मनां वृद्धिं [वृद्धीः] आराधये ॥ ३१. नारीणां च मुक्तात्मनां वृद्धिं [ वृद्धीः ] आराधये ॥ ३२. सर्वेषां मुक्तात्मनां उत्तमानां साधकानां गुरुतराणां वृद्धिं [ वृद्धीः ] आराधये । ३३. यत् गइओमर्दपुरुषात् यावत् लाभवंतं [ लाभवान् ] विजयकर्ता ( सउशिओशः ) ॥

---

॥ ३ ॥ १. $K_7$ अभिलाप्सा? २. Found only in $K_7$. ३. Several MSS. have कार्यं.

॥ ४ ॥ १. $EMU_{17}$ मृत्युमतां. १a. $TDA_2$, $NMRL_1$, $H_2$, $EMU_{17}$, MFL, $MLHL_1$, $K_7$ शिष्यापना यत् [ शिष्याः ऽपणायन् ? ].

॥ ६ ॥ १. $K_7$ मुक्तात्मीनां; $TDA_2$ मुक्तात्मनिनां.

॥ ११ ॥ ३४. सर्वेषां वृद्धिं [ वृद्धीः ] मुक्तात्मनां आराधये ॥ ३५. मृतानां आत्मनां आ० यत् मुक्तात्मनां वृद्धिं [ वृद्धीः ] आराधये ॥

आराधना वाक् ॥

## हा २७.

॥ १ ॥ १. अत्र तं विश्वेभ्यः महत्तरं संगृह्णामि स्वामिनं च गुरुं च यं अहुर्मज्दम् । २. शास्त्रं हंतरि अदृश्ये दुर्गतिनि । ( आहर्मने ) । शास्त्रं क्रोधे हिंसाशस्त्रिणः [ ०णि ] । शास्त्रं माजंदरदेशीयेषु देवेषु । शास्त्रं विश्वेषु देवेषु विभ्रमकरेषु च दुर्गतिषु ॥

॥ २ ॥ ३. वृद्धिदानं स्वामिने महाज्ञानिने शुद्धिमते श्रीमते । ४. वृद्धिदानं अमरेभ्यो महत्तरेभ्यः । ५. वृद्धिदानं तिस्तराय तारकाय शुद्धिमते श्रीमते । ( वृष्टिनक्षत्राय ) । ६. वृद्धिदानं नराय मुक्तात्मने । वृद्धिदानं विश्वेभ्यः स्पनामहनिओसृष्टिभ्यः पुण्यात्मनीभ्यः ॥

॥३ ॥ महाज्ञानिन्[1] एवं मदर्थं उत्कृष्टतरां सरस्वतीं सत्कर्मतां च[1a] ब्रूहि

तया त्वं हे उत्तममनः हे[2] धर्म्म ऋणं[3] देयाः स्तुत्या

युष्माकं स्वामितया[3a] स्वामिन्[4] अक्षयत्वं स्वेच्छया परिस्फुटं दास्यते भुवने ॥[5]

॥ ४ ॥ स आदेशाभिलाषः प्रमोदाय प्राप्नोतु नरेभ्यो नारीभ्यश्च जरथुस्त्रीयाभ्यः

उत्तमं च प्रमोदाय मनः ( किल ग्वह्मनोऽपि इदं कार्यं करोतु )

ये दीनेः अभिलाषुकाः ( किल ये नारीनराः दीनिशीलाः ) अनुरूपाः प्रसादस्य ( परलोकीयस्य )

पुण्यस्य अभीप्सवो भक्तिशीलं ( शिष्यं ) । येषां अभीप्सया स्वामिनो महत्त्वं महाज्ञानिनः ( किल मे दीनिः अन्वये प्रवर्त्तते ) ॥ ( चतुर्वारं[1] वाच्यो गुजश्त ) ॥

॥ ५ ॥ [1]...............

॥ ६ ॥ ये लाभयंति स्वामिनं महाज्ञानिनं संपूर्णमनसां च ( पृथ्वीं )

धर्म्मंच वृद्धिदं पृथ्वीविभूतेः मनश्च उत्तमं ( ग्वह्मनं अमरं ) सहरेवरंच ( सप्तधातूनां पतिं )

शृणोमि अहं ( किल यत् बूवत्ति [ ब्रुवंति ] तदहं शृणोमि ) क्षमयामि अहं ( किल चेत् मत्तः पापं तेषां मूले संभूतमास्ते तदहं क्षमयामि )

ददामि च कांचित् प्रभूतां ( पार्थिवत्वं यत् परलोकीयं इहलोकीयं च ) ॥ ( त्रिवारं वाचो [ वाच्यो ] गुजस्तः ) ॥

---

॥ २७ ॥

॥ ३ ॥ १. $H_2$, $TDA_2$, $MLHL_1$, $EMU_{17}$, MFL, $NMRL_4$, $K_7$ महाज्ञानिनु १a. Sp. तत्कर्म्मतांच ब्रूहि ( गाथाभवां ). २. $K_7$ हि. ३. $NMRL_4$, $K_7$, $TDA_2$, $MLHL_1$, MFL रुणां. ३a Sp. राज्येन. ४. $K_7$, $NMRL_4$, $TDA_2$ $MLHL_1$; स्वामिनु. ५. Sp. ( चतुर्वारं वाच्यो गुजस्तः ).

॥ ४ ॥ १. $TDA_2$, $H_2$, चत्वारं.

॥ ५ ॥ १. All MSS. do not give the Sanskrit translation of this passage, though some give only the Avesta text, while others give the Avesta with Pahlavi rendering of it.

॥ ७ ॥ उच्चैर्मां शोधय स्वामिन् ( किल पीडाकरात् आहर्मनात् शुद्धं कुरु ) । संपूर्णमानसतां अध्यवसायं[1] च देहि ॥

गुरुतर अदृश्यमूर्ते महाज्ञानिन् ग्वह्मनस्य ग्रहीतारो भवाम[1a]ः । ( किल मे तनुना अभ्यागतोऽस्तु ) ॥

पुण्यं हठिनः उपरि शक्तं भूयात् ( किल बलात्कारिणः आहर्मनस्योपरि शक्तं भूयात् ) उत्तममनसः प्रभुत्वेन

आनंदं स्वेच्छया आस्वादयितॄन् ( किल केषांचित् यदृच्छया आनंदकरान् ) देहि मह्यं यान् युष्माकं शक्त्यां[2]ः ( किल कार्येषु न्यायेषु ये युष्माकं शक्त्या संति तान् मे देहि ) ।

तान् स्वामितया अहुर्मज्दस्य यान् उत्तममनसा भक्तिशीलान् ( किल शिष्यान् तान् मे देहि ) ॥

प्रकृष्टं पृथिव्यां संपूर्णमनस्यां पुण्येन दीनिं प्रचिह्नायं[3a] ( किल सदाचारितया दीनिसाभिज्ञानेन[4] कुरु ) ॥

एवं दक्षिणया जरथुश्त्रो ऽहं तनोश्च[5] निजं जीवं ददामि ।

पुरःप्रवृत्त्या ( किल अग्रतया ) उत्तममनसे अहुर्मज्दाय ।

कर्मणि च पुण्याय[5a] ( किल कर्म तदेव करोमि यत् पुण्याय रोचते ) या च उक्तिः श्रुति[6]ः [ तया ] सहरेवराय राज्ञे ॥

---

## [ अथ पंच गाथाः जरथुश्त्रस्य ]

## हा २८.

॥ १ ॥ ०. शोभनमनसा शोभनवचसा शोभनकर्मणा[1] बभूव पुण्यात्मा जरथुश्त्रः । ( मनसः वचसः कर्मणः श्रद्धापारत्वात् शुभानुरूपो बभूव यद्[1a] असौ एवं चकार ) । प्रकृष्टं अमराणां महत्तराणां गाथाः संजग्राह । ( किल ताः पंक्त्या निदर्शयामास । सा पंक्त्या [ सपंक्त्या ? ] निदर्शयनाय कार्यं इदं बभूव यद्[1b] असौ विस्मर्तुं न[121] आस[1c] । यतोभ्यः [ यतिभ्यः ? ] कोमला[2] यथा सर्वेऽपि कार्यन्यायाः[3] ये समग्रेभ्यः अविस्तार्थेभ्यः प्रकटाः तान् अंतर्गाथासु निदर्शयामास[122] ताभ्यः[4] प्रणामं चक्रे यत् ) "नमो युष्मभ्यं हे गाथाः पुण्यात्मन्यः"

॥ ७ ॥ १. $NMRL_1$. $EMU_{17}$, अध्यवसायां. १a. $NMRL_4$, $EMU_{17}$ अस्मि. २. $H_2$, $NMRL_4$, $EMU_{17}$, $TDA_2$ शक्ता. ३. $EMU_{17}$, $NMRL_4$ संपूर्णमनसा. ३a. $K_7$ प्रसुन्हय (?). ४. $TDA_2$, $H_2$, $K_7$, $EMU_{17}$, $NMRL_1$ दीनिं साभिज्ञेन. ५. $TDA_2$, $H_2$, $K_7$, $EMU_{17}$, $NMRL_1$ तनुश्च. ५a. Most MSS. पुण्येय (?). ६. $MLIIL_1$, $TDA_2$, $H_2$, $K_7$, $EMU_{17}$ यांच उक्तिं श्रुतिं.

॥ २८ ॥

॥ १ ॥ १. $H_2$, $TDA_2$, $NMRL_4$, $K_7$ शोभनमना [०नाः] शोभनवचा [०चाः] शोभनकर्म्मांच. १a. $TDA_2$, $EMU_{17}$, $K_7$, $H_2$ यद्यसौ. १b. $TDA_2$, $K_7$, $H_2$ यद्यसौ. १c. $K_7$, $H_2$, $TDA_2$ नस. २. $H_7$, $TDA_2$, $K_7$ यतोभ्यकामला.........यथा. ३. $H_2$, $TDA_2$ कार्ये न्याये. ४. $K_7$, $H_2$, $TDA_2$ ताभ्यां.

॥ २ ॥ २. वेद्मि तत् यद् अस्मि महाज्ञानिन् अप्रार्थयिता । ( किल मे इदं अशक्तित्वं किमर्थं इति वेद्मि ) ।

अहं किंचित्-न-संचयः[1] ( किल मे विभूतिः किंचित्तरा ) । यश्च किंचिन्नरोऽस्मि ( किल मे सैन्यं शस्त्राणि च किंचित्तराणि ) ( इदं च किमर्थं इति वेद्मि ) ।

क्रंदामि त्वयि तत् एतद् आलोकय स्वामिन् । ( किल मह्यं उपायं समीहस्व ) ।

प्रमोदं समीहितं च [ देहि ] यन्मित्रं[1a] मित्राय ददाति ।

शिक्षया उत्तमस्य पुण्यलक्ष्मीं मनसः । ( चेत् सद्यापारतया शिक्षितोऽस्मि तन्मह्यं प्रसादं देहि ) ॥ ( प्रश्नः समीहितं च जरथुश्त्रस्य ) ॥

॥ ३ ॥ ३. कदा ताः दातयो महाज्ञानिन् या विकाशयिभ्यो[1] अह्नाम् । (अक्षयकराः । किल स कालः[1a] कदा प्राप्नोति यत्र अंतः दिनेषु कार्यं पुण्यं प्रवर्धयंति ) ।

भुवने परिस्फुटं प्रकृष्टं पुण्यतया प्रब्रुवंति ।

कर्मसु शिक्षां लाभमतां बुद्धेः । ( एवं यथा दीनितः प्रकटम् ) ।

केषु लाभः उत्तमेन प्राप्नोति मनसा । ( किल तं प्रसादं यं सद्यापारितया[1b] ददते[2] केभ्यो ददते[3] ) ।

अहं ते शिक्षां समीहे स्वामिन् । ( दीनिं ते ) ॥ ( प्रकृष्टा वाक् निदर्शयनं च जरथुश्त्रस्य ) ॥

॥ ४ ॥ ४. एवं ते दुर्गतिनः ये धर्मं समाचरतः रक्षंति[1] ।

गां समादेशात् । ( किल यः कार्यं पुण्यं कुरुते तस्य गां दानात् केभ्यश्चित् प्रतिस्खलंति ) । देशेषु च ग्रामेषु च ।

दुष्टो बलात्कारी भवति स्वीयैः[1a] कर्मभिः अधो मृतः[2] । ( किल अपजीवो भवति ) ।

प्राप्ते राज्ये महाज्ञानिन् प्रतिद्वंद्वयितारो हंतारो वा । ( किल मनुष्यान् पापान् अन्यथा समीहंते कर्तुम्[2a] ) ।

एते ते प्रकृष्टं गवां समूहेषु सुनिर्वाणज्ञानतरकर्माणः[3] । ( किल प्रतियत्नं गोपशूनां सुपरिज्ञानतया कुर्वंति[4] ) ॥ ( निदर्शयनं जरथुश्त्रस्य ) ॥

॥ २ ॥ १. $TDA_2$, $H_2$, किंचित्संचयः. १a. $NMRL_4$, $K_7$, $EMU_{17}$ जन्मित्रं [ ज for य ]. २. $TDA_2$, $H_2$, $MLHL_1$ समीहवं.

॥ ३ ॥ १. $H_2$, $K_7$, $TDA_2$, विकाशयत्यः. १a. $EMU_{17}$ कारः. १. b. $NMRL_4$, Some MSS. सद्यापारतया. २. $EMU_{17}$, $MLHL_1$, $NMRL_4$ ददांते; $H_2$, $K_7$,$TDA_2$ ददंते. ३. $NMRL_4$, $H_2$, $K_7$, $TDA_2$, $MLHL_1$ ददंते.

॥ ४ ॥ १. Corrected from रक्षति in all. १a. $NMRL_4$ स्वाद्वयैः (?). २. MFL आद्यमृतः; $EMU_{17}$ आधामृतः; $NMRL_4$ अधामृतः २a. $TDA_2$, $K_7$, $H_2$, $EMU_{17}$, $NMRL_4$ धर्तुं. ३. $MLHL_1$, $NMRL_4$ सुनिर्वाणज्ञतरकर्मणिः; $EMU_{17}$, $K_7$ सुनिर्वाणिज्ञतरकर्माणः. ४. Most MSS. कुर्वंते.

॥ ५ ॥ ५. यो युष्माकं राज्ये अदाता नृशंससमागमनः । ( किल अंतर् अस्मिन् जगति दानं न कुरुते छेदं कर्तुं च आयाति ) ।

सुप्रसिद्धो वा शुद्धसत्कारतया मित्रतया वा । ( यैः [ यः ] पापकर्मणां निग्रहं कुरुते स एवं परिज्ञेयः यत् पुरुषः सत्कारी मैत्रीवान् ) ।

सत्येन जीवनीयः यो मुक्तात्मा यश्च दुर्गती । ( किल सर्वः कोऽपि न्यायमत्तया धार्यः ) ।

विशदोऽस्ति स प्रकृष्टं स्वाधीनत्वे वाक्यैः [ वाच्यः ] ( किल उत्तमोऽस्ति स पुमान् स्वाधीनतया धार्यः ) ।

उच्चैर्निर्गतोऽस्ति यो महाज्ञानिन् कदर्थनत्वात् स्वामिन् । ( दुर्गतित्वात् ) ॥ ( प्रकृष्टा वाक् जरथुश्त्रस्य प्रत्युत्तरवाक् होर्मिज्दस्य ) ॥

॥ ६ ॥ ६. यः एवं संप्राप्तं नो नराय प्रार्थयितुं समागताय । ( किल यः कार्याय पुण्याय समायाति तस्मै न दत्ते ) ।

द्रुजः स सृष्टेः । ( किल सृष्टिं द्वेषिणीं कुरुते ) । त्रासयनीयश्च । ( किल भयं निदर्शयन्[1] [ निदृश्य ] निहन्तव्यः ) ।

स यतो दुर्गती यः दुर्गतिभ्यः विकाशयिता ।

स मुक्तात्मा यो मुक्तात्मभ्यः समादेष्टा[2] । ( अंतः संशयत्वेऽपि यैः[3] किंचित् दुर्गतिभ्यो दत्ते दुर्गत्या परिज्ञेयः यश्च किंचित् मुक्तात्मभ्यो दत्ते मुक्त्या परिज्ञेयः ) ।

यावत् दीनिः पूर्वदातेः होर्मिज्दस्य । ( यावत् सओशीओशः प्राप्नोति सदैव एवं परिज्ञेयम् ) ॥ ( संतप्तगिरा[4] प्रश्नः जरथुश्त्रस्य ) ॥

॥ ७ ॥ ७. के मह्यं महाज्ञानिन् मदीयेभ्यश्च पातारो दत्ताः । ( शिष्येभ्यश्च मदीयेभ्यः ) ।

यतो मयि दुर्गती ( आस्मोगैः[1] ) विदित्वा दधाति द्वेषम् । ( किल मया सह द्वेषं दधाति मे रक्षां के कुर्वंति ) ।

अन्यास्त्वत्तोऽग्नेश्च ग्वह्मनाच्च[2] । ( यतो युष्मान् वेद्मि किल मे रक्षां कुरुषे[3] [ कुरुध्वे ] ) ।

येषां कर्मभिः पुण्यं पालयामि स्वामिन् । ( किल कार्यं पुण्यं करोमि मे रक्षां के कुर्वंति ) ।

तान् मे आदेशेन दीनौ प्रकृष्टं ब्रूहि । ( इदं ब्रूहि यत् दीनिं गुरुणा गृह्णामि[4] [ गृहाण ] ) ॥ ( प्रकृष्टा वाक् जरथुश्त्रस्य ) ॥

॥ ५ ॥ १. MLHL$_1$ आदाना (?) [ अदानी ]. २. TDA$_2$, H$_2$, EMU$_{17}$ वाग्भ्यः.

॥ ६ ॥ १. TDA$_2$,H$_2$ निदर्शयत्री (?). २. Most MSS. समादिष्टा. ३. MLHL$_1$, K$_7$, EMU$_{17}$, NMRL$_4$ संशयत्वेयऽपिग्रः (?) [ अंतः संशयेऽविग्रहः ? ]. ४. EMU$_{17}$ संतपूगिरा (?).

॥ ७ ॥ १. Some MSS. दुर्गतिं आश्मोगाः २. Some MSS, wrongly ग्वह्मनाच. ३. NMRL$_4$ कुरुतः EMU$_{17}$, MLHL$_1$ कुरुषत (?); K$_7$, H$_2$ कुरुष (?). ४. MLHL$_1$, K$_7$, EMU$_{17}$, NMRL$_4$ गृन्हं (?); TDA$_2$ ग्रह्णं; H$_2$ गृह्णं; MFL ग्रहणं.

॥ ८ ॥ ८. यो वा मे एनां जगद्विभूतिं ददाति द्वेषिणे । ( किल लक्ष्मीं आदेशेन आस्मोगानां धत्ते ) ।

न तस्य अहं नृशंसैः कर्मभिः प्रकृष्टं प्रसर्पयिता । ( किल तस्य तनौ आत्मनि च छेदकरैः कर्मभिः न अहं निग्रहं संपूर्णं कर्तुं शक्तः ) ।

प्रत्याभिमुखप्राप्त्या तेन द्वितयेन[1] । ( किंचित् यत् परलोकीयं इहलोकीयं शुद्धं न कुरुते )। तस्य प्राप्नोति पीडया ।

तनौ[1a] । ( तस्य आस्मोगस्य ) । स यः एनां सुजीवनितया पाता ।

नो दुष्टजीवनितया । ( राजा यः सृष्टिं सद्व्यापारतया रक्षति स तस्य निग्रहं कुरुते ) ।

कदाचित् होर्मिज्दः[2] दुःखकर्ता[3] निकृष्टानाम् ॥ ( प्रश्नः प्रकृष्टा वाक् जरथुश्त्रस्य ) ॥

॥ ९ ॥ ९. कोऽस्मै[1] [ ऽसौ ] यो मह्यं[1a] दक्षिणां आस्वादयति प्रथमम् । ( किल मे प्रथमं छात्रत्वं कः कुरुते ) ।

यथा तव प्रीतो[2] [ प्रीतौ ] उच्चैः उत्तिष्ठामि । ( दीनौ ते ) ।

कर्मणा महत्तमं[3] स्वामिन् पुण्यात्मन्[4] ।

यथा तुभ्यं शिष्यः । ( वपुः शिष्यतया ददौ मह्यं को ददाति ) यथा शिष्याय गव; घटयित्रे उक्तम् । ( किल युज्यते दातुम् ) ।

समीहे अहं तौ ते उत्तमेन मनसा । ( अविस्ताअविस्ताअर्थं च इयं सद्व्यापारतया स्वाधीनं शक्यते कर्तुम् ) ॥ ( निदर्शयनं जरथुश्त्रस्य ) ॥

॥ १० ॥ १०. ये वा मह्यं नराः अंगनाः[1] वा महाज्ञानिन् स्वामिन् ॥

दातारो भुवने । ( वपुः शिष्यत्वेन ) । ये च तव वेतृतया उत्कृष्टया । ( दीन्या ते ) ।

भक्त्या भक्तायै[1a] । ( मह्यं जरथुश्त्राय[2] ) । उत्तमस्य राज्येन मनसः ( सद्व्यापारपार्थिवतायै अहं अस्मि[3] ) ।

यांश्च उत्थापयामि युष्माकं नामस्तुतये । ( दीनये युष्माकम् ) ।

प्रकृष्टं ते विश्वेऽपि चंदोरे प्रब्रुवंति उत्तारे । ( किल ये जरथुश्त्रस्य भवंति ते सर्वेऽपि गरोत्थमानभाजः भवंति ) ॥ ( प्रकृष्टा वाक् जरथुश्त्रस्य ) ॥

॥ ११ ॥ ११. राज्याय उपक्रमंति करपाः[1] कीकाश्च । ( अश्रोतारो अदर्शकाः राज्याय अव्यापारिणे ) ।

निकृष्टैः कर्मभिः भुवनं नाशयंति मनुष्याणाम् । ( स्थानं यत् परलोकीयम् ) ।

---

॥ ८ ॥ १. Most MSS. erroneously द्वितीयेन. १a. Most MSS. तनोः. २. $EMU_{17}$, MFL, $H_2$, $K_7$, $TDA_2$, $NMRL_4$ होर्मिज्दात्; $MLHL_1$ होर्मिज्दाय. ३. $EMU_{17}$, $H_2$, $K_7$, $NMRL_4$ दुःखकर्त्री.

॥ ९ ॥ १. $EMU_{17}$ ऽस्मि; $K_7$ $NMRL_4$ असौ. १a. $MLHL_1$, $H_2$, $TDA_2$ तस्मै यो मह्यं कोऽस्मै यो मह्यं. २. $H_2$, $K_7$, $TDA_2$, $MLHL_1$, $EMU_{17}$, $NMRL_4$ प्रीतौ. ३. $NMRL_4$, $K_7$, $EMU_{17}$ महत्तमं. ४. $TDA_2$, $MLHL_1$, $EMU_{17}$, $NMRL_4$ पुण्यात्मनः.

॥ १० ॥ १. $K_7$ has in the Avesta text "*nâçenâvâ*" and the Sanskrit नाशः अंतनाः वा (?). १a. Several MSS. भक्ताया (?) $NMRL_4$ भक्तयाया (?) २. $NMRL_7$ $H_2$, $MLHL_1$, $EMU_{17}$ MFL जरथुश्त्रस्य ३. $TEA_2$ सद्व्यापारिपार्थिवताया अहमस्मि.

॥ ११ ॥ १. Spiegel and Some MSS. inadvertently करणः which is corrected here.

ये निजाय आत्मने निजायै च आक्रोशं ददंति [ ददति ] दीनये ।
यदि [ यदा ] उपरि प्रयांति परलोके चंद्रोरे उत्तारे । ( तत्र आक्रोशं ददंति [ ददति ] ) ।
( सदैव ) यावत् सर्वं द्रुजस्थाने संस्थितिः । ( यावत् वपुः पाश्चात्यं नरके संस्थितिः भवति ) ॥ ( प्रकृष्टावाक् जरथुश्त्रस्य ) ॥

॥ १२ ॥ १२. ये उच्चैः पुण्यं नाभे[1] नाभिजेभ्यः
तुरुष्काणां[2] उत्थापयंति प्रश्नैः[201] संलापैश्च । ( किल तेषां तत्र प्रतिकृतिर्भवति ) ।
संपूर्णमनसा जगद्विभूतेः वृद्धिं ददंति [ ददति ] व्यवसायतया [ व्यवसायितया ] ।
एवं तेन उत्तमेन सह निवसंति मनसा । ( सह सद्यापारतया ) ।
ते प्रीतिं महाज्ञानिनः समुद्गिरंति स्वामिनः । [ तत् किंचित् निगदंति येन तेभ्यः प्रसादः प्राप्नोति ) ॥ ( प्रकृष्टा वाक् जरथुश्त्रस्य ) ॥

॥ १३ ॥ १३. यः स्पितमान्वयाय[1] [ स्पितमकुलजाताय ] जरथुश्त्राय दक्षिणां दाता
मनुष्येषु सत्करणीयः[2] स नरः प्रकृष्टश्लाघादानेन ( स्तुत्या सद्यापारिण्या ) ।
एवं तस्मै महाज्ञानी भुवनं ददाति स्वामी । ( स्थानं यत् परलोकीयम् ) ।
तस्य भूविभूतिं उत्तमं प्रवर्धयति मनः । ( उत्तममनाः अमरः ) ।
तं वो धर्मं[3] सदैव ध्यायामि शुद्धसखायम् [ ०सखं[3a] ] । ( दीनौ युष्माकं तं गुस्तास्पं यः सखायत्वं [सखित्वं ]दीनेः सद्यापारतया कुरुते ) ॥ ( प्रश्नः जरथुश्त्रस्य[4] प्रत्युत्तरवाक् आहर्मनं च जरथुश्त्रस्य ) ॥

॥ १४ ॥ १४. जरथुश्त्र कस्ते मुक्तात्मा मित्रो
महता महत्त्वेन । ( किल निर्मलेन उत्तमत्वेन ) । कस्मैच प्रकृष्टोक्तिदाने कामः । ( किल ते दीनिः कस्मैच रोचते कस्य ब्रूषे[1] ) ॥
एवं असौ राजा गुस्तास्पः संग्रामी ।
यः स्तोता महाज्ञानिन् सहवासिनो व्यावर्तयति स्वामिन्[2] । ( किल सह-अन्वयीकान् दीनौ समानयति ) ।
तान् आह्वानयामि उत्तमस्य उक्तेषु मनसः । ( किल ये स्पितमान्[3] संति तान् दीनौ समानयामि ) ॥ ( निदर्शयनं जरथुश्त्रस्य ) ॥

॥ १५ ॥ १५. हे हएचदस्पीयाः वाक् युष्माकं हे स्पितमीयाः ।
यत् दानं विविनक्तुं[1] [ विविनक्त ] यश्च[2] अदानम् । ( किल युष्माकं किंचित् यत् सद्यापारितरं अव्यापारितरात् युज्यते विवेकुम् ) ।

---

॥ १२ ॥ १. M.; $EMU_{17}$ नाभैः (?). २. $K_7$, $H_2$ तुरुत्काणां; MFL कुरुत्कानाणां.

॥ १३ ॥ १. M. स्पितमजाय; $NMRL_4$, $EMU_{17}$ स्पितमावाय; $H_2$, $TDA_2$ स्पितमाय. २. $NMRL_4$, $EMU_{17}$, $MLHL_1$, $TDA_2$ सत्कार्यणीयः $H_2$ सत्कार्यिणीयः; $K_7$ सत्कार्येणीयः ३. $NMRL_4$, $H_2$, $MLHL_1$ धर्म. ३a. Several MSS. सखायं त्वं. ४. $NMRL_4$, $EMU_{17}$, MFL, $H_2$ $K_7$, $MLHL_1$, $TDA_2$ होर्मिज्दस्य.

॥ १४ ॥ १. $MLHL_1$, $K_7$, $H_2$, $TDA_2$ ब्रूते. २. $MLHL_1$, $H_2$, $EMU_{17}$, $TDA_2$ स्वामिनि. ३. $MLHL_1$, $H_2$, $TDA_2$ अस्पितमान्.

॥ १५ ॥ १. $EMU_{17}$, $NMRL_1$ विविनक्तु; $MLHL_1$, विविनक [ विविनक्त? ]. २. All incorrectly यश्च.

तैर्युष्माकं कर्मभिः पुण्यं युष्मभ्यं दास्यते । ( प्रसादः ) ।

यानि ददौ ( द्दौ ) प्रथमं होर्मिज्दः ॥ ( निदर्शयनं जरथुश्त्रस्य प्रत्युत्तरवाक् होर्मिज्दस्य ) ॥

॥ १६ ॥ १६. फेरशउस्तर परत्रे[१] [ परत्र ] तुभ्यं दक्षिणाप्रवृत्तयः ( किल तुभ्यं दक्षिणाः अंतः गरोत्थमाने कार्याः ) ।

हे हूर्तेगुआजाः [ हुओगुआयाः । हुओगुआजाः ] ताभिर्यः संतुष्टः तस्य शुभे स्थितिः । ( किल तं प्रसादं [ स प्रसादः ] यस्य रोचते तस्य परत्रे [ ०त्र ] शुभं भवति ) ।

परत्रे [ ० त्र ] धर्मः समाश्लिष्टः संपूर्णमनसा । परत्रे [ ० त्र ] उत्तममनाः ईप्सा-[२]नोऽस्ति राज्यम् ।

परत्रे [ ० त्र ] महाज्ञानी स्वेच्छया स्थाने निवसति स्वामी ॥ ( निदर्शयनं प्रत्यभिमुखवाक् प्रकृष्टावाक् च जरथुश्त्रस्य ) ॥

॥ १७ ॥ १७. एवं वः प्रमाणं वक्ता । ( किल दीनिं युष्माकं वक्ता ) ।

न अप्रमाणी गुरु जामास्पो[१] हूर्तेगुआजः[१a] [ हुओगुआजः ] । ( किल यत् दीनिवात्[२] [ दीनित्वात् ] न प्रकटं तत् न ब्रूते ) ।

सहदात्यां[२a] वः आस्ते नमस्कृतये[२b] श्रोशदक्षिणादानेन[३] । ( सहदातिरियं यत् दीनिं युष्माकं ब्रूते वपुश्च दक्षिणीकुरुते ) ।

यो विविनक्ति दानं च अदानं च । ( तस्मै ददाति यस्मै युज्यते दातुम् ) ।

ज्ञाता प्रमाणं सत्यतया महाज्ञानिनः स्वामिनः । ( दीन्यां[४] होर्मिज्दस्य ) ॥ (प्रकृष्टा वाक् जरथुश्त्रस्य ) ॥

॥ १८ ॥ १८. यो मदर्थं सदैव सः एवं वपुषा उत्कृष्टतरः । ( किल जगति किंचित् इदं एवं उत्कृष्टतरं यत् छात्रत्वं मे क्रियते ) ।

मह्यं लक्ष्मीं अंतः[१] उत्तमं आस्वादयति मनः । ( किल यो मह्यं लक्ष्मीं ददाति तस्मै ग्वह्मनः प्रसादं ददाति ) ।

अनास्तिकत्वं तस्मै योऽस्मभ्यं अनास्तिकत्वं दत्ते ।

हे महाज्ञानिन् हे धर्म युष्मान् स्वेच्छया सत्कारयामि ।

तां अहं बुद्धया मनसा च विविनज्मि । ( दीनिम् ) ॥ ( प्रत्युत्तरवाक् प्रकृष्टावाक् च होर्मिज्दस्य[२] ) ॥

---

॥ १६ ॥ १. Thus all ; but MFL परात्र. २. NMRL$_1$ ईप्मानास्ति ; TDA$_2$, MLHL$_1$, K$_7$, H$_2$, EMU$_{17}$ इष्मानास्ति.

॥ १७ ॥ १. K$_7$, NMRL$_4$, MLHL$_1$, TDA$_2$, H$_2$ यामास्पो [ य for ज ]. १a. MLHL$_1$ हुओगुआयः २. NMRL$_4$ दीनिवाक्; TDA$_2$, H$_2$ दीनित्स्वात्; K$_7$ दीनिवान्. २a. EMU$_{17}$ सहदाता. २b. Several MSS. नमस्कृताय. ३. NMRL$_4$, EMU$_{17}$ श्रोशे. ४. K TDA$_2$ दीन्या.

॥ १८ ॥ १. Thus corrected by Spiegel. All have वतः or वंतः except MLHL$_1$ which has लक्ष्मी यत्. २. EMU$_{17}$, H$_2$, K$_7$, TDA$_2$, MLHL$_1$, NMRL$_4$ जरथुश्त्रस्य.

॥ १९ ॥ १९. यो मे पुण्यं प्रकटं तस्मात् समाचरति ।

जरथुश्त्रस्य यः कामः प्रकृष्टतमः । ( किल यो जरथुश्त्रस्य निंदर्शिता [ निदर्शितः ] आस्ते ) ।

स प्रसादे अनुरूपो भवति उभयोर्भुवनयोः ।

मां गृहीतुः [ ग्रहीत्रा ] संश्लिष्टा सदैव गोअजीनाम्नी । ( यो मह्यं किंचित् ददाति तेन सह संश्लिष्टा भवति सदैव गोअजीनाम्नी ) ।

तया एव मे संतोषः त्वदीयया महाज्ञानिन् विज्ञात्या । ( दीन्या ते ) ॥

" उस्ता अहमाए" ( द्विवारं वाच्यो गुदस्तः ) । कं-नमेजां प्रकृतिं आराधये । उस्त-उअइतीं गाथां पुण्यात्मनीं पुण्यगुर्वीं आराधये । उस्तवत्याः गाथायाः समग्रां दातिं आराधये । ( आराधना वाक् ) ॥

## हा ४७. ॥ ४६ ॥

नमो युष्मभ्यं गाथाः पुण्यात्मन्यः ॥[1]

॥ १ ॥ १. महत्तरात् अदृश्यत्वात् उत्कृष्टतरात् च मनसः ( यत् प्राप्तं अस्ति अस्मभ्यं कृतं यत् न प्राप्तं अस्ति तन्न मया आलोकितम् )

संश्लिष्टात् पुण्येन कर्मणश्च वचसश्च ( कर्मणे सद्व्यापारिणे अस्माकं कृतं वचसे च सदाचारिणे अस्माकं उक्तम् )

अस्मभ्यं ( स्वाधीनेभ्यो मनुष्येभ्यः ) ददौ अविर्दादं ( उदकं ) अमिर्दादं (वनस्पतिम्)

महाज्ञानिनः [ महाज्ञानी नः ? ] राज्याय संपूर्णमनसा स्वामी ॥ ( प्रत्युत्तरवाक् प्रकृष्टा वाक् च होर्मिज्दस्य ) ॥

॥ २ ॥ २. अस्य अदृश्यमूर्तेः महत्तरस्य उत्कृष्टतरस्य

जिह्वायां वचां [ वाचां ] उत्तमेन मुखे च वा मनसा ( किल यत् जिह्वया मुखेन च युज्यते कर्तुं सद्व्यापारितरं ब्रूते )

संपूर्णमनसा हस्ताभ्यां कर्माणि कुरुते

स निर्वाणे ज्ञानी [ निर्वाणज्ञानी ] ( किल निर्वाणज्ञानं सद्व्यापारतया वेत्ति ) स पिता पुण्यस्य महाज्ञानतया । ( किल पालनां [ पालनं ] सृष्टेः सद्व्यापारतया कुरुते ) ॥ ( प्रकृष्टा वाक् जरथुश्त्रस्य ) ॥

॥ ३ ॥ ३. असौ अदृश्यमूर्तिस्त्वं असि महत्तरः ।

योऽस्मभ्यं ( स्वाधीनेभ्यः ) गां दक्षिणाकरणं [ ०करणां ] समासृजत् ।

एवं तस्याः आहाराय आनंदाय च अदाः संपूर्णमनसा ।

---

॥ १९ ॥ १. TDA₂, H₂, EMU₁₇, M., NMRL₄ निदर्शितः; MLHL₁ निदर्शितिं K₇ निदशिति.

॥ ४७ ॥

१. NMRL₄ omits the text as well as the translation of this whole chapter, giving reference to Hâ 18, यथा "दाइदिमोइ" सर्गे लिखितं. Similarly MLHL₁, TDA₂, K₇, EMU₁₇, MFL, and H₂.

यः संश्लिष्टः उत्तमस्य महाज्ञानिन् समं प्रश्नेन मनसः । (यस्य बहमनो दत्तोऽभूत् समर्थं [ समग्रं ] यत् चक्रे संप्रश्नतया ग्वह्मनस्य चक्रे ) ॥ ( प्रकृष्टावाक् जरथुश्त्रस्य प्रत्युत्तरवाक् होर्मिज्दस्य ) ॥

॥ ४ ॥ ४. तस्मात् परलोकिनां दक्षिणां छिंदंति दुर्गतिमंतः

महाज्ञानिन् महत्तरात् ( तस्मात् महत्तरात् उत्तमात् पुरुषात् । निश्चलधर्मश्च यः सद्यापारतया संजातोऽस्ति तं विभ्रंशयंति ये आस्रोगाः कपटकर्माणः । येषां वपुषि देवाः सदैव अभ्यागताः संति ) । न एवं पुण्यात्मा ( यतोऽसौ न विभ्रंशयति ) ।

कर्तृतया च ना पुण्यात्मा कृतस्य च प्राकृतया अस्ति [ पातृतयाऽस्ति ] ( कार्यं पुण्यं करोति कृतं च रक्षति ) ।

अभिलाषुकश्च अस्ति । प्रचुरतरं हंता दुर्गतीनाम् । ( अत्यर्थं [ अत्यंतं ] निर्हंति दुर्गतिनः ) ॥ ( प्रकृष्टा वाक् होर्मिज्दस्य ) ॥

॥ ५ ॥ ५. ततश्च महत्तर अदृश्य महाज्ञानिन् स्वामिन् । ( किल चेत् दक्षिणां न छिंदंति ) ।

पुण्यात्मभ्यो आस्वादयति यां कांचित् उत्कृष्टताम् । ( किल तस्मात् शुभं सर्वं उत्तमेभ्यो दत्तम् ) ।

ऋते तव समीहितात्[1] दुर्गतिनो वर्षंति । ( किल लक्ष्मीं न अभीप्सितेन ते दधते ) ।

तस्य कर्मणि निकृष्टस्य निवासात्[2] मनसः । ( किल अस्य आगतत्वं अकमनस्य वपुषि तस्य यः पापं कुरुते ) ॥ ( प्रकृष्टावाक् जरथुश्त्रस्य प्रत्युत्तरवाक् होर्मिज्दस्य ) ॥

॥ ६ ॥ ६. तस्यां ददौ महत्तरोऽदृश्यो महाज्ञानी स्वामी

अग्निं विविक्ते दातारं प्रतिवादकृताम् । ( किल शुद्धं अशुद्धं प्रकटीकुरुते ) ।

संपूर्णमनसे महत्तराय पुण्याय च ।

स यतः प्रचुरान् पश्यतः प्रतिबोधयति । ( दुर्गतिनः ) ॥

"स्पिंतमिनिओ" हैतिं [ हाइतिं ] आराधये । ( एनां प्रकृतिम् ) । ( आराधना वाक् ) । अहुनवरं आराधये । पुण्यं उत्कृष्टतरं सुंदरं अमरं महत्तरं आराधये । ( आराधना वाक् ) ॥

---

## हा ४८. ॥ ४९ ॥

॥ १ ॥ १. यं[1] [ एवं ? ] तस्यां दातिं[2] [ दातौ ] भमौ द्रूजं विघटयति[2a] । ( किल वपुषि पाश्चात्ये अशवहिस्तो अमरः द्रूजं विघटयति ) ।

( ये अविस्तावाणीं शिक्षति [ शिक्षंति ] तेषां बाधाकरां[3] [ बाधाकरः ] प्रकृष्टं अब्रवीत् ) यत् इदं[4] प्राप्नुवंति विप्रतारकाः प्रकृष्टं वदंति ( किल न अविस्तावाणीं न प्राप्नुवंति न उच्यते ) ।

---

॥ ५ ॥ १. M. समीहितान्. २. M. आनिवासान्.

॥ ४८ ॥

॥ १ ॥ १. Thus all. २. M., $K_7$, दातौ. २a. $K_7$, MFL, $EMU_{17}$, टालयति. ३. M. बाधकरान्. ४ M. इमा.

अमृत्युप्रवृत्ति [ ०प्रवृत्तिः ] देवानां मनुष्याणाम् ( आस्ते ) ।
एवं ते लाभः नमस्कृतिः अध्यवसायः स्वामिनो । ( दीनेः तव ) ॥

॥ २ ॥ २. वदामि अहं एवं ते अवबोधं[1] स्वामिनो । ( दीनेस्तव ) ॥

पूर्वे[2] मनुष्याः पृथिव्यां अंतराले प्राप्नुवंति । ( मार्गे स्वर्गस्य नरकस्य च[2a] ) ।

यथा मुक्तात्मनां स्वामिनः उत्तमदानं वदंति तथा दुर्गतिमताम् ।

यत् तत् उत्कृष्टभुवने प्रकटं सुंदरं कर्तु(कामस्य[3] निर्मलस्थानम् । तनोः पश्चात् अक्षयत्वं जायते ) ॥

॥ ३ ॥ ३. एवं यत् ज्ञानं ( अवबोधं[1] च जानाति ) तस्य अतःपरं[203] भुवनं भवति शिक्षेत्[2] [ °शिक्षयेत्? ] ।

शोभनज्ञानिनः ( एवंदस्य ) समीपे शिक्षेत् सत्यवाणीं स्वामिनः । ( दीनिम् ) ।

वृद्धिः[2a] ज्ञानं[2b] च इदं ( एवंदस्य समीपे शिक्षेत् [ शिक्षयेत्? ] ) यत् तत् अध्यागामिनः[3] [ अधोगामिनः ] ( आहर्मनस्य ) वाक्यम् । ( तस्य उपायं वदति ) ।

ते उत्कृष्टभुवनं स्वामिन् यत् किंचित् एतत् ग्वह्मनस्य[4] बुद्धिः । ( किल नैसर्गिका बुद्धिः सुंदरा सद्व्यापारा देहि ) [ किल नैसर्गिकां बुद्धिं सुन्दरां सद्व्यापारां ददाति? ] ॥

॥ ४ ॥ ४. यत् [ तत्[1] ] देहि मनसा स्वामिन् उत्तमं यत् उत्कृष्टतरम्[2] [ निकृष्टतरम्[3] ]
अयं [ इयं ] दीनिः कर्मणा वचसा कार्या । ( किल कर्तव्या तत् सर्वेषां कथनीया ये दीनेः अंतः संजाताः[4] [ संयाताः ] ) ।

तेषां मित्रत्वं सुंदरत्वं अभिलाषयेत् समम् । ( यत् कार्येण पुण्येन निर्भयत्वं कारयेत् पुण्यग्रहणाय मनसा कार्यम् ) ।

यत् अयं [ इयं ] ते बुद्धिः निर्वाणे नराणां आस्ते । ( किल दातिः ते भविष्यति ) ॥

॥ ५ ॥ ५. एतेषां सुराज्यं पृथिवीपतित्वं भूयात् मा एतेषां दुष्टराज्यं भूयात् । ( किल गृहं सुराज्ञां सुंदरं भूयात् मा एतेषां निकृष्टानां भूयात् ) ।

उत्तमो निर्वाणज्ञः । ( यत् निर्वाणं[1] किंचित् सुव्यापारं जानाति ) । यत् कर्तव्यं तत् संपूर्णमनसा ( सर्वं करणीयम् ) ।

पवित्रीकरणं मनुष्याणां पश्चात् यत् जातानां[2] उत्कृष्टभुवनम् । ( पश्चात् यत् जातानां एवं अवबोधं[3] [ अवबोधः ] उत्कृष्टभुवने ) ।

---

॥ २ ॥ १. MLHL$_1$ अवबोधिः. २. NMRL$_4$, MLHL$_1$, TDA$_2$, K$_7$, H$_2$, MFL, EMU$_{17}$, सर्वे. २a. MLHL$_1$, TDA$_2$, NMRL$_4$, H$_2$, MFL मार्गस्य नर्कस्यच. ३. Thus M., NMRL$_4$, MLHL$_1$, H$_2$, MFL, Spiegel; TDA$_2$, कर्तुकामस्य; EMU$_{17}$ कर्ता कामस्य.

॥ ३ ॥ १. NMRL$_4$ अबोधं. २. EMU$_{17}$, NMRL$_4$, शिष्येत्. २a. EMU$_{17}$, वृद्धिं. २b. EMU$_{17}$. मनज्ञानिं (?). ३ EMU$_{17}$, NMRL$_4$ H$_2$, TDA$_2$, MLHL$_1$, अधोगामिनः EMU$_{17}$, K$_7$ अध्योगामिनः MFL अध्यगामिनः. ४. H$_2$, ब्रह्मणस्य (!).

॥ ४ ॥ १. Thus M., MLHL$_1$, others as above. २ Thus NMRL$_4$, but corrected *Secunda manu* into निकृष्टतरं, all the rest as above. ३. Thus M., MLHL$_1$, ४. TDA$_2$, H$_2$, EMU$_{17}$ सयाताः, all the rest as above.

॥ ५ ॥ १. TDA$_2$ MLHL$_1$, K$_7$, H$_2$, EMU$_{17}$, NMRL$_4$ निर्वाणे. २. K$_7$, यातानां [ य for ज ]. ३. Thus all.

गवां विरचयिता । ( पशुपाता कुटुंबिनः ) । सोऽस्मभ्यं खाद्यं स्फीतयति । ( किल अस्मत्तनुं वर्धयति । अहं जरथुश्त्रो भवामि एते शिष्याः मे संसर्गे भवंति ) ॥

॥ ६ ॥ ६. यत् इदं सर्वेषां शुभप्रमोदं ( गवां पशूनां ) व्यवसायो ( विचित्रो[1] ) देयात् बलवतः उत्तममनसः प्रियतरम् ।

एवं तत् ( यत् दक्षिणादानं गुरोः एवंदस्य गौः एका [ गां एकां ] प्रदद्यात् ) स्वामिनः वनस्पतिं दद्यात् तेषां मुक्तात्मनां वृद्धि[1a]ः भूयात् ।

दादारस्य अंत[1b]ः उत्कृष्टभुवने जननि ( जातिः[2] ) [ जाता ] प्रथमा । ( सृष्टिदातिः[3] बह्मनस्य ) ॥[204]

॥ ७ ॥ ७. नितांतं कोपं नितांतं दद्यात् । प्रतिकूलं ईर्ष्यालुमनुष्यस्य (यो[ऽ] प्रमाणं[1] वधति[2] [ वदति ] तस्य ) प्रतिकूलं शिष्यापयामि ।

यत् सर्वैः बहमनस्य दातिग्रहणाय भवितव्यम् । ( किल सर्वैः शरीरं स्वीयं सुव्यापारेण धरणीयम्[3] ) ।

यत् इदं पुण्यं मनोन्यं[4] [ माननीयं ][205] प्रकटं नरेण गुरुतरेण । ( किल स्वीयस्य तनोः तत् यत् मनोन्यं[5] [ माननीयं ] कार्यम् ) ।

एवं असौ सृष्टिः ते सृष्टिः होर्मिज्दस्य ॥

॥ ८ ॥ ८. कदा ते स्वामिनः उत्तमस्य समीहे राज्यम् । ( किल राज्यं गुरुतरं त्वदीया वृद्धिः कदा ) ।

कदा ते भक्तिशीलान् [ ०शीलानां ? ] ये मनोन्यान्[1] [ ये माननीयाः ? ] स्वामिन् । (मे शिष्याः शीघ्रं प्रसादं[2] [ ते ] प्राप्नुवंति ) ।

कदा ते परिस्फुटं प्रकटं [ ०टां ] दक्षिणां समीहे । ( यत्[3] दक्षिणयत्वं[206] प्रकट [०टं] कदा भविष्यति ) ।

यत् बह्मनस्य कर्मणः धारणां सद्यापारेण[4] धारयिष्यंति । ( यत् स्वीयेन शक्यते कर्तुम्[207]) ॥[208]

॥ ९ ॥ ९. कदा ( अस्याः सिद्धेः ) अवबोधनं[1] भवामि यत् ( सर्वेषां ) किंचित् ( अभिलाषः ) राज्यं ( सुंदरतरं ) ( यत् आचारः ) । ( किल अयं कालः कदा प्राप्यते [ प्राप्स्यते ] ) ।

---

॥ ६ ॥ १. MLHL$_1$, H$_2$, TDA$_2$ विचित्रता; K$_7$ MFL विचितां (?). १a. K$_7$, MFL . दधि. १b. K$_7$, अतः. २. MLHL$_1$, K$_7$, TDA$_2$ जननिजातः; H$_2$ जननीजातः, EMU$_{17}$ जानिनिजातः (?). ३. TDA$_2$, H$_2$ सृष्टि दीत्तिः.

॥ ७ ॥ १. M. ऽप्रमाणं or प्रमाणं. २. M. वधति or वदति. ३. M., TDA$_2$, K$_7$, NMRL$_4$, EMU$_{17}$, MLHL$_1$, H$_2$ धारणीयं. ४. Thus all, M मनेन्यं; H$_2$ मत्तोन्वं (?). ५. Thus all, M. मनेन्यं.

॥ ८ ॥ १. EMU$_{17}$, TDA$_2$, MLHL$_1$, K$_7$, MFL, NMRL$_4$ मन्योन्यान्; the last with Gujerâti મન રીઝે જેને જોઈને ( by seeing which the mind is pleased ). २. TDA$_2$, MLHL$_1$, K$_7$, EMU$_{17}$, H$_2$, NMRL$_4$, प्रसाद ते. ३. TDA$_2$, MLHL$_1$, K$_7$, H$_2$, MFL, EMU$_{17}$, NMRL$_4$ यत् दक्षिणा अयं त्वं. ४. Several MSS. सुव्यापारेण.

॥ ९ ॥ १. Thus corrected by Spiegel, All have अवबोधं. Mills proposes to correct it

स्वामिन् परिस्फुटं अस्मिन् समये (कदा मे शिष्याः प्रकटाः भविष्यंति अस्य समयस्य) मे संदेहः ।

सरलतया मे ( यत् अस्मिन् समये ) सत्येन जीवितं भवेत् यत् तत् उत्तममनसः विनाशनं भवति । ( यत् सुव्यापारेण जीवितं भवेत् सर्वे निकृष्टतराः बलिष्ठाः भवंति विनाशयितुम् ) ।

अवबो[1]धो भवामि लाभवतां मनुष्याणां यथा एते स्वामिनः ये भक्तिशीलाः संति ॥[209]

॥ १० ॥ १०. कदा अयं कालः स्वामिन् एषां मनुष्याणां मध्ये मानवाः प्रतिकरणता [ ०तया ? ] भवंति । ( किल अस्मिन् काले कदा प्राप्नुवंति यत् मे शिष्याः [ शिष्याणां ?] प्रचलनं संपूर्णं भवति ) ।

कदा उत्थापयंति उत्तमानां कदा निर्मलता [ ०तया ] निकृष्टतरा भवंति ।

यत् अन्यायिनः संति ( यत् निहंतारः संति ) अश्रोतारः संति ( किंचित् हानिं कर्तारः ) अदर्शकाः संति रक्षकाः [ अरक्षकाः ? ] ( यत् रक्षाकराः सृष्टीनां रक्षां न कुर्वंति ) ।

यत् तत् बुद्धिः दुष्टा पार्थिवानां ( आस्ते ) यत् नगरेषु ( ग्रामेषु ) ॥[210]

॥ ११ ॥ ११. कदा इयं दातिः स्वामिन् यत् प्रकटं भवति[1] समं संपूर्णमनसा ( कार्ये[1a] कर्ता )

प्राप्नोति सुमनसा सुकर्मणा ।

कदा दुर्गतिमतां आमर्षस्य[2] छेदः[3] [ छेदं ] पंगो[3a]ः ( अक्षमस्य ) दद्यात्[4] ।

यत् इदं सर्वं[5] निर्वाणे उत्तममनसः प्राप्नुवंति ॥ [211]

॥ १२ ॥ १२. एवं तेषां संति लाभमतां यत् नगरं ( ग्रामम् देशं अक्षयत्वं करिष्यति) ये ज्ञातारः यत् बहमनस्य ( समं मनुष्यैः सुव्यापारं ) विलोकयंति ।

यत् कर्मणा सत्येन[1] ( संति अन्यायिनः ) तव स्वामिनः ( जानंति ) शिष्यंति । ( दीनिः त्वदीया ) ।

यतः तेषां ददंतः संति प्रतिपक्षाणां तेषां कोपेन ॥[212]

## हा ४९. ॥ ४८ ॥

॥ १ ॥ १. एवं मे ( सर्वेषां ) यावत् ( अत्र ) निकृष्टतरे ( युगे ) रक्षां महत्तराणां (कुरु) । ( किल यावत् तनोः अक्षयत्वं सर्वेषां [ सर्वासां ] सृष्टीनां रक्षां कुरु ) ।

असौ दुष्टधर्ता ( आहर्मनः[1] ) आस्वादयेत् [ ...... ] स्वामिनो । ( दीनिः ) ।

---

into अवबुध्यमानः (?). २. $EMU_{17}$ अवबोधा.

॥ ११ ॥ १. $H_2$, $TDA_2$ प्रकटां भवंति [प्रकटीभवंति ?]. १a. M. संपूर्णेन मनसा कार्या; $NMRL_4$ $TDA_2$, $H_2$ संपूर्गेन मनसा कार्यकर्ता. ($K_7$, MFL, $EMU_{17}$, कार्याकर्ता ). २. Some MSS. अमर्षस्य. ३. M., $MLHL_1$ छेदं. ३a. $MLHL_1$ यांगा. ४. Some MSS. प्रदद्यात्. ५. $H_2$, सर्वे.

॥ १२ ॥ १. MFL सत्वेन.

॥ ४९ ॥

॥ १ ॥ १. Some MSS. आइमोगः.

यत् ते उत्तमस्य दातिः प्राप्नोति बह्मनस्य ।

यत् तेषां उत्तमता [ ...... ] ज्ञानता बह्मनेन । ( किल उपायः आस्नोगानां यतः सुव्यापारं जानीयात् ) ॥213

॥ २ ॥ २. एवं मे अयं ( कर्म ) यत् मांद्यस्य[1] अस्य दृष्टांतम् । ( किल दीनेः मंदता [ मन्दतां ] करोति इदं अग्रे ब्रूमहे ) ।

न्यायी[1a] दुर्गतिमान् छद्मकः यः सरलतया छेदः । (किल यो बलिष्ठः सत्यतया उपरि करोति तस्य क्लेशो भवति ) ।

यत् न पूर्णया दुरागच्छन् [प्रादुरा०?] आस्ते संपूर्णमनसा । ( किल किंचित् संपूर्णमनसा न कुरुते ) ।

न यत् उत्तमानां दद्यात् स्वामिन् उत्तममनसः प्रकृष्टं सर्वं प्रश्नं विद्यते । ( किल सर्वं प्रश्नं सुव्यापारं न करोति[2] ) ॥214

॥ ३ ॥ ३. एवं अस्माकं अवबोधं स्वामिनो दातिः । ( यत् दातिः आस्ते एवं अग्रे ब्रूमहे प्रकृष्टं वचसा ज्ञानं विद्यते ) ।

तत् यत् पुण्यं लाभं दातिः [ लाभदातिः ] न्यायैः[1] ( यत् प्रसाददानं ) यः छिनत्ति तस्य द्रूजो ( निग्रहं कुरुते ) ।

यावत् अधिपतेः[2] अभिलाषः यत् बह्मनस्य ।

अंतराले सर्वे दुर्गतिगामिनः संति यत् सदैव अंतराले ब्रवीमि । ( किल यत् मित्रतां [०तायाः] समं एतैः विभिन्नो भवामि ) ॥215

॥ ४ ॥ ४. ते दुष्टबुद्धयो भवंति ये कोपं वर्षतः [ वर्धयंतः ] संति[1] संमार्जनं[2] यत् । ( किल स्वामिनो अंतः तनौ प्रश्नं कुर्वतः संति ) ।216

यत् स्वीयजिह्वायां विनाशनं तत् अविनाशनम् । ( पुनरपि न अभीप्सयेत् विनाशयितुम् ) ।217

ते शुभोदिता न वांछिताः[3] ये दुष्टसमाचरिताः संति[4] । ( ते निर्मलत्वं धारयेत् [?] ) ।

तेषां देवाः गुरवः संति ये ( अंतः ) दुर्गतिमतां दीनिः ॥218

॥ ५ ॥ ५. एवं यत् स्वामिन् उत्तमत्वं महत्तमत्वम् । ( प्रसादं देहि ) ।

यत् अस्याः दीनेः अधिपतिः बह्मनोऽस्ति । ( किल अस्याः दीनेः प्रकटं यत् सुव्यापारं कुरु [ कुरुते ? ] ) ।

यत् संपूर्णमनसा केभ्यश्चित् शुद्धं[1] सत्कार्यं कुरु[2] [ कुरुते ?] । ( किल केभ्यश्चित् कार्यं न्यायं सत्कार्यं कुरु [ कुरुते ?] ।

तेषां सर्वेषां यत् त्वं राजा स्वामी होर्मिज्द । ( तेषां यत् आधिपत्यं सुव्यापारं कुरु तेषां अधिपतिः पातसाहः त्वम् ) ॥219

---

॥ २ ॥ १. MFL, $EMU_{17}$ माद्यस्य. १a. Some MSS. आनायी. २. $NMRL_4$ writes on the line संदिग्धमना न भवतीत्यर्थः.

॥ ३ ॥ १. Several MSS. wrongly ज्ञायः [ for न्यायः ]; M. ज्ञायः corrected into न्यायः २. $MLHL_1$ अधिपतौ; $K_7$, अधिपतिः.

॥ ४ ॥ १. $MLHL_1$ कोपवर्षं संति (?). [कोपं वर्धयंति ?] २. $MLHL_1$, सन्मार्यितं $TDA_2$, $H_2$, संमार्जतं. ३. $K_7$, निर्वांछिताः ४ $K_7$, has some pages missing from here.

॥ ५ ॥ १. $EMU_{17}$, has शुद्धं तत् कार्यं. २. $H_2$, $EMU_{17}$, MFL, $MLHL_1$, $TDA_2$ कुरुते.

॥ ६ ॥ ६. प्रकृष्टं यत् ते आदेशयामि स्वामिन् कार्यं दीनेः तव परिस्फुटं यस्मात् वदामि । ( किल न्यायवचनं करोमि ) ।

यत् ते बुद्धिः मनसा । ( दीनिः ते बुद्धिः मनसा विवेजयामि परीक्षयामि ) ।

सत्येन परीक्ष्ययामि [ ? परीक्षयामि ? ] एवं ईदृशं समुद्गिरामि । ( किल दीनिं प्रवर्तमानां करोमि ) ।

असौ दीनिः तव स्वामिनः ॥[220]

॥ ७ ॥ ७. एवं स्वामिन् संपादयिता बह्मनः ।

( मे ) वचनं परिस्फुटं शृणु त्वं ( तव ) स्वामिनः । ( किल यत् अहं वदामि तत् सर्वं शृणु ) ।

कः आदेशः कोऽभिलाषः स्वाधीनता दातृता आस्ते । ( किल अभिलाषः स्वाधीनता । आदेशो यत् करणीयः ) ।

यत् तत् समाचरणं उत्तमं देहि प्रकृष्टं आशीर्वादयामि । ( किल कर्तव्यं ते यत् आशीर्वादतरं धारयामि यदि स्वीयाभिलाषः ) ॥[221]

॥ ८ ॥ ८. फिरशउस्त्रस्य वनस्पतेरग्नेः पुण्यं देहि ।(किल पुण्यस्य कार्यं उष्णतरं कुरु)।

अधिपतित्वं ते एवं याचयामि स्वामिन् । ( द्वारे पेर्वदस्य निर्मलत्वं देहि ) ।

मदीयाः ( शिष्याः फेरशउस्त्रश्च [ फेरशोश्त्रस्यच ] यो महत्तरः तस्य त्वं स्वामित्वं ( वृद्धि देहि ) ।

एते सर्वे आदेशकारिणः संति [ संतु ? ] । ( किल फिरशउस्त्रस्य अपरेषां शिष्याणां यावत् तनोः अक्षयत्वं सर्वेषां राज्यं देहि ) ॥[222]

॥ ९ ॥ ९. यत् शृणु ( सुंदरेण ) शिष्यापणां पश्चात् लाभं अभिलाषस्य । ( किल फिरशउस्त्रस्य दीनिं महत्तरं [ महत्तरां ? ] देहि ) ।

न सत्यवचनस्य राज्यं देहि अस्य दुर्गतिमतः । ( किल फिरशउस्त्रस्य राज्यं देहि । अस्य दुर्गतिमतः न दद्यात् ) ।

यत् दीनेः अतःपरं नियोजयेत् प्रसादम् । ( किल प्रसाददानं देहि ) ।

पश्चात् पुण्यं नियोजयेत् कार्यं न्यायं जामास्पस्य । ( किल यत् असौ सुव्यापारं प्रचरति ) ॥[223]

॥ १० ॥ १०. एवं यत् स्वामिन् तव सृष्टिं पालयामि । ( किल रक्षां करोमि तव सृष्टेः)।

बह्मनस्य ( उत्तमस्य मनसः ) यत् मुक्तात्मनां आत्मा ( आस्ते ) ।

---

॥ ७ ॥ १. $TDA_2$, $H_2$ स्वामिनता (?) [ a slip of the pen only ? ].

॥ ८ ॥ १. $MLHL_1$ द्वारेपेरजवदस्य; $TDA_2$, द्वारे । पेरवजदस्य corrected *seconda manu* द्वारे । एरवजदस्य; $H_2$, द्वारे । पेएरवजदस्य; MFL, $NMRL_4$ $EMU_{17}$ द्वारेपुएरवदस्य. २. $TDA_2$, $H_2$, $MLHL_1$ फेरशउस्त्रसं यो.

॥ ९ ॥ १. Strangely enough, when all give जामास्पस्य, $MLHL_1$ gives here न्यायमध्यस्य ।

अस्य यत् प्रणामः आस्ते संपूर्णमनसा वृद्धेः । (किल किंचित् पुण्यं दद्यात् तस्य प्रणामः)।

यो मनसा अस्य स्वामिनः न पश्यति (अव्यापारेण) तस्य अधो नरके मृत्युर्भूयात्। (किल "अपगइअहि"[224] भवेत्)[1] ॥[225]

॥ ११ ॥ ११. एवं दुष्टपार्थिवत्वेन दुष्टकर्मणा दुष्टवचसा।

दुष्टदीन्या दुष्टमनसा दुर्गतिगामिनः (सन्ति)।

निकृष्टतरं खाद्यं संमुखं आत्मानः [तेषां आत्मनः] संमुखं प्रचरति ।[226]

यः अंतः द्रूजस्य प्रणामं कुरुते स (अंतः नरके) प्रकटाः विध्यंते [प्रकटं विंद्यते]। (ये संति प्रकटाः देवानां द्रूजानां मध्ये) ॥[227]

॥ १२ ॥ १२. यथा ते परिस्फुटं (प्रकटं जानामि) आकारयामि अहं सहायी

जरथुस्त्रो (भवामि) यथा ते बह्मनः (उत्तममनसः)।

यस्ते स्तुतिकरः तस्य सुसमृद्धत्वं भूयात् स्वामिन्।

एवं (शिक्षां) अवोचत्[1] यस्ते आराधयति (आराधनां कुरुते) (तस्य आत्मा) [आत्मनः] अतःपरं (स्वर्गभुवनं भूयात् सुसमृद्धता [च] भूयात्) ॥[228]

॥ आराधना वाक् ॥

## हा. ५० ॥ ४९ ॥

॥ १ ॥ १. यथा यत् अहं आत्मानं अभिलापयामि यत् अभिलापः संवलस्य किंचित्। (कार्यं पुण्यस्य शक्तिमान् करोमि यत् प्रसादं तस्य पुण्यस्य दद्यात्)।

को मे पशून् दद्यात् को [के] मे मनुष्याः पालनां दातिं अलभंत[1] [पालनदानं अलाभयंति?]। (अपरं साहाय्यं देहि [दद्युः?])।

अन्यं यत् परिस्फुटं तव हेतोः (जानामि) स्वामिन् महाज्ञानिन्।

दीनेः उपरि सुशीलं सत्वं च कार्यं ततः अतःपरं भुवनं (स्वर्गं) मनसा आकार्यते। (पश्चात्[3] यथा अतःपरं भुवनं सर्वे जानंति) ॥[229]

---

॥ १० ॥ १. NMRL$_4$, MLHL$_1$ have additional gloss:—ते स [वें] अंतर्नरके प्रकटा विधंते [विद्यंते] ये संति प्रकटी देवानां द्रूजानां मध्ये. But this is the translation of the last line of para. ११ which is miswritten here.

॥ १२ ॥ १. Thus all. [Probably a miswriting for अयाचत्].

॥ ५० ॥

॥ १ ॥ १. MLHL$_1$ अलसंत. २. MFL एतत्. ३. EMU$_{17}$ पाश्चात्.

॥ २ ॥ २. यथा त्वं स्वामिन् अयं [ इमां ] दक्षिणां कुरु गोस्पिन्दं ( पशुं ) समीहे ।

इदं शीलं ( यत् दक्षिणां ) तत्र ( कारयेत् एतत् गवां पशूनां ) कर्मकारितया संतोषयेत् । ( यत् संतोषं इदं [ इमम् ] कालं कुटुंविनः धारयेत् ) ।

यत् सत्येन जीवेत् असौ पुण्यात्मा ( यत् धारयेत् तत् इदं ) प्रभूतं खादनं[3] रक्षां शुभां च ।

प्रकटं पृथिव्यां ( यत् अयं नरकः[4] ) ममोपविष्टस्य सतः ( अंतः गृहे ) दातिं प्रदेहि[5] । ( प्रभूतं देहि ) ॥[230]

॥ ३ ॥ ३. एवंच अस्माकं स्वामिन् यत् पुण्यस्य योग्यम् । ( किल एतेषां क्षत्रियाणां पुण्यस्य हेतोः पशवः योग्यतराः संति ) ।

यत् इदं राज्यं बह्मनस्य आस्वादयेत् । ( किल स्वीयेन ) ।

यत् अस्माकं भक्तिशीलानां वलं ( प्राणं ) वर्धेत । ( किल वलं तत् भक्तिशीलानां संधारयेत्[1] ) ।

यत् अंतः पृथिव्याः [ पृथिव्यां ] अयं दुर्गतिमान् विभंजनां [विभागं] धारयेत् । ( तत् आकृष्येत् ) ॥[231]

॥ ४ ॥ ४. एवं तव स्तुतिं आराधनां [ आराधनं ] करोमि महाज्ञानिन् स्वामिन् ।

यत् अस्ति दातिः प्रकटता बह्मनस्य । ( किल समं तेन यत् आराधनां करोमि ) ।

राज्यं यत् अस्य समीहे । ( किल कार्यस्य[1] पुण्यस्य वाञ्छां[2] करोमि ) । यत् संप्राप्तेः[3] [ संप्राप्तेः ] अयं मार्गः[3a] । ( किल अस्य मार्गस्य सुव्यापारं आस्ते ) ।

प्रकटां अयं [ इमां ] दक्षिणां ( देहि स्वामिन् यत् ) अंतः गरोत्थमानस्य[4] स्तुतिम् ( आराधनां ) प्रकटां करोमि ॥[232]

॥ ५ ॥ ५. संपूर्णं [ संपूर्णां ] यत् युष्माकं भक्तिं करोमि स्वामिन् । (किल भक्तिशीलतां युष्माकं संपूर्णं कुर्वन्नस्मि ) ।

सर्वे यत् तत् अविस्तावाणी [ ० र्णी ] तव वांछयेत् [ वांछेयुः ? ] प्रमोदेन ( हर्षेण ) । ( किल दीनेः [ दीनिं ] तव प्रवर्तमानां करोमि सर्वे यत् आनंदं कुर्वंति ) ।

( अस्माकं ) उपरि आलोकयेत् [ ० येयुः ? ] प्रकटतां एकवेलां[1] कुरु ।

यत् आरोग्यतां समीहे । ( तत् आरोग्यसहायतां कुरु ) यत् अस्माकं शुभं देहि ॥[233]

---

॥ २ ॥ १. MLHL$_1$ कुरु यत्. २. MLHL$_1$, कुटुंबिनं. ३. EMU$_{17}$, MFL, NMRL$_4$, खाद्यंत्वं. ४. MLHL$_4$, नरकः. ५. MFL प्रदिति (?); NMRL$_4$ प्रदन्ते.

॥ ३ ॥ १. TDA$_2$, H$_2$, EMU$_{17}$ MLHL$_1$ समं धारयेत्. MFL has rendered the whole line thus:—यत् अस्ति दातिः प्रकटा बह्मनस्य (किल संमतेन यत् आराधनां करोमि (!) [probably through inadvertance. ]

॥ ४ ॥ १. All have कार्यं. २. EMU$_{17}$ प्रकटा संवादतां. ३. Some MSS. संत्तसेः. ३a. MLHL संत्तसे मार्गेण. ४. Some MSS. गरोथमानेऽस्य.

॥ ५ ॥ १. NMRL$_4$ एकहेलया; H$_2$, EMU$_{17}$ TDA$_2$ एकवेलं.

॥ ६ ॥ ६. यत् तत् अविस्तावार्णीं स्वामिन् कुरु। (यतस्ते[1] आराधनां करोमि)।

मित्रतां ( दादारस्य ) पुण्यस्य ( रक्षां ) नमस्कृतिं करोमि। ( किल यत् कार्यं पुण्यस्य। सुसमृद्धोऽहं ) जरथुश्त्रो[1a] ( भवामि )।

ददामि बुद्धिं जीह्वायाः[2] मार्गस्य संस्थितिं ( अस्ति प्रकृष्टहादस्य[3] )।[234]

यत् अयं [ इयं ] समारचना मम। ( शिष्याणां कुरु )। तत् बह्मनस्य शिर्ष्यां[4] [शिक्षां] देहि ) ॥[235]

॥ ७ ॥ ७. एवं यत् त्वां [ वां ] नियोजयामि। ( इदं कार्यं न्यायस्य [ न्यायशास्य ] तव[1] )। मित्रस्य ( वांछां करोमि ) वेगेन। ( कार्यं उपरि भवेत् )।

यत् प्राप्नोमि एतत् अंतराले प्रणामः तव हेतोः। ( किल यावत् तत्र भुवने प्राप्नोमि नमस्कृतिं ते बलिष्ठां[2] करोमि )।

स्वामिन् परिस्फुटं ( प्रकटं ) बलिष्ठतां [ ० ता ? ] बह्मनेन। ( यत् बलिष्ठता पश्चात् बह्मनात् उत्तमात् मनसः )।

अस्य [ अस्या ] गृहीतारो[3] [ गृहीता ] भवामि यत् त्वं [ ते ] स्वामिन् सहायता[4] आस्ते। ( किल सहायता यत् स्वयं शक्तिमान् [ शक्तिमंतं ] शक्नोति कर्तुम् ) ॥[236]

॥ ८ ॥ ८. समं पादाभ्यां[1] [ पद्याभिः ? ] ते प्रकृष्टं विख्यातोऽस्मि[1a] [ विख्याताऽस्मि ] महत्तरोऽहम्। ( यत् इदं बलं दीयमानं आस्ते ततः अविस्तावार्णीं वदामि )।

उपरि प्राप्नोमि यत् स्वामिन् उत्तानहस्तः सन्। (निवासनं [ मिमांसनं ? ] करोमि[2])।[237]

एवं यत् ते परिस्फुटं दक्षिणां करोमि यत् नमस्कृतिम्।

एवं यत् ते बह्मनस्य गुणाः प्रवर्तमानाः संति। ( किल सुव्यापारगुणाः अस्य मध्ये भवंति ) ॥[238]

॥ ९ ॥ ९. तव आराधनां संमुखं स्तुतिं प्रचरामि। ( करोमि )।

स्वामिन् परिस्फुटं ( प्रकटं युष्माकं ) उत्तमेन मनसा। ( स्तुतिं करोमि )।

एवं लक्ष्मीं मे भक्तिशीलां ( देहि। यत् ते भक्तिं करोमि )। यत् अभिलाषयामि। ( किल ) राज्यस्य ( अभिलाषं करोमि )।

एवं ते सुदानिनं अभिलाषयामि गृहीतारो [ ग्रहीता ] भवामि। ( प्रसादम् ) ॥[239]

॥ १० ॥ १०. एवं तत् समाचरामि पूर्वं यत् कर्म।

---

॥ ६ ॥ १. M. यत् आस्ते; MLHL$_1$, TDA$_2$, H$_2$ यस्ते. १a. EMU$_{17}$, जरथुश्त्रस्य. २. TDA$_2$, H$_2$, MLHL$_1$ जिह्वया. ३. MFL प्रकृष्ट दादस्य. ४. MFL शिष्याणां.

॥ ७ ॥ १. Some MSS. नव [ a slip of the pen for तव ]. २. Most MSS. बलिष्टतां. ३. Thus all. We may correct either गृहीतारो भवामः or गृहीता भवामि. ४. Most MSS. indifferently सहायता, साहायता, साहयता or सहयता.

॥ ८ ॥ १. EMU$_{17}$ पादायभ्यां. १a. TDA$_2$, H$_2$, MLHL$_1$ विख्याऽस्मि or कयामि (?). H$_2$, TDA$_2$, MLHL$_1$, कथामि (?), or कपामि (?). २. EMU$_{17}$ निवशनं करोमि.

यत् यस्य बह्मनस्य लोचने निर्मले । ( किल स्वभावेन सुव्यापारेण दातिं कुरु ) ।

निर्मलः सूर्यः अंतः दिवसस्य चैतन्यं अयं समारचनां [ सभारचनां ? ] करोति । (किल सर्वेषां मनुष्याणां शीघ्रं दातिं कुरुते ) ।

तव भक्तिशीलाः मनुष्याः प्रणामं कुर्वंति महाज्ञानिन् स्वामिन् । ( तेषां शीघ्रं दातिं कुरु ) ॥[240]

॥ ११ ॥ ११. एवं युष्माकं स्तौमि यद् बलं आस्ते । ( किल बलं तत् स्तुतिं ते प्रचुरं धारयामि ) ।

यावन्मात्रं पुण्यं तावन्मात्रं शक्तिं पुण्यस्य अभिलाषं करोमि[a] ( यत् गृह्णामि ) ।

ददामि अंतः उत्कृष्टभुवने संपूर्णदातिं यत् उत्तमेन मनसा[b] ।

यथा प्रकटकार्मिणां योऽभिलाषः उत्कृष्टतरः[a] [प्रकृष्टतरः] । ( यो अभिलाषः अपापानां प्रभूतः । स्वामिन् प्रसादं प्रसादपूरितं देहि प्रवाहेन जरथुश्त्रो भवामि ) । ( भवेत् यम् प्रवाहे शीघ्रं देहि जरथुश्त्रो भवामि ) ॥[241]

---

## हा ५१. ॥ ५० ॥

नमो युष्मभ्यं हे गाथाः पुण्यात्मन्यः ॥

॥ १ ॥ १. उत्तमस्वामिकामिनीं विभूतिं उपरि वर्षामि । ( किल विभूतिं तस्मै ददामि यो राज्ञः शुभं वांछयेत् ) ।

यत् दातिं वृद्धिं सत्येन अंतराले करोमि । ( किल दातिं [ दातिः ] सत्यतया दीयते यत् मनुष्यः स्वामिनः शुभं अभीप्सयेत् ) ।

कर्मणा स्वामिन् अतःपरं भुवनं नितांतं अस्माकं प्रबोधं कुरु । ( ततस्ते दीनिं प्रवर्तमानां करोमि ) ॥[242]

॥ २ ॥ २. यत् त्वं स्वामिन् पूर्वदातेः पुण्यं कुरु ।

यत् ते ( सुव्यापारं पृथिव्यां संपूर्णमनसा करोमि ) देहि मह्यं वांछितं राज्यम् ।

---

॥ १० ॥ १. MFL, $EMU_{17}$, $H_2$, $TDA_2$, $NMRL_4$ यस्य यत्; $MLHL_1$ यस्य तत्. २. $EMU_{17}$, MFL, $NMRL_4$ समरेयतां. ३. $EMU_{17}$ शिघ्रि (?) ४. $H_2$ दात्यं.

॥ ११ ॥ १. $K_7$ which has lost some folios, resumes from this stanza. $NMRLA_4$ $MLHL_1$ किल तत् बलं तत् स्तुतिप्रचुरं धारयामि. यान् मात्रं पुण्यं तान् तन्मात्रं [ $H_2$, तावन्मात्रं ] शक्तिं पुण्यस्य अभिलाषं करोमि गृह्णामि. १a. $NMRL_4$, MFL भवामि. १b. $TDA_2$, $H_2$ उत्तमस्य मनसः. २. $NMRL_4$, $K_7$, $EMU_{17}$, MFL यत् यो. २a $TDA_2$ $H_2$, $K_7$ प्रकृष्टतरः. ३. $K_7$, $NMRL_4$, $EMU_{17}$, स्वामिन् यत् ......[ these three letters could not be well read; कर्म यः क्रमः यः ? or कमः यः ? प्रसादः पूरितं प्रसादं दद्यात् यत् प्रवाहेन &c. $MLHL_1$, यथा प्रकटकार्मिणां योऽभिलाषः अपापानां प्रभूतः स्वामिन् प्रसादं प्रसादपूरितां देहि प्रवाहेन जरथुश्रो भवामि. ४. $NMRL_4$, $K_7$, $EMU_{17}$ भवेत अयं प्रवाहे शीघ्रं भवामि.

---

॥ ५१ ॥

॥ १ ॥ १. $K_7$ सत्ये या. २. M. तत् आस्ते.

एवं बह्मनस्य ( उत्तमस्य मनसः )......देहि लाभम् । ( किल आराधनां कुरु[2] [कुर्यात्] लाभं गृह्णीयात् ) ॥[243]

॥ ३ ॥ ३. यत् ते अयं लाभः सर्वे प्रचरंति शुभेन[1] कर्मणा ते ( कर्मणा ) आधिपत्यं[1a] भवेत् । (किल अहं पापस्य पुण्यस्य लेख्यकं[2] करोमि ) ।[3]

स्वामिन् परिस्फुटं यत् युष्माकं जिव्हायाः वचनानि उत्तमेन मनसा ( जानामि )[3] ।

येषां[4] त्वं स्वामिन् पूर्वं प्रकृष्टं दातिं पृथक् करोति [करोषि] ( किल यत् अमिषार्स्पिदानां किंचित् सुव्यापारेण पूर्वं त्वया दातिः सृष्टिः कृता ) ॥[244]

॥ ४ ॥ ४. कथं संपूर्णं आधिपत्यं[1] ( सद्गुरवः दीनिवाहिकाः संति ) । ( कथं आधिपत्यं संपूर्णस्थाने कृतम् । यत् सर्वे समारचनां प्रचरंति । कथं आधिपत्यं । संपूर्णस्थाने अकरोत् )। कथं अयं प्रसादः ( स्वर्गस्थाने ) आस्ते ।

कथं यः प्राप्नोति पुण्यं । यत् (परिस्फुटं स्थाने ) पृथिव्यां ( संपूर्णमनसा ) ।

कथं बह्मनस्य उत्कृष्टभुवनं । कथं[2] त्वं राजा महाज्ञानिन् स्वामिन् ॥[245]

॥ ५ ॥ ५. सर्वेषां यत्.........यथा एवं पुण्यं कथंचित् गवां ( पशूनां ) लब्धिम् (समं कार्येण पुण्येन ) कुर्वंति ।

यत् समाचरणीयं कर्म सरलया जिव्हया सुबुद्ध्या प्रणामः करणीयम् [० यः ] । ( सुबुद्ध्या स्वामिनः प्रणामं कुर्यात् किल तस्य स्वामी शुभं कुरुते ) ।

यो दातिं[1] सत्येन सद्गुरुं धारयेत् ( अभिलाषं कुर्यात् ) । किल यत् राज्यां [राज्यं] (अत्र विद्यते तनुं [तत्] एवंदानां दद्यात् ) यत् तत् पुण्यं निर्वाणे । ( किल निर्वाणे किंचित् सुव्यापारं जानीयात् ) ॥[246]

॥ ६ ॥ ६. यः उत्तमानां उत्तमत्वं दद्यात् ( प्रसादम् ) च अस्य अभिलाषो[1] दक्षिणायाः [दक्षिणया ] दीयते । ( स्वामिन् [ स्वामिना ] ) .

स्वामिन् राज्यं महाज्ञानिन् अस्माकं ( दद्यात् अस्य ) निकृष्टं[2] ( आहर्मन ) स्य निकृष्टतरं ( कुर्यात् ) । ( अस्य निग्रहं [निग्रहो] विधीयते ) ।

यत् ( निकृष्टस्य ) न दद्यात् ( यावत् असौ ) निर्वाणे अंतर्भुवने ( परिभ्रमति ) । (किल यावत्[3] तनोः अक्षयत्वं निग्रहं संपूर्णं न अकरोत् ) ॥[247] [248]

---

॥ २ ॥ १. NMRL$_4$ कुर्यात्.

॥ ३ ॥ १. NMRL$_4$ शुभे. १a. H$_2$ शुभेन कर्मणा आधिवत्यं. २. EMU$_{17}$ लेपकं [ प for ख ]; H$_2$ लेखकं. ३. MLHL$_1$, H$_2$ add यत् युष्माकं कर्मणा.........TDA$_2$ writes the same as the translation of *yê shkyaothnâisch charente*. ४. K$_7$ तेषां.

॥ ४ ॥ १. EMU$_{17}$ आराधिपत्यं (?). २. Most MSS. किल instead of कथं.

॥ ५ ॥ १. EMU$_{17}$ दात्यं.

॥ ६ ॥ १. K$_7$ अभिलाष्या [ द ] क्षिणाया [ : ]. २. Some MSS. विकृष्ट. ३. EMU$_{17}$ जावत् [ ज for य ].

॥ ७ ॥ ७. देहि[1] मह्यं (प्रसादं प्रसादपूरितं) यत् गवां घटयिता असि। अपां च वनस्पतीनां (घटयिता असि)।
अमिर्दाद्-वनस्पतिपतेः अमिर्दाद्-अपांपतेः (अनयोश्च घटयिता असि) अदृश्यमूर्ते महाज्ञानिन्।
अध्यवसायश्च[2] [अध्यवसायस्य च] (घटयिता असि) शक्तिमतः (घटयिता असि) मनसाऽपि उत्तमेन शिक्षाम्। (किल यत् तत् सद्व्यापारिण्या शिक्षया आस्ते यत् स्वाधीनं शक्यते कर्तुम्) ॥[249]

॥ ८ ॥ ८. यत् एवं तव वचनानि महाज्ञानिन् (दीनिः ते) यस्य सुप्रबुद्धेः मनुष्यस्य वक्तव्यं (ज्ञानिनः) [वक्तव्यानि?]।
यो निहंता दुर्गतिमतां यत् शुभं पुण्यं धारयेत् (भवेत् यत् निर्भयेन)।
यत् अयं मांथ्रीं (अविस्तावार्णी) समाधानयेत्[1] सुप्रबुद्धेः मनुष्यस्य वदेत् ज्ञानिनं[2] [ज्ञानिनः] ॥[250]

॥ ९ ॥ ९. यत् प्रबोधं संवादकराणां दद्यात् अयं ते वह्निः ज्योतिष्मान्[1] दद्यात् महाज्ञानिन्।
अनुपकारिणां निश्चयेन उपरि उभयोः भुवनयोः आराधनां देहि। (यत् तत् गाढं तनोः अक्षयता)।
छेदयेत् दुर्गतिमतां लाभं कुर्यात्[2] पुण्यात्मनाम् ॥[251]

॥ १० ॥ १०. एवं एते मे मनुष्याः म्रियंते [ये (मनुष्या न) म्रियंते] एवं प्रकारं कुरु। (ये पृथिव्याः संति तेषां सर्वेषां परलोकं [परलोक्यं?] कुरु)।
अस्याः सृष्टेः द्रुजः द्रुनोशः[252] असौ दुष्टज्ञानी यो आस्ते। (अप्रतिपक्षं[1] [प्रतिपक्षं?] सृष्टीनां स्वामिनः करोति तुल्यता द्रुनस्तः [द्रुनुस्तस्य] आहर्मनस्य [०र्मनेन] विद्यते)।
मदीयं आकारयामि पुण्यं उत्तमं परिस्फुटं प्राप्नोमि ते ॥[253]

॥ ११ ॥ ११. को मित्रैः[1] स्पितमजरथुस्त्रस्य[1a] नराणां मध्ये स्वामिन्।
कस्ते पुण्यं सर्वं[2] अपृच्छत्। (किल यत् सत्यतया) संपूर्णमनसा (सर्वं अपृच्छत्)।
को युष्माकं उत्तममनाः निर्वाणे। (निर्वाणसमये किंचित् सुव्यापारं जानाति) यत् उत्तमत्वेन सत्यतया (निर्मलतया जानाति) ॥[254]

---

॥ ७ ॥ १. $K_7$ omits the translation, giving reference यथा उपरि लिखितं *i. e.* Hâ १८ para. १. २. Thus most MSS.

॥ ८ ॥ १. $K_7$, $MLHL_1$ $EMU_{17}$, $NMRL_4$ समाधाने यत्. २. Thus all. Spiegel propose to correct it into ज्ञानी, Mills into ज्ञानिनः.

॥ ९ ॥ १. $NMRL_4$ जोतिष्मान्; $MLHL_1$, $K_7$, $EMU_{17}$ योतिष्मान्. २. Some MSS. क्रियते.

॥ १० ॥ १. $NMRL_4$, $K_7$, $MLHL_1$, $TDA_2$, $EMU_{17}$, MFL सप्रतिपक्षं [सः प्रतिपक्षं]; $H_2$ स प्रतिपक्षी.

॥ ११ ॥ १. Some MSS. मित्र only. १a. MFL. स्पउतम जरथुस्प्रस्य (!); $H_2$ स्पितमजरथुस्त्रस्य. २. Some MSS. सर्वे.

॥ १२ ॥ १२. न तत् यत् लोके द्वयं जानंति अंतराले शीतकालस्य। (खाद्यं[1a] वस्त्रं च)।
यत् जरथुस्त्रः स्पितमानोऽहं प्रमुदितो[1b]ऽस्मि।
अयं मे जातिशीतकाले[2] [जाते शीतकाले] न प्रचरति मित्रताम् ॥[255]

॥ १३ ॥ १३. उभयोः (भुवनयोः लेख्यकं) दुर्गतिगामिनः गणनां [गणनं] आस्ते दीनेः निर्मलता प्रकटता (भविष्यति)।

एतेषां आत्मा [आत्मानः] बुंबां करोति [कुर्वन्ति] पातयति[256] चिनुअद्नामसेतौ परिस्फुटम्।

यत् एतेषां स्वीयात् कर्मणः जिव्हा[1] विनाश्यते [विनाशयते] पुण्यस्य पंथानं[2] (सुव्यापारश्च विनाशितः) ॥[257]

॥ १४ ॥ १४. न मित्रस्य दत्तं अश्रोतारस्य कार्यं[1] संपूर्णं कृतम्। (किल किंचित् सुव्यापारं अभीप्सितं संपूर्णं न कृतम्)।

गवां (पशूनां) संपूर्णमनसा शिक्षापयंति[2] (निर्वाणे निहंति) यः [यत्?] स्वीयात् कर्मणः शिक्षापयंति[3] (पश्चात् अव्यापारं कुर्वंति)।

यत् ते शिष्यापयंति तेषां निर्वाणे द्रूजस्य समासन्नता [०तायां] ददाति (आत्मानं स्वीयम्) ॥[258]

॥ १५ ॥ १५. यत् प्रसादं (कुरु) जरथुस्त्रो (ऽहं भवामि) स्वर्गलोकं आस्वादयामि अग्रे। (तुल्यं पुण्यम्)।

यत् गरोत्थमाने स्वामिन् महाज्ञानिन् प्राप्नोमि पूर्वम्।

यत् ते उत्तमस्य मनसः पुण्यस्य लाभं आस्वादयामि। (किल लाभं यत् सुव्यापारं[1] कुरु) ॥[259]

॥ १६ ॥ १६. कइ गुस्तास्पो निर्मलो राजा[1] योग्यतरः।

उत्तमेन मनसा तस्य (सुव्यापारेण) राज्ञः (एवं कुरु) यत् निर्वाणे पुण्यं प्रमाणं (कुरु)। (किल निर्वाणं किंचित् सुव्यापारं एवं यथा युज्यते[2] ज्ञातुम्) ॥

गुरुतरात्[3] स्वामिनः महाज्ञानिनः एवं शक्यते शुभं ज्ञातुम् ॥[260]

---

॥ १२ ॥ १. Some MSS. लोकद्वयं. १a. EMU$_{17}$ पाद्यं [प for ख]. १b. Some MSS. प्रमोदितो. २. EMU$_{17}$ याति शीतकाले.

॥ १३ ॥ १. H$_2$, EMU$_{17}$, TDA$_2$, NMRL$_4$ जिव्हां विनाशयेत्. २. NMRL$_4$, MLHL$_1$ K$_7$, H$_2$, EMU$_{17}$ पन्थानां (?).

॥ १४ ॥ १. Mills proposes to read अश्रोतारम् यत् कार्यं; EMU$_{17}$ अश्रोतारः—स्य कार्यं. २. EMU$_{17}$ शिखापयंति; H$_2$, TDA$_2$ शिप्यापयंति; NMRL$_4$, K$_7$, MLHL$_1$ शिख्यापयंति. ३. EMU$_{17}$, H$_2$, MLHL$_1$, TDA$_2$ शिष्यापयंति; K$_7$, NMRL$_4$ शिख्यापयंति.

॥ १५ ॥ १. Some MSS. सुव्यापारतरं, others सव्यापारं.

॥ १६ ॥ १. NMRL$_4$ राज्ञा [राज्ञां]. २. EMU$_{17}$ युयते [य for ज्य]. ३. EMU$_{17}$, MFL, H$_2$, K$_7$, MLHL$_1$, TDA$_2$, NMRL$_4$ गुरुतरान्.

॥ १७ ॥ १७. मित्रौ[261] मे सदैव फिरशाउस्त्रः हुर्तेगुवाजः [हुओगुआजः][262] गुरुः [गुरू] अनयोः शरीरम् । (गुरुत्वं कर्तुं शक्नुतः) ।

यत् दीनेः उत्तमायाः मध्ये आस्ते यत् (दीनेः उत्तमायाः) अस्य याचनां देहि । (किल [1]सुरूपां शरीरेण स्त्रियं देहि) ।

यत् राज्यं स्वामिन् महाज्ञानिन् पुण्यस्य [2]मूलेन [मूल्येन] कुरु गृहे गृहराज्ञीं[3][263] च ॥[264]

॥ १८ ॥ १८. असौ निर्वाणज्ञः सद्गुरुत्वं जामास्पः[1] हुर्तेगुआजः [हुओग्वाजः] याचयति हस्ताभ्याम्[265] (स्वीयेन कार्येण) ।

पुण्यस्य अभीप्सया तत् राज्यं उत्तममनाः सुप्रबुद्धिना देहि । (सुव्यापारेण मन्यता [मंता?] ईदृशो विद्यते) ।

तत् मे देहि स्वामिन् महाज्ञानिन् त्वं आनंदं प्रचारयितुम् । (प्रसादं कुरु) ॥ [266]

॥ १९ ॥ १९. अस्य मनुष्यस्य मद्दीओमाहस्य स्पितमानस्यच अनयोः स्वीयं [स्वीयां] दातिं (प्रसादं प्रसादपूरितं) देहि ।

तस्य [तस्याः] दीनेः अवबोधदानं भुवनस्य उपरि समीहे । (ज्ञानं यत् दीनेः) ।

महाज्ञानी दादा[1]रः उवाच वाक्यम् (दीनेः स्वामिनः) करोति पश्चात् उत्तमं जीवितस्य द[2]धाति ॥[3][267]

॥ २० ॥ २०. यत् त्वं मया सह मित्रत्वं करोषि । (तत् सर्वं अभीप्सितं ते) सर्वं दधामि[1][ददामि] लाभंच ।

पुण्यं उत्तमेन मनसा यावत् वचनं संपूर्णमनसा[2] (करणीयम्) ।[3]

यदि मनसा[268] नमस्कृतिं स्वामिनो आनंदेन प्रमोदेन कुरुते । (ततः स्वामी करोति प्रसादम्)[3] ॥[269]

॥ २१ ॥ २१. संपूर्णेन मनसा नरो गुरुतरः यो निर्वाणज्ञः वचनं कुरुते ।

असौ दीनेः पुण्यस्य वृद्धिकर्ता । अस्य उत्तमस्य मनसः राज्यम् । (देहि) ।

महाज्ञानिन् देहि स्वामिन् (ते प्रसादं प्रसादपूरितं) समीहे यत् उत्तमं पुण्यं (भक्तिशीलम्) ॥[270]

॥ २२ ॥ २२. यो मे पुण्यसंश्लेषात् उत्कृष्टतरं (भुवनं देहि) आराधनां उपरि ।

---

॥ १७ ॥ १. MLHL$_1$ सरूपां. २. NMRL$_4$, EMU$_{17}$ मूल्येन; H$_2$ समूलेन. ३ EMU$_{71}$ अनुगोऽ(?).

॥ १८ ॥ १. All MSS. यामास्पः [य for ज].

॥ १९ ॥ १. M. दधार (?). २. NMRL$_4$, K$_7$, TDA$_2$, MLHL$_1$, H$_2$, EMU$_{17}$, MFL जीवितव्यं विदधाति. ३. M., NMRL$_4$, K$_7$, TDA$_2$, MLHL$_1$, H$_2$, EMU$_{17}$, MFL have an addition (किल सम्बलं यत् वचसा कर्मणा करोति). [EMU$_{17}$ has कम्बलं, instead of सम्बलं, MFL संबोल or सबलं].

॥ २० ॥ १. EMU$_{17}$, K$_7$, MFL, TDA$_2$, MLHL$_1$, H$_2$, NMRL$_4$ ददामि. २. K$_7$ NMRL$_4$ संपूर्णे [संपूर्णेन] मनसा. ३. H$_2$, TDA$_2$ have here an additional gloss (?) (प्रमादाय नमस्कारः) (?).

16

वेत्ता त्वां[त्वं?] महाज्ञानिन् स्वामिन् ये च अभवन् ये च संति। (सर्वेषां त्वं ज्ञाता)। तान् आराधये निजैः नामभिः (अपरान् अमिशास्पितान्) उपरि प्राप्नोमि सहायमत्ताम्॥ [271]

---

## हा. ५२ ॥ ५१ ॥

॥ १ ॥ १. उत्तमा (नरा) उत्तमा (नार्यः) (तेषां) आशीर्वादयामि यत् सर्वेषां मुक्तात्मनां पंक्तये। (ये संजाताः)। २. वर्तमानानां च अतीतानां च भविष्याणां च। ३. लक्ष्मीं चक्रस्थितां (उत्तमां दक्षिणां) दीर्घां अभिलाषये। ४. यत् [या] सदैव उदयसाहाय्यैः [०साहाय्या] शुभस्य उपरि आस्ते उदयसाहाय्यः [०या] सदैव शिष्यां [शिष्याणां] दातुं शक्यते॥ [272]

॥ २ ॥ ५. भवंतु सर्वे आरोग्यकराः यत् आपः गावः (पशवश्च) वनस्पतयश्च। ६. विनाशं पीडां करोमि सर्वेषां बहूनां देवीयानां मनुष्याणाम्। ७. अच्छेदं कुरु अंतः अस्मिन् गृहे अपरेषां गृहे गृहपतीनाम्॥ [273]

॥ ३ ॥ ८. उत्तमं [उत्तमां] दातिं उत्तमं पुण्यम्। (देहि)। ९. शोभनं प्राक्तनं (एवंदं) उत्तमं [च] नरं शिष्यं चक्रस्थितं उत्तमं दीर्घं समीहे। १०. यत् अस्माकं उत्तमं अतःपरं शुभतरं पुण्यं कुरु। [274]

॥ ४ ॥ ११. अमिशास्पितानां आराधनाय नमस्करणाय माननाय प्रकाशनाय। १२. वृद्धिदानं अस्मिन् गृहे कुरु वृद्धिदानं सर्वेषां मुक्तात्मनां पंक्तये। १३. विपक्षं करोमि सर्वेषां दुर्गतिमतां पंक्तये (सृष्टये)। १४. स्तौमि पुण्यम्। (यत् इजिश्निं करोमि)।

अहुरमज्दस्य स्वीयां आराधनां करोमि॥ [275]

---

## हा ५३. ॥ ५२ ॥

### नमो युष्मभ्यं हे गाथाः पुण्यात्मन्यः॥

॥ १ ॥ १. अतःपरं भुवनं समीहे वचनं जरथुश्त्रस्य। (किल यत् इदं वांछये किंचित् एतत् अतःपरं भुवनं अविस्ताजंदंच)।

---

॥ २२ ॥ MLHL$_1$, EMU$_{17}$ ज्ञात्वा. २. H$_2$, EMU$_{17}$, MFL, K$_7$, TDA$_2$, MLHL$_1$, NMRL$_4$ साहाज्यमत्तम।.

---

॥ ५२ ॥

॥ १ ॥ १. MLHL$_1$, TDA$_2$, K$_7$, EMU$_{17}$, H$_2$, NMRL$_4$ उदयसाहाज्यः [ज for य]; Sp; उत्तमसाहाज्यः

॥ २ ॥ १. NMRL$_4$ has another rendering on the margin विनाशं विश्वान् देविसानां [देवयस्नानां] मनुषाणां [मनुष्याणां]......MFL विनाशनां.

॥ ३ ॥ १ MFL प्रकटतरं.

॥ ४ ॥ १. Spiegel proposes to read विपक्षतां.

स्पितमानस्य एवं इदं [ इमां ] देहि संपत्ति ( आद्यताम् ) । ( किल विस्तास्पस्य[3] गृहपतेः गृहपतित्वं [276] देहि ) ।

यत् पुण्यं संपत्ति स्वामिन् महाज्ञानिन् सर्वं देहि सर्वं यावत् धान्यं सर्वेषां गोतॄणां [ गोत्राणां ] देहि । ( किल यावत् तनोः अक्षयत्वं एतेषां अपराणां देहि ) ।

तत् यत् असौ विप्रतारयति ( आहर्मन ) शिष्यापयति दीनेः उत्तमायाः वचनं ( कुरु ) कर्मणा ॥ [277]

॥ २ ॥ २. एवं यत् असौ शिष्यापयति[1] त्वं उत्तमं मनो[1a] वाक्यं कुरु[1b] । ( यत् पूर्वं अग्रे उक्तम् ) ।

सुष्टुतया त्वं [ त्वां ] जानाति[2] तस्य स्वामिनः नमस्कृति आराधनां च कुरु[1b] ।

कइवस्तास्पस्य जरथुस्त्रस्पित्तमानस्य फिरशउस्त्रस्यच ।

देहि अयं निर्मलो मार्गः ( मार्गो अयं ) यतः [ यत् ] स्वामिनो दीनिः एतेषां लाभमतां देहि । ( किल वाक्यं इदं उत्तमानां आस्वादयामि ) ॥ [278]

॥ ३ ॥ ३. यत् त्वं संपूर्णं हइजदस्पस्पितमां[1] [ ०तमा ] ( आस्ते ) ।

चेत् अजीजनत्[2] दुहिता जरथुस्त्रेण ।

उत्तमस्य मनसः स्थातुं ( सुव्यापारं ) एवं आस्ते पुण्यस्य ज्ञानं एवं यत् त्वं दातिं[3] देहि अधिपतित्वम् ।

यत् एवं सर्वं प्रश्नं ते बुद्धिम् । ( दीनिः [ दीनिं ] ते ) महत्तर ( स्वामिन् ) संपूर्णमनसा सुज्ञानं दातिं देहि ॥ [279]

॥ ४ ॥ ४. यत् त्वं शोभनं परिपूर्णं दानं देहि । ( यत् दीनेः ) अनेन पित्रा दातिं [ दातिः ] दत्ता । ( तनुं स्त्रियोः[1a] संप्राप्तम् [ संप्राप्तं ] ) [280]

यत् कार्यं कर्तारः[1b] कुटुंबिनः[1c] कार्यं गृहे स्वामिनः एवं स्त्रीयानाम् [ ०णां ] । ( यत् तनुं पालयति । दातिं मुक्तात्मनां प्राप्नोतु असौ मुक्तात्मा जामास्पः[1d] ) ।

यत् उत्तममनाः स्वीयं ( सुव्यापारं स्वीयगोत्रिणां उपरि आस्ते तस्य ) सुस्वादं[2] ( संपूर्णखाद्यं वस्त्रं च प्रसादं प्रसादपूरितं ) गुरुकार्यं चैतन्यं ( ज्ञानत्वं [ ज्ञानित्वं ] सुखेन देहि ) ।

महाज्ञानिन् देहि स्वामिन् दीनिं उत्तमां सर्वं यावत् । ( किल एतेषां सर्वेषां अपरेषां दीनेः उत्तमायाः उपरिस्थिति विद्यते ) ॥ [281]

---

॥ ५३ ॥

॥ १ ॥ १. Several MSS. वस्तापस्य. २. $H_2$, $K_7$, $MLHL_1$, $TDA_2$, $NMRL_4$ जोगिणां, MFL जोगीणा.

॥ २ ॥ १. $TDA_2$, $MLHL_1$, $H_2$ शिष्यापयंति instead of असौ शिष्यापयति. १a. $K_7$, $MLHL_1$ त्वं उत्तममनाः १b. $MLHL_1$ कुरुते. २. All have त्वं जानाति. (?).

॥ ३ ॥ १. MFL इदंच अस्पितमा; $EMU_{17}$, $TDA_2$ हएचदअस्पितमां; $MLHL_1$ हिइचदअस्प; $K_7$, $H_2$ हइचदअस्प. २. Mills proposes to correct it अजनिष्ट; $NMRL_4$ अजीजाता जनत् (?); $EMU_{17}$, $TDA_2$, $MLHL_1$, $K_7$, $H_2$, MFL अजिजाताजनत्; ३. $MLHL_1$ ददाति.

॥ ४ ॥ १. M. दाता (?). १a. $EMU_{17}$ तनुस्त्रिजः (?). १b. $EMU_{17}$ कर्त्र्योरः (?). १c. $K_7$ कुटम्बिनः १d. $EMU_{17}$ यामासः [ य for ज, and elision of the final प as in colloquial Gujerâti ]. २. $NMRL_4$, $EMU_{17}$ सुस्वादु.

(११६) १८२. पश्चात् प्रथमं क्रमं दुर्मतेन द्वितीयं च दुरुक्तेन तृतीयं च दुःकृतेन अन्त निवेशयति ॥ १८३. चतुर्थेन क्रमेण पुरतः आहर्म्मनस्य दुर्गतिमतः अपरेषां च देवानां मध्ये प्रयाति ॥

(११७) १८४. तस्य च देवा उपहास्यं अनुकरणं च तत्र कुर्वंति ॥ १८५. यत् तव अहुरमज्दात् स्वामिनः अमिशास्पिन्तेभ्यश्च स्वर्गलोकाच्च सुगंधात् शुभानन्दात् को बलात्कारोऽपराधश्च जातः यत् त्वं अवलोकयितुं आहर्म्मनं देवांश्च नरकं च यत् तमोमयं प्राविशः ॥ १८६. यतस्ते वयं अन्यायं कुर्महे न च क्षमयामः[1] । दीर्घकालं अन्यायं अवलोकयिष्यसि ॥

(११८) १८७. ब्रूतेच आहर्मनो देवान् ॥ १८८ यत् मा वच एतस्मात् पृच्छथ १८९. यतस्तस्मात् वल्लभतरात् तनोर्विभिन्नोऽयं तथा तेन निकृष्टेन उत्तारकेन आयातोऽस्ति ॥

(११९) १९०. संमुखं समानयथ मलिनतमं निकृष्टतमं च खाद्येभ्यः खाद्यं यत् नरके संचितमस्ति ॥

(१२०) १९१. आनयंति विषाणि पुरीषाणि सर्प्पान् वृश्चिकान्[1] अपरांश्च क्षुद्रजंतून् यान् नरके[2] ॥

(१२१) १९२. तस्य खादितुं च ददंति ॥ १९३. तथा यावत् शवोत्थानं तनोः अक्षयत्वं प्रचुराणां अन्यायानां निग्रहाणां च बहुप्रकाराणां नरके योग्यो भवति ॥

(१२२) १९४. बहूनि च तत्र खाद्यानि शक्नुवंति भवितुं दुर्गंधिरक्तप्रतिरूपाणि ॥

(१२३) १९५. परलोकीया या नैसर्गिका बुद्धिः एनं ज्ञानिनं प्रत्यवोचत् ॥ १९६. किल अहो यत् त्वं ग्रहणं तनोः शुद्धिं चात्मनः अपृच्छथा मया शुद्धतया संमुखं उक्तं समर्पितमास्ते ।

(१२४) १९७. सदृशं साधु वर्द्धय कार्यं च धारय ॥ १९८. यतस्ते अयमस्ति महान् मार्गः ग्रहणाय तनोः शुद्धये चात्मनः ॥

---

## [ अथ द्वितीयः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं ॥ २. यत् दक्षिणा उत्तमा किंवा सत्यता ॥ ३. अथवा त्रिधाप्रहरककारिता उत्तमा किंवा बुद्धिः ॥ ४. अथवा संपूर्णमानसता उत्तमा किंवा संतुष्टिः ॥

(२) ५. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् ॥ ६. यत् आत्मने दक्षिणा । समग्रायै च भूसंभूतये सत्यता । ७. अंतश्च ईअजदानां त्रिधाप्रहरककारिता वपुषि च मनुष्यस्य बुद्धिः । ८ सर्वेभ्यश्च कार्येभ्यः संपूर्णमानसता । समाधानाय च तनोर्विघाताय च आहर्म्मनस्य देवानां सन्तुष्टिरुत्तमा ॥

---

॥ ११७ ॥ १. $MLHL_3$ $K_8$ कृपयामः

॥ १२० ॥ १. W. दर्दुरान्. २. All नरकेन.

## [ अथ तृतीयः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं ॥ २. यत् पुण्यं किं महत् उत्तमं च ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् ॥ ४. यत् महत् पुण्यं दक्षिणा । द्वितीयं च सत्यता षुअएतुदर्थं [खुअएतुदर्थं][23] च ॥

(३) ५. तृतीयं च गहम्बारः । चतुर्थं च समग्रदीनेः एंजनं[24] ॥

(४-५) ६. पंचमं च इजिश्निः ईअजदेभ्यः आश्रमस्थानानां च वणिकूलोकेभ्यः करणं ॥ ७. षष्ठं सर्वेभ्यः केभ्यश्चित् शुभेच्छा ॥

(६) ८. सप्तमं सुलोचनता या उत्तमेषु ॥

---

## [ अथ चतुर्थः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं ॥ २. यत् पृथ्वी का सानन्दतरा ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् ॥ ४. यत् पृथ्वी सा सानन्दतरा यत्र पुरुषो यः पुण्यात्मा सत्यवाक् निवासं कुरुते ॥

(३-४) ५. द्वितीया च यत्र प्रासादं अग्नीनां कुर्वंति ॥ ६. तृतीया च यत्र गावः पशवश्च उपविशंति ॥

(५) ७. चतुर्थी च कृषिहीनां उद्वासितां भूमिं यत्र पुनरपि कृषितां निवासितां च समानयंति ॥

(६) ८. पंचमी च यत्र विवरं यत् क्षुद्रजन्तूनां समुत्खनंति ॥ ९. षष्ठी च यत्र इजिश्निः संप्राप्तिश्च ईअजदानां उपविशनं च उत्तमानां उपरि भवति ॥

(७-८) १०. सप्तमी च यत्र तां यां उद्वासां वासिनीं कुर्वंति ॥

(९) ११. अष्टमी च यत्र स्वाधीनताया निकृष्टानां स्वाधीनतां उत्तमानां प्राप्नोति ॥

(१०) १२. नवमी च यत्र पाकः फलं च यत् अस्या भवति· ईअजदेभ्य उत्तमेभ्यश्च योग्यतरेभ्यश्च विभागं कुर्वंति ॥

(११) १३. दशमी च यत्र जोरं[25] इजिश्निं च कुर्वंति ॥

---

## [ अथ पंचमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् पृथ्वी का सविषादतरा ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् ॥ ४. यत् पृथ्वी सा दुःखिततरा यत्र नरकं विनिर्मितमास्ते ॥

(३-४) ५. द्वितीया च यत्र पुरुषं पुण्यात्मकमपापं निघ्नंति ॥ ६. तृतीया च यत्र देवा देव्यश्च समवायं कुर्वंति ॥

(५-६) ७. चतुर्थी च यत्र प्रतिमाप्रासादं कुर्वंति ॥ ८. पंचमी च यत्र मनुष्यो यो दुर्गतिमान् अन्यायकर्त्ता निवासं कुरुते ॥

---

॥ ३ ॥ १. MLHL$_3$ ॐ अजनं K$_3$ ईयजनं.

(७) ९. षष्ठी च यत्र नसा अधोनिखातीकृता आस्ते ॥

(८-९) १०. सप्तमी च यत्र क्षुद्रजन्तवो विवरं कुर्वन्ति ॥ ११. अष्टमी च यत्र स्वाधीनताया उत्तमानां स्वाधीनतां निकृष्टानां प्राप्नोति ॥

(१०) १२. नवमी च यत्र तां यां निवासिनीं उद्वासां कुर्वंति ॥

(११) १३. दशमी च यत्र अश्रुपातं केशत्रोटनं च कुर्वंति ॥

---

## [ अथ षष्ठः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् स्वर्गलोकं च कीदृशं कियत्प्रमाणं ॥

(२-३) ३. मध्यभुवनं च कीदृशं कियत्प्रमाणं ॥ ४. नरकं च कीदृशं कियत्प्रमाणं ॥

(४-५) ५. मुक्तात्मनां अन्तः स्वर्गभुवने न्यायः कः शुभं च तत्र किं ॥ ६. दुर्गतिमतां अन्तर्नरकेऽन्यायः प्रतिघातश्च कः ॥

(६) ७. अमीषां च ये मध्यस्थभुवनिनः संति न्यायः कः कीदृशः ॥

(७) ८. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ९. यत् स्वर्गभुवनं प्रथमं तारापदात् यावत् चन्द्रमण्डलपदं ॥ १०. द्वितीयं च चन्द्रमण्डलपदात् यावत् सूर्यमंडलं ॥ ११. तृतीयं च सूर्यमंडलपदात् यावत् गरोथ्मानं यत्र स्रष्टा स्वामी महाज्ञानी उपरि उपविशति ॥

(८) १२. स्वर्गभुवनं च प्रथमं सुमतं द्वितीयं च सूक्तं तृतीयं च सुकृतं ॥

(९) १३. मुक्तात्मानः अन्तः स्वर्गभुवने अजरा अमरा अभया अदुःखिनः अप्रतिविघाताः संति ॥

(१०) १४. सर्वकालं च सम्पूर्णश्रीकाः सुगंधाः सुखिनः संपूर्णानन्दाः संपूर्णशुभाः संति ॥

(११) १५. सर्वकालं च वायु र्यः सुगंधः गंधश्च यः सुगंधकुसुमसमानः संमुखं समायाति ॥ यः सर्वेभ्यः सुखेभ्यः सुखतरः यश्च सर्वेभ्यः सुगंधेभ्यः सुगंधतरः ॥

(१२) १६. तेषां संस्छितैः [संस्थितैः] स्वर्गभुवनस्य तृप्तिर्नास्ति ॥

(१३) १७. तेषां आसनं प्रचरणं आलोकश्च आनंदश्च समं ईंअजदैः अमिशास्पिन्तैर्मुक्तात्मभिश्च यावत् सदा च सदाप्रवृतिं च ॥

(१४) १८. मध्यस्थभुवनिनां हेतोः प्रकटं यत् भूमंडलात् यावत् तारापदं । १९. विना शीतेन उष्णेन च अन्यथा अमीषां किंचिदपि प्रतिघातो नास्ति ॥

(१५-१६) २०. नरकं च प्रथमं दुर्मतं द्वितीयं च दुरुक्तं तृतीयं च दुःकृतं ॥ २१. चतुर्थेन क्रमेण दुर्गतिमान्मनुष्यस्तत्र यत्र घोरांधकारं नरकं प्राप्नोति ॥ २२. तं च पश्चात् आसन्नतायां आहर्म्मनस्य दुर्गतिमतो नयंति ॥

(१७) २३. तस्य आहर्म्मनो देवाश्च उपहास्यं अनुकरणं च कुर्वंति । २४. यत् ते अहुरमज्दात् अमिशास्पिन्तेभ्यश्च स्वर्गलोकाच्च सुगन्धात् शुभानन्दात् को बलात्कारः अपराधश्च जातः । यत् त्वं अवलोकयितुं अस्मान् नरकं च यत् तमोमयं समायातः । २५. यतस्ते वयं अन्यायं कुर्म्महे न च क्षमयामः दीर्घकालं च अन्यायं अवलोकयिष्यसि॥

---

॥ ११ ॥ १. W. अश्रपातं.

॥ १७ ॥ १. $K_3$ कृपयामः

(१८) २६. तस्य पश्चात् निग्रहान् अन्यायांश्च बहुप्रकारान् कुर्वंति ॥

(१९) २७. तथा अस्ति स्थानं किल शीतता एवं यथा तत् यत् शीतलतरं हिमं हिमोपलाश्च ॥ २८. तथा अस्ति स्थानं किल निदाघता च एवं यथा स यो निदाघतरः ज्योतिष्मान्तरश्च [°मत्तरश्च] वह्निः ॥ २९. तथा अस्ति स्थानं यत् तेषां क्षुद्रजन्तव एवं आकर्षंति यथा श्वा अस्थिपंजरं ॥ ३०. अस्ति च स्थानं यत् दुर्गंधिश्च एवं यथा उद्वमंति च पतंति च ॥ ३१. तथा सर्ववारं तेषां अन्धकार एवं उपमेयः यथा किल हस्तैः शक्यते गृहीतुं ॥

---

## [ अथ सप्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् स्वामी महाज्ञानी एनां सृष्टिं दातिं च कीदृशां केन प्रकारेण अददत् ।

(२) ३. असौ च अमिशास्पिन्तान् शून्यचारिणीं च यां बुद्धिं कीदृशां केन प्रकारेण अघटयत् अददत् ॥

(३) ४. आहर्म्मनेन च दुर्गतिमता देवा देव्यश्च अपरे च क्षुद्रजन्तवः कथं विनिर्म्मिताः सन्ति ॥

(४-५) ५. सर्वं शुभं च अशुभं च यत् मनुष्याणां अपरासां च सृष्टीनां कथं प्राप्नोति ॥ ६. किंचिच्च यत् विभक्तमास्ते परिभ्रामयितुं शक्यते किंवा नहि ॥

(६) ७. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ८. यत् स्रष्टा स्वामी महाज्ञानी एनां सृष्टिं दातिं च अमिशास्पिन्तांश्च परलोकीयां च यां बुद्धिं तस्मात् यः स्वीय उद्द्योतः आशीर्वादेन च समयस्य अनंतस्य असृजत् ॥

(७) ९. इति हेतोर्यतः समयोऽनंतः अजरोऽमरश्च अदुःखी अक्षुधावान् अतृषावान् अप्रतिविघातः तथा यावत् सदा च सदाप्रवृत्ति एनं कश्चिदपि बलात् गृहीतुं स्वकार्यतायाश्च अराजानं कर्त्तुं न शक्नोति ॥

(८) १०. तथा आहर्म्मनो दुर्गतिमान् देवान् देवीश्च अपरांश्च क्षुद्रजन्तून् अपानमैथुनात् स्वीयात् असृजत् ॥

(९) ११. स च नव वर्षसहस्राणां समयस्य अनंतस्य समं स्वामिना महाज्ञानिना सीमां अकरोत् । १२. तथा यावत्परिपूर्णो भवति तावत् कश्चिदपि परिभ्रामयितुं अन्यथा कर्त्तुं न शक्नोति ॥

(१०) १३. यदि [यदा] नव वर्षसहस्राः संपूर्णा अभवन् [भविष्यंति] आहर्म्मनः परिक्षीयति अक्षमो भवति [भविष्यति] । १४. स्रोशश्च पुण्यात्मकः कोपदेवं निहंति । १५. मिहिरश्च मैत्रीरूपः कालश्च योऽनंतः शून्यचारी च यो न्यायः यः किंचिदपि न प्रतारयति दातिश्च पुनर्दातिश्च[26] समग्रां सृष्टिं दातिं च आहर्म्मनस्य निर्वाणे आजिं च देवं क्षुधारूपं विनिघ्नंति ॥

---

॥ १९ ॥ १. All have here *et sequor* ज्ञानिन् as the translation of Pâzand "dânâ" which is a wrong deciphering of the Pahhari "*jâvâk*" ( Persian "jâ" place ).

---

॥ ६ ॥ १. W. सृष्टा.

॥ ८ ॥ $K_3$ अपानमथनात्.

(११) १६. समग्रा च सृष्टिर्दीतिश्च या स्वामिनो महाज्ञानिनः अप्रतिविघाता एवं पुनः स्यात् यथा सा या प्रथमं विनिर्मिता दत्ता च ॥

(१२) १७. सर्वं शुभं अशुभं च यत् मनुष्याणां अपरासां च सृष्टीनां प्राप्नोति सप्तभ्यो द्वादशभ्यश्च प्राप्नोति ॥

(१३) १८. ते च द्वादश राशयः दीनौ द्वादश सैन्याधिपतयः पक्षे स्वामिनो महाज्ञानिनः उक्ताः संति । १९. ते च सप्तग्रहाः सप्त सैन्याधिपतयः पक्षे आहर्म्मनस्य उक्ताः संति ॥

(१४) २०. समग्रां च सृष्टिं दांतिं च एते सप्तग्रहाः पीडयंति तथा मृत्योः सकलस्य च अन्यायस्य समर्पयंति[1]। २१. यथा एते द्वादश राशयः[2] स्रष्टारः प्रचारयितारश्च भूसंभूतेः संति ॥

(१५) २२. स्वामी महाज्ञानी शुभकामी कदाचिदपि अन्यायं न प्रतिकरोति न च ईहते ॥ २३. आहर्मनश्च अन्यायकामी किंचिदपि शुभं न चिंतयति न च प्रतिकरोति॥

(१६) २४. स्वामी महाज्ञानी यदि ईहते सृष्टिं आहर्म्मनस्य आहर्मनोऽप्यस्ति यदि ईहते सृष्टिं स्वामिनो महाज्ञानिनः परिभ्रामयितुं शक्नुतः । २५. परं एवं शक्नुतः परिभ्रामयितुं यथा निर्वाणकाले स्वामिनो महाज्ञानिनो हानिर्न स्यात् । २६. यतो निर्वाणे विजयता[1] [विजयिता] स्वामिनो महाज्ञानिनः स्वकीया ॥

(१७) २७. यतः प्रकटं यत् स्वामिना महाज्ञानिना यमशेदफ्रेदूनकहोशा[27] राजानः अक्षया दत्ता आसन् । २८. आहर्म्मनेन च एवं परिभ्रामिता यथा प्रसिद्धं ॥ २९. तथा आहर्म्मनेन बएवरास्प-फ्रासिआक-अरक्सदरा[23] राजान एवं वांच्छिताः यत् अनश्वराः संति ।

(१८) ३० स्वामिना महाज्ञानिना महालाभतायै एवं परिभ्रामिता यथा तत् यत् प्रकटं ॥

---

## [ अथ अष्टमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् द्वीपात् द्वीपे शक्यते गंतुं किंवा नहि ॥

(२-३) ३. आकाशं च केन रत्नेन कृतमास्ते ॥ ४. सन्मिश्रता [संमिश्रता] च सलिलस्य अंतः पृथिव्यां कीदृशा केन च प्रकारेण ॥

(४) ५. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ६. यत् द्वीपात् द्वीपे विना साहाय्येन ईअजदानां अथवा साहाय्येन च देवानां अन्यथा गंतुं न शक्यते ॥

(५-६) ७. आकाशं च रत्नेन तीक्ष्णलोहेन कृतमास्ते यत् पांडरसिकमिति आकथ्यते ॥

(७) ८. सन्मिश्रता [संमिश्रता] च सलिलस्य अंतः पृथिव्यां एवं यथा रुधिरं अंतस्तनोः मनुष्याणाम् ॥

---

॥ १४ ॥ १. MLHL$_3$ समर्थयंति. २. K$_8$ leaves a blank space for a word or two here both in Sanskrit as well as in the original Pazand.

॥ १६ ॥ १. K$_8$ निर्वाणविजयता.

## [ अथ नवमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं ॥ २. यत् आहर्म्मनस्य दुर्गति मतस्तस्य देवानां च दुष्टसृष्टीनां च समं स्वामिना महाज्ञानिना अमिशास्पितैश्च काचित् सम्प्रपत्तिर्वल्लभता च एकस्य समं द्वितीयेन भवितुं शक्नोति किंवा नहि ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् केनचिदपि लेख्यकेन भवितुं न शक्नोति । ५. यतः आहर्म्मनो मिथ्योक्तिं यां निकृष्टां चिंतयति तस्य कार्यं कोपो द्वेषश्च असंप्रपत्तिश्च ॥

(३) ६. स्वामी महाज्ञानी पुण्यं चिन्तयति तस्य कार्यं च पुण्यं उत्तमता च सत्यता च ॥

(४) ७. तथा सर्वं किंचित् परिभ्रामयितुं शक्यते विना[20] रत्नेन शुभेन निकृष्टेन च ॥

(५) ८. रत्नं च यत् शुभं केनचिदपि उपायेन निकृष्टतायां रत्नं च यत् निकृष्टं केनापि प्रकारेण उत्तमतायां परिभ्रामयितुं न शक्यते ॥

(६) ९. स्वामी च महाज्ञानी शुभरत्नत्वात् कांचित् निकृष्टतां असत्यतां च न प्रतिकरोति । १०. आहर्म्मनोऽपि निकृष्टरत्नत्वात् कांचित् उत्तमतां सत्यतां न प्रतिकरोति ॥

(७) ११. तयोः इतिहेतोः एकस्य समं द्वितीयेन काचित् संप्रपत्तिर्वल्लभता च भवितुं न शक्नोति ॥

---

## [ अथ दशमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं ॥ २. यत् बुद्धिरुत्तमा किंवा गुणः ( वा उत्तमता ) ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् बुद्धि र्या उत्तमतया नहि सह बुद्धि र्नो श्रेया । ५. गुणोऽपि यो बुद्ध्या नहि सह गुणोऽपि नो श्रेयः ॥

---

## [ अथ एकादशः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं ॥ २. किल किमर्थं शुभं यत् परलोकीयं ईदृशं सत्यं तच्च यत् इहलोकीयं ईदृशं असत्यं विभक्तमास्ते ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् शुभं यत् इहलोकीयं मूलदाने ईदृशं सत्यं विभक्तमासीत् यथा तत् यत् परलोकीयं ॥

(३) ५. तथा स्रष्टा स्वामी महाज्ञानी समग्रं यत् शुभं अस्याः सृष्टेर्यातैश्च मूले मिहिरस्य चन्द्रस्य अमीषां च द्वादशराशीनां ये दीनौ द्वादश सैन्याधिपतय उक्ताः संति अकरोत् । ६. तैश्च सत्यतया यथानुरूपतया च विभक्तुं अहुरमज्दात् प्रतिकृतम् ॥

(४) ७. पश्चात् आहर्म्मनेन ते सप्त ग्रहा यथा सप्त सैन्याधिपतय आहर्मनीया उक्ताः संति विनाशयितुं अपहर्तुं च तत् शुभं सृष्टेः स्वामिनो महाज्ञानिनः प्रतिघाताय मिहिरस्य चन्द्रस्य तेषां च द्वादशराशीनां प्रदत्ताः ।

---

॥ ३ ॥ १. W. सृष्टा.

(५) ८. तथा समग्रं शुभं यत्ते मिहिरचन्द्रराशयः सृष्टिभ्यः स्वामिनो महाज्ञानिनो विभजंते । ९. ते च सप्त ग्रहा यत् कियत् शक्नुवंति तदेताभ्यः[1] अपहरंति । १०. शक्तये च देवानां देवीनां निकृष्टानां च ददंति ॥

(६) ११. शुभं च यत् परलोकीयं इति हेतोः ईदृशं सत्यं यतः अहुरमज्दः स्वामी समं समग्रैः ईजदैः अमिशास्पितैः अप्रतिविघातोऽस्ति । १२. तथा युद्धं च यत् समं आहर्म्मनेन देवैश्च लेख्यकं च यत् आत्मनां मनुष्याणां सत्यतया कुरुते ॥

(७) १३. यस्य च पुण्यं समधिकं स्थितिः स्वर्गभुवने । १४. यस्य च पुण्यं पापं च संमिश्रं तुल्यं स्थितिर्मध्यभुवने । १५. यदि च पापं समधिकं ततः मार्गे नरकस्य ॥

---

## [ अथ द्वादशः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. किल किमर्थं यत् गावः पशवश्च पक्षिणो मत्स्याश्च एकैकं तेन येन स्वीयेन ज्ञानेन यथानुरूपतया ज्ञानमंतः [ज्ञानवंतः] संति ॥

(२) ३. मनुष्याश्च यावत् अमीषां शिष्यां उपरि न क्षेपयंति प्रचुरं क्लेशं व्ययं[1] च न कुर्वंति ज्ञानतां [ज्ञानितां] यां मानुषीं संप्राप्तुं परिज्ञातुं च न शक्नुवंति ॥

(३) ४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ५. यत् मनुष्या मूलदातौ ईदृशा ज्ञानिनो जाता अभविष्यन् [अभवन्] यथैते मनुष्याः पुण्यानि पापानि च यान्यकरिष्यन् तेषां प्रसादं यत् पुण्यस्य निग्रहं च यत् पापस्य निजैर्लोचनैः अद्रक्ष्यन् । ६. तथा किंचिदपि पापं मनुष्येभ्यो न प्राचरिष्यत् [प्राचरत्] ॥

(४) ७. पश्चात् आहर्म्मनो दुर्गतिमान् प्रसादं यत् पुण्यस्य निग्रहं च यत् पापस्य अधिकं आच्छादयत् ॥

(५) ८. इति च हेतोः अंतर्दीनौ उक्तमास्ते[30] । ९. "यत् एतेभ्यः समग्रेभ्योऽन्यायेभ्यो यान् निकृष्टः गनामइनीऊ [गनामइनीओ] दुर्गतिमान् सृष्टीनां स्वामिनो महाज्ञानिनः अकरोत् चतुष्टयं किंचिदिदं निकृष्टतरं भारितरं च । १०. यत् [१] पुण्यस्य प्रसादं [२] पापस्य च निग्रहं [३] मनश्च मनुष्याणां [४] निर्वाणं च कार्य्याणां अधिकं आच्छादयत्" ॥

(६) ११. इति समस्तैः कारणैर्बहूनि दर्शनानि प्रबोधांश्च असदाचारिणः अंतः पृथिव्यां प्रवर्त्तमानान् अकरोत् ॥

(७) १२. मनुष्याश्च अज्ञानत्वात् कार्यस्य पुण्यस्य सर्वे केऽपि तत् बहुतरं प्रतिबुध्यंति उत्तमं च गृह्णंति यस्य शिष्या दर्शनस्योपरि जाता आस्ते ॥

(८) १३. नामतश्च तद् दर्शनं पवित्रतरं यत् राज्येन सह भवति ॥

---

॥ ५ ॥. १. Some MSS. तदेव ताभ्यः

---

॥ २ ॥. १ $MLHL_3$ क्लेशव्ययं.

(९) १४. विना तेनैकेन स्वामित्वेन राज्येन यत् गुहतास्पस्य राज्ञां राज्ञः । १५. यो दीनिं सुन्दरां सत्यां वाणीं यां स्रष्टुः स्वामिनो महाज्ञानिनः सुनिश्चिततया सम्यक्तया च ज्ञात्वा एकस्मात् जरथुश्त्रात् स्पितमपुत्रात् प्रकर्षेण प्रत्यकरोत् । १६. यो सर्वप्रकारं शुभं यत् इहलोकीयं परलोकीयं अस्या दीनेः उत्तमाया माज्दईअस्न्या निर्म्मलं विभक्तं सुनिश्चितं अप्रकटयत्[31] ।

(१०). १७. अन्यथा [अन्यो] कोऽपि प्रबोधो नास्ति येन शुभं यत् इहलोकीयं परलोकीयं ईदृशं सुविभक्तं निर्म्मलं शक्यते प्राप्तुं परिज्ञातुं च ॥

(११) १८. अधिकं बह्वालोकनत्वात् जडीभूता आवमर्दिता च एवं संति यथामीषां वाक्या आद्या सा मध्ये मध्या च सा निर्वाणे अतीव असदृशा[1] ॥

## [ अथ त्रयोदशः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् रक्षकः कः प्राकार इव । ३. मित्रश्च क उत्तमः ॥ ४. नामकीर्त्तयिता च क उत्तमः ॥ ५. आनंदस्य सहायी क उत्तमः ॥ ६. लक्ष्मीश्च का सौख्यकरा ॥ ७. आनंदश्च यः समस्तेभ्य आनंदेभ्यः प्रकृष्टतरः कः ॥

(२) ८. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ९. यत् रक्षकः ईजदः प्राकार इव ॥ १०. मित्रश्च भ्राता यो भव्य उत्तमः ॥ ११. नामकीर्त्तयिता च पुत्रो यः सुंदरः दीनिप्रचारी च उत्तमः ॥ १२. आनन्दस्य सहायिनी भार्या या भव्या सुशीला उत्तमा ॥ १३. लक्ष्मीश्च सा उत्तमा सौख्यकरा च या सदाचारादर्जिता आस्ते समं च कार्येण पुण्येन च भक्षयति धारयति च ॥ १४. आनन्दश्च यः समस्तेभ्य आनन्देभ्यः प्रकृष्टतरस्तनोः आरोग्यता निर्भयता च सुकीर्त्तिश्च पुण्यं च (उत्तमं) ॥

## [ अथ चतुर्दशः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् दुर्बलता उत्तमा किंवा शक्तिमत्ता किंवा राज्यं ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् दुर्बलता या सदाचारेण [सदाचारिणी] उत्तमा शक्तिमत्ताया या विभूतित्वात् केषांचित् ॥ (३) ५. यत उक्तमास्ते । ६. यत् असौ च यः दुर्बलतमोऽजंगमश्च[1] कश्चित् सर्वदा यदि अस्य मनः वचः कर्म्म च सदाचारितरं कार्येण च अहुरमज्दस्य धत्ते सर्वेभ्यः कार्येभ्यः पुण्येभ्यश्च यानि मनुष्या अंतः पृथिव्यां कुर्वंति अस्य च आचारतया विभागो मध्ये भवति ॥ (४) ७. असौ च यः शक्तिमान् प्रभूतलक्ष्मीकश्च मनुष्यः चेत् लक्ष्मीर्न सदाचारात् कृता आस्ते यद्यपि कार्ये पुण्ये च पुण्यदाने च व्ययं कुरुते तथापि पुण्यं स्वाधीनं न स्यात् । ८. यतः पुण्यं अस्य स्वाधीनं यस्मात्[1] हठात् हृता आस्ते ॥ (५) ९. तथा अनेन प्रभूता लक्ष्मी या [ऽ] सदाचारिव्यवसायात् अर्जिता आस्ते समं कार्येण

॥ ११ ॥ १. MLHL$_3$ विसदृशा.

॥ ३ ॥ १. MLHL$_3$, K$_8$ ऽयंगमश्च. [ य for ज ].
॥ ४ ॥ १. MLHL$_3$ जस्मात् ( ज for य ).

पुण्येन आनन्देन च भक्षयति धारयति च सापि अस्मादुत्तमा न स्यात् । (६) १०. यतः सा अतिउत्तमतया युज्यते धर्तुं ॥ ११. विना अनेन [परंतु सः] यः प्रभूत-लक्ष्मीको मनुष्यो येन लक्ष्मीः सदाचारिव्यवसायादर्जिता आस्ते समं कार्येण पुण्येन आनन्देन च भक्षयति धारयति च सा च [लक्ष्मीः] महत्तरा उत्तमतरा अतः-परतरा[32] च ॥

(७) १२. तच्च यत् राज्यस्यार्थे ब्रुवंति । १३. किल ग्रामैकस्यापि सुराज्यं उत्तमं द्वीपैकस्यापि कुराज्यात् । १४. यतः स्रष्टा स्वामी महाज्ञानी रक्षाकारितायै सृष्टीनां सुराज्यं अददत् । १५. आहर्म्मनेन च दुर्गतिमता दुष्टराज्यं प्रतिघाताय सुराज्यस्य दत्तमास्ते ॥

(८) १६. सुराज्यं च तत् स्यात् यत् नगरं निवासि दुर्बलांश्च निरुपद्रवान् न्यायं आचारं च यत् सत्यं दधाति आदेशयति च । १७. न्यायं आचारं च यत् अव्यापारि [असद्व्यापारि] प्रतिस्खलयति । १८. उदकानि अग्नींश्च भव्येन शुद्धान् धारयति । १९. इजिश्नि च ईअजदानां कार्यं च पुण्यं च प्रवर्त्तमानतया दधाति । २०. दुर्बलेभ्यश्च साहाय्यमत्तां [साहाय्यवत्तां] याचकत्वं च कुरुते । २१. दीनेःउत्तमाया माज्दईअस्न्या हेतोः तनुः [तनुं] तच्च यत् [तं च यं] निजं जीवं अधिकं समर्पयति । (९) २२. यदि च अस्ति कश्चित् यो मार्गात् अहुरमज्दीयात् व्यस्त आस्ते तथापि तस्य संमार्जनां कर्त्तुं आदेशयति । २३. तं गृहीतारं [गृहीतं] च कुरुते पुनरपि मार्गे अहुरमज्दीये समानयति । २४. लक्ष्मीयाश्च या अस्य अस्ति विभागं ईअजदेभ्यो योग्यतरेभ्यश्च पुण्याय च दुर्बलेभ्यो विभजते । २५. तनुश्च [तनुंच] आत्मा ऽर्थे अधिकं समर्पयति ॥ (१०) २६. सुराजा यो ऽनेन प्रकारेण तुल्यः अहुरमज्देन अमिशास्पिंतैश्च उक्त आस्ते[33] ॥

(११) २७. दुष्टराज्यं च तद्भवति । २८. यत् न्यायं आचारं च यत् सत्यं सदाचारि विनाशयति ॥ २९. बलात्कारं अपहारं अन्यायं च अंतः कार्ये आनयति । ३०. शुभं यत् परलोकीयं विनाशयति । ३१. कार्यं पुण्यं च लोभे [लोभेन] पीडितं धत्ते ॥ ३२. पुण्यकारिणं च मनुष्यं पुण्यकर्म्मत्वात् अन्यथा दधाति । ३३. तथा तस्य हानिकर्त्ता च भवति ॥ (१२) ३४. अस्य समग्रापि उपार्जना देहाय निजाय । ३५. मंडनं च विभूतेः इहलोकीयायाः । ३६. पुष्टिः वर्णना च निकृष्टानां । ३७. विघातो निंदा च उत्तमानां । (१३) ३८. विलयश्च दुर्बलानां ॥ ३९. कुराजा य इत्येन प्रकारेण तुल्यः आहर्म्मनेन देवैश्च उक्त आस्ते ॥

---

## [ अथ पंचदशः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् इदं खाद्यं यन्मनुष्याः खादंति वस्त्रं च यन्मनुष्या प्रावृण्वंति किं मूल्यमत्तरं उत्तमं च ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् इदं खाद्यं यत् मनुष्याः खादंति क्षीरं च यत् अजामेषीगवां उत्तमं दत्तमास्ते ॥ (३) ५. यतो मनुष्या-

---

॥ ११ ॥ १. $K_8$ MLHL$_3$, लोभपीडितं.

---

॥ २ ॥ १. $K_8$ आजं.

चतुष्पदानि च यदि [ यदा ] मातृतो जायंते यावत् तत् यत् किंचित् खाद्यं शक्नुवंति खादितुं तावदमीषां समुत्सृतिः[34] प्रतिपालना च क्षीरात् । ६. तथा क्षीरेण च उत्तमं शक्नुवंति जीवितुं ॥ (४) ७. अन्यच्च यदि मनुष्यान् क्षीरात् मातुः अन्यथा कुर्वंति क्षीरस्य च अजामेषीगवां शिष्यां कारयंति[35] । ८. तथाप्येषां धान्यं अंतः कार्येण[1] [ कार्ये न ] युज्यते[36] ॥ ९. यतः प्रकटं । (५) १०. यत् मनुष्या ये अर्झहि सवहि फ्रदद्फ्सु विदद्फ्सु वोउरुवर्श्ति वोउरुजर्श्ति द्वीपेषु षट्सु संति तेषां खाद्यं क्षीरं यत् अजामेषीगवां च । ११. नान्यत् खाद्यं खादंति ॥ (६) १२. तथा अस्य च यः क्षीरखादनो मनुष्यः वपुः सुरूपतरं प्राणमत्तरं जननिश्च या जातकानां अकुष्टतरा [ अक्लिष्टतरा ] भवति ॥

(७) १३. धान्येभ्यश्च गोधूमो महान् उत्तमश्च उक्त आस्ते । १४. यतो गुरुर्धान्यानामस्ति । १५. तथा एताभ्यः अविस्तावाग्भ्यः अस्य नाम गुरुर्धान्यानामस्ति प्रकटं[37] ॥

(८) १६. अन्यत् फलेभ्यश्च खर्जूरो द्राक्षा च महान् उत्तमश्च उक्त आस्ते ॥

(९) १७. यदि च धान्यं न प्राप्तमास्ते फलेनापि द्रूनं[38] युज्यते एजितुं[39] । १८. फलं च यदि खर्जूरोऽथ द्राक्षा एजितं[40] समग्राण्यपि फलानि स्वामी[41] [ शक्यंते ] भक्षयितुं । १९. यदि च तत् न प्राप्तमस्ति तदा तदेव फलं युज्यते भक्षयितुं यत् एजितमस्ति ॥

(१०) २०. मद्यस्यार्थे च प्रकटं किल रत्नं [ शीलं ] यत् शुभं निकृष्टं मद्येन प्रकटतां शक्नोति आयातुं ॥ (११) २१. उत्तमता या मनुष्यस्य अंतः कोपे बुद्धिश्च या मनुष्यस्य अंतः असदाचारिणि कामे [ असदाचारिकामे ] प्रकटायते ॥ (१२) २२. यतो यं कोप उत्तापयति तस्य निजं वपुः संमार्जयितुं शक्नोति उत्तमता । २३. यं च काम उत्तापयति तस्य निजं वपुः संमार्जयितुं शक्नोति बुद्धिः । २४. यं च आसव उत्तापयति तस्य निजं वपुः संमार्जयितुं शक्नोति रत्नं [ शीलं ] । २५. परीक्षणेन न प्रयोजनं[42] ॥

(१३) २६. यतो ऽसौ यः शुभरत्नो [ शुभशीलो ] मनुष्यो यदि मद्यं भक्षयति एवं तुल्यो यथा पात्रं यत् सुवर्णमयं रौप्यमयं च यत् यावत् किंचित् अधिकं निमार्जते[1] पवित्रतरं निर्म्मलतरं च भवति । २७. [ स मनुष्यो मद्यं भक्षितोऽपि ] मनश्च वचश्च कर्म च सदाचारितरं दधाति । २८. अंतः कलत्रेषु जातकेषु च समस्तेषु सहायिषु [ साहाय्यिषु ] मित्रेषु च गौल्यतरः चोक्षतरश्च[2] [ चोपरतरश्च ][43] भवति ॥ २९. तथा समग्रेषु सत्कार्येषु पुण्येषु च व्यवसायितरो भवति ॥

(१४) ३०. असौ च यो निकृष्टरत्नो [ निकृष्टशीलो ] मनुष्यो यदि मद्यं भक्षयति निजं वपुः प्रमाणादधिकं मन्यते धारयति च । ३१. समं च समग्रैः सहायिभिः [ साहाय्यिभिः ] स्पर्द्धां करोति बलिष्ठतां च दर्शयति उपहास्यं अनुकरणं च कुरुते । ३२. उत्तमं च मनुष्यं हीनं विधत्ते । ३३. कलत्राणि जातकानि च दासान् कर्म्मकरीश्च [ कर्मकरांश्च ] यान् निजान् पीडयति । ३४. हर्षं च उत्तमानां विनाशयति । ३५. संप्रपत्तिं च विघटयति असंप्रपत्तिं च मध्ये समानयति ॥

---

॥ ४ ॥ १. MLHL$_3$, K$_8$ कार्यै न.

॥ १३ ॥ १. K$_3$ निमार्यते [ य for ज ]. २. All चोपतरश्च, but TD$_2$ चोपरश्च.

(१५-१६) ३६. सर्वैः कैरपि प्रमाणभक्षणाय मद्यस्य चैतन्यतरैर्युज्यते भवितुं ॥ ३७. यत् [यतः] प्रमाणभक्षणात् मद्यस्य इदं एतावत् शुभं संमुखं संप्राप्नोति। ३८. यत् आहारो जीर्यते। ३९. अग्निश्च उद्दीपयति। ४०. चैतन्यं स्मृतिश्च वीर्यं रक्तं च प्रवर्द्धयति। ४१. चिंता च प्रच्छाद्यते। ४२. वर्णश्च उज्ज्वलायते। ४३ किंचिच्च यत् विस्मृतिं [विस्मृतं] तस्य स्मृतिं करोति। ४४. उत्तमता च मनसि स्थानं गृह्णाति। ४५. आलोकश्च लोचनयोः श्रुतिश्च श्रवणयोः वक्तृता च जिह्वायां प्रवर्द्धयति। ४६. कार्यं च यत् कर्त्तुं प्रचारयितुं योग्यं प्रवर्त्तमानतरं भवति। ४७. शयनकाले च सुखेन स्वपिति लघुश्च उत्तिष्ठति। ४८. अस्य इति विभूतित्वात् श्लाघा तनोः पुण्यं चात्मनः मान्यता च उत्तमानां अधिकं प्रवर्द्धयति उपरि प्राप्नोति ॥

(१७) ४९. अन्यत् यो मद्यं प्रमाणादधिकं भक्षयति इदं एतावत् अशुभं तस्य प्रकटं भवति ॥ (१८) ५०. यतो बुद्धिश्चैतन्यं च स्मृतिश्च वीर्यं च रक्तं च क्षयति[1]। ५१. क्लेशं च अर्ज्जयति। ५२. वर्ण्णश्च व्यस्तयतिं। ५३[2]. प्राणः शक्तिश्च क्षयति। ५४. नमस्कृतेः स्तुतेश्च ईअज्दानां विस्मृतिं [°तिः] भवति। ५५. आलोकश्च लोचनयोः श्रुतिश्च श्रवणयोः वक्तृता च जिह्वायां किंचित्[44] [क्षीणा न्यूना] भवति। ५६. जलमूर्तिं वनस्पतिमूर्तिं च पीडयति। ५७. निद्रां च स्वेच्छया कुरुते। ५८. अस्य तच्च यत् वक्तुं कर्त्तुं योग्यं अकृतं तिष्ठति। ५९. दुष्टशयनेन स्वपिति असुखेन च उत्तिष्ठति। ६०. [अस्य] इति विभूतित्वात् निजं वपुः कलत्राणि जातकानि च मित्राणि च गोत्रिणश्च पीडिता विषादिताः[3]। ६१. बलात्कारिणो रिपवश्च सानन्दाः। ६२. ईअज्दाश्च नास्मिन् संतुष्टाः। ६३. तथा अस्य अश्लाघा तनौ दुर्गतिश्च आत्मनि संप्राप्नोति ॥

(१९) ६४. अन्यत् इदं प्रावरणं यन्मनुष्याः प्रावृण्वंति तनोः पट्टसूत्रं[45] आत्मने च कर्पाससूत्रं[1] उत्तमं ॥ (२०) ६५. इति हेतोर्यतः पट्टसूत्रं क्षुद्रजंतुभ्यः समुद्भवति। ६६. कर्प्पासस्य च पालना सलिलेन उद्गमश्च पृथिव्याः शुभाय च आत्मनां महान् उत्तमश्च मूल्यमत्तरश्च [मूल्यवत्तरश्च] उक्त आस्ते ॥

---

## [अथ षोडशः प्रश्नः]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् का सा सानंदता या विषाददपि निकृष्टतरा ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् या लक्ष्मीः पापादर्जिता आस्ते यद्यपि तया सानन्दो भवति तथापि सा सानन्दता विषाददपि निकृष्टतरा ॥

---

॥ १८ ॥ १. MLHL$_3$ K$_8$ क्षयति. २. MLHL$_3$ विसारको भवति—K$_8$ मूषको भवति. ३. K$_8$ विखादिताः [ख for ष].

॥ १९ ॥ १. MLHL$_3$, K$_8$ कपाससूत्रं

## [ अथ सप्तदशः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. किल किमर्थं मनुष्याः इदं चतुष्टयं किंचित् यत् चिह्नेन [चिंतने?] अधिकं युज्यते स्मर्तुं तद् इदं किंचित्तर-मेव[46] [न्यूनतरम् एव] स्मरंति । ३. परिभ्रमता या किंचनस्य इहलोकीयस्य मरणं च तनोः लेख्यकं[47] च आत्मनः भयं च नरकस्य ॥

(२) ४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ५. यत् वैकल्यात् लोभदेवस्य असंतोषस्यच ॥

---

## [ अथ अष्टादशः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् भयेन मिथ्योक्तया च जीवितं निकृष्टतरं किंवा मृत्युः ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् भयेन मिथ्योक्तया च जीवितं मरणादपि निकृष्टतरं । (३) ५. यतः सर्वस्य कस्यचित् जीवितं आनंदाय सुखाय च इहलोकीयाय रोचते । ६. यस्य आनंदः सुखं च इहलोकीयं नास्ति । भयं च मिथ्योक्तिश्च सहवर्तिनी [तस्य जीवनं] मृत्योरपि निकृष्टतर उक्त [निकृष्टतरं उक्तं] आस्ते ॥

---

## [ अथ नवदशः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् राज्ञां किंचित् किं लाभमत्तरं किं च हानिकारितरं ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् राज्ञां काचित् या अन्योन्यप्रश्नता समं ज्ञानिभिः उत्तमैश्च लाभमत्तरा ॥ ५. तेषां वाक् अन्योन्यप्रश्नता च या समं पिशुनैर्द्विजिह्वैः हानिकारितरा ॥

---

## [ अथ विंशतितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् इहलोकमण्डनस्य परलोकविनाशकस्य च मनुष्यस्य निर्वाणं किं ॥ (२) ३. अस्य च उपहास्यकृतो मनुष्यस्य निर्वाणं किं ॥ (३-४) ४. अस्य च असत्कार्यिणो मनुष्यस्य निर्वाणं किं ॥ ५. अस्य च द्वेषकृतो मनुष्यस्य निर्वाणं किं ॥ (५-६) ६. अस्य च अलसस्य मनुष्यस्य निर्वाणं किं ॥ ७. अस्य च मिथ्योक्तिमनसो मनुष्यस्य निर्वाणं किं ॥ (७) ८. अस्य च हीनमनसो मनुष्यस्य निर्वाणं किं ॥

(८) ९. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । १०. यत् असौ य इहलोक-मण्डनः परलोकविनाशको मनुष्यः अंतर्निग्रहे त्रिरात्रीये[48] एवं परिक्षीयते यथा वह्निर्यो ज्योतिष्मान् यस्य सलिलं उपरि प्राप्नोति ॥

(९) ११. अस्य च उपहास्यकृतो मनुष्यस्य तनौ आत्मनि च श्री र्न स्यात् । १२. सर्ववारं यदि मुखं प्रसारयति तदा अस्य दुर्गतिरेव प्रवर्द्धते ॥ (१०) १३. अस्य च सर्वा अपि देव्यः वपुषि एवं अभ्यागता भवंति यथा कांचित् उत्तमतां तनौ न त्यजंति । १४. उत्तमानां च अनुकृतिं निकृष्टानां च स्तुतिं करोति ॥ (११) १५.

अस्य च इहलोके वपुः अश्लाघ्यं परलोके च आत्मा दुर्गतिमान् भवति ॥ (१२) १६. एनं च अंतर्नरके निग्रहं करणाय देवी च या उपहास्यकरी[1] नाम्नी तस्याः समर्पयंति। १७. इयं च देवी सर्वानपि निग्रहान् उपहास्यतया अनुकरणतया च तस्य विदधाति ॥

(१३) १८. अस्य च असत्कार्यिणो मनुष्यस्य ऋते[49] च दुर्गतित्वात् बहवोऽपि यदि [यदा] इहलोके विघातो [विघाता] मृत्युश्च उपरि प्राप्नोति। तस्य तस्मात् द्वितीयं[50] सुखं जायते ॥

(१४). १९. अस्य च द्वेषकृतो मनुष्यस्य सेतौ[51] आत्मना [आत्मनि] भारितरं [निग्रहं कुर्वंति] अपरेभ्यो दुर्गतिमद्भ्योऽपि यान् नरकलोकेन[1] [°लोके] (१५) २०. इति हेतोर्यतः द्वेषो वंशे प्रवर्त्तयति। २१. तथा सर्वाण्यपि पापानि सम्मार्जयितुं साधु शक्यते विना[52] द्वेषेण ॥ (१६) २२. यतः द्वेषो वंशे संतिष्ठति। २३. अस्ति च यत् यावत् सओशिओसं[53] प्रवर्त्तयति ॥

(१७) २४. यत् अस्या निर्मलाया दीनेः सुव्यक्तं प्रकटं। २५. यत् अनादेशाचरता या रूमीनां तुरुक्वाणां[1] [तुरुष्काणां] च सैमं परानिकं मूले तस्मात् द्वेषात् संभूता येषां यो [द्वेषो] वधेन एरजस्य फ्रेदूनपुत्रस्य संजातः। २६. यावच्च सओशिओसं सर्वदा प्रवर्त्तयति ॥

(१८-१९) २७. असौ च योऽलसो मनुष्यः अयोग्यतरो मनुष्येषु उक्त आस्ते॥१८. यतः अस्या दीनेः प्रकटं। २९ यत् स्रष्टा स्वामी महाज्ञानी असौ आलस्यकृते मनुष्याय धान्यानि नासृजत् ॥ (२०) ३०. असौ च आलस्यकृते मनुष्याय किंचिदपि जीवनदानं पुण्यदानं च नो देयं ॥ (२१) ३१. असौ आश्रमस्थानानि प्रतिकृतयश्च नो विधेयाः ॥ ३२. इतिहेतो र्यतस्तत् खाद्यं यत् मनुष्यो योऽलसः खादति अव्यापारात् अन्यायाच्च खादति ॥ (२२) ३३. अस्य अलसत्वात् अन्यायखादनत्वाच्च वपुः अश्लाघ्यं आत्मा च दुर्गतिमान् भवति ॥

(२३) ३४. असौ च यो मिथ्योक्तिमनो [°मनाः] मनुष्यः उत्तमैरपि एवं भ्रांतिकृत् यथा निकृष्टैः। ३५. शुभेन च इहलोकीयेन परलोकीयेन इजिश्न्या आव्हानतया च पूजया च इअजदानां भ्रांतिमान् ॥ (२४) ३६. अस्य इति विभूतित्वात् इअजदा अमिशास्पिंताश्च इजिश्नि आव्हानतां च यां कुरुते किंचित्[54] प्रतिकुर्वंति। ३७. अभिलषितं च यत् याचते किंचित्[55] ददति। ३८. मुखैश्च उत्तमानां सर्ववारं अश्लाघ्यः। ३९. अस्य आत्मा च दुर्गतिमान् भवति ॥

(२५) ४०. अस्य च हीनमनसो मनुष्यस्य मित्राः स्तोका रिपवश्च बहवः। ४१. दानं च यत् केभ्यश्चित् दत्ते इजिश्नि च यां इअजदेभ्यः कुरुते हीनमानसत्वात् किंचित्[56] प्रतिकुर्वंति। (२६) ४२. अभिलषितं च यत् याचते किंचित्[57] ददति ॥ ४३. ॥ अस्य आत्मानं अंतर्नरके निग्रहं करणाय देवी या हीनमानसी नाम्नी तस्याः समर्पयंति। ४४. देवी च या हीनमानसीनाम्नी नवं नवं निग्रहं तस्य कुरुते न च सुखयति ॥

---

॥ १२ ॥ १. MLHL$_3$, K$_3$. उपहास्यकरा.
॥ १४ ॥ १. W. नारकीयते लोकेन. MLHL$_3$ यान् नरकलोके.
॥ १७ ॥ १. MLHL$_3$, K$_3$. तुरुष्काणां.

## [ अथ एकविंशतितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् अध्यवसायेन विभूति [ °तिं ] र्लक्ष्मीश्च [ लक्ष्मीं च ] या इहलोकीया हस्ते शक्यते कर्त्तुं किंवा नहि ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् अध्यवसायेन तत् शुभं यत् न निर्मितमास्ते स्वीयं कर्त्तुं न शक्यते । ५. तच्च यत् विनिर्मितमास्ते अध्यवसायेन शीघ्रं संप्राप्नोति ॥

(३) ६. अध्यवसायश्च[1] यदि इअजदा नो सहवर्त्तिनः इहलोके निःफलं [°फलः] तथापि परलोकीये साहाय्ये संप्राप्नोति त्राजके[58] च प्रवर्द्धते ॥

---

## [ अथ द्वाविंशतितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् बुद्ध्या ज्ञानितया च समं भाग्येन योद्धुं शक्यते किंवा नहि ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् ॥ ४. यत् सहवर्त्तिन्यापि दृढतया प्रमाणमत्तया बुद्धेर्ज्ञानस्य च तथापि समं भाग्येन योद्धुं न शक्यते ॥

(३) ५. यतो यदि निर्मितं शुभेन अथ [ वा ] अशुभेन संप्राप्नोति ज्ञानी कार्ये विकलो भवति दुष्टज्ञानी च कार्यज्ञाता भवति । ६. दुश्चेतनश्च चैतन्यतरो [ सचैतन्यो ] भवति चैतन्यतरश्च [चैतन्यितरश्च] दुश्चेतनो भवति । ७. अध्यवसायी च अलसो भवति अलसश्च अध्यवसायी भवति ॥ (४) ८. एवं यथा [ यदि ] तत् किंचित् यत् विनिर्मितमास्ते कारणं तस्य मध्ये समायाति । ९. अपरं सर्वं किंचित् प्रच्छाद्यते ॥

---

## [ अथ त्रयोविंशतितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् अभीष्टयाचनायै [च] पुण्यकारितायै [ च ] योग्यतायै च इअजदा मनुष्याणां द्वितीयं किंचित् विभजंते किंवा नहि ॥

(२-३) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् विभजंते ॥ ५. यत एवं यथा ब्रुवंति यत् "भाग्यं पुनर्भाग्यं च" ॥ (४) ६. भाग्यं च तद् भवति यत् प्रथमत एव विभक्तमास्ते । ७. पुनर्भाग्यं च तत् यत् द्वितीयमपि विभजंते ॥ (५) ८. इअजदाश्च तां विभजनां इति हेतोः किंचित्तरां[59] कुर्वंति परलोके च किंचित्तरां[60] प्रकाशयंति यत् आहर्मनो दुर्गतिमान् [......] बलेन सप्तग्रहाणां लक्ष्मीं अपरं च सर्वं शुभं यत् इहलोकीयं उत्तमेभ्यो योग्यतरेभ्यश्च बलादपहरति निकृष्टेभ्योऽयोग्यतरेभ्यश्च अधिकतरं ददाति ॥

---

## [अथ चतुर्विंशतितमः प्रश्नः]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् शक्तिमत्सु को दुर्बलतरः दुर्बलतरेषु कः शक्तिमत्तरः ॥

---

॥ ३ ॥ १. MLHL$_8$ अध्यवसायस्य.

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् शक्तिमत्सु असौ दुर्बलतरः यस्तेन यदस्य अस्ति न संतुष्टः । ५. अधिकसंभूतये च कीदृशस्य चित् चिंतां कुरुते ॥

(३) ६. दुर्बलतरेषु च असौ शक्तिमत्तरः यस्तेन यत् प्राप्तमस्ति संतुष्टः । ७. अधिकसंभूतये च कीदृशस्य चित् चिंतां न कुरुते ॥

---

## [ अथ पंचविंशतितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् अंधलोचनो निकृष्टतरः किंवा अंधचेतनः[1] ॥ (२) ३. दुष्टज्ञानी निकृष्टतरः किंवा दुष्टशीलः ॥

(३) ४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ५. यत् असौ यः अंधलोचनो यदि ज्ञानिता किंचिदस्ति शिष्यां च कुरुते स सुंदरलोचनो ज्ञेयः ॥ (४) ६. अस्य च यः सुंदरलोचनो यदि ज्ञानिता कीदृशस्य चित् नास्ति तथा तच्च यदस्य शिष्यापर्यंति न प्रतिकुरुते तदा स अंधलोचनादपि निकृष्टतरः ॥

(५-६) ७. दुष्टशीलश्च उत्तमतरो दुष्टज्ञानिनः ॥ ८. यतो दुष्टशीलो विना न्यायेन कस्मादपि किंचित् हठात् हर्तुं न शक्नोति । ९. दुष्टज्ञानी च मनुष्यः सर्वेषु स्वेच्छया बलात्कारी अपहारी च । ( १० .. .. .. )[1] ॥

---

## [ अथ षड्विंशतितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् किमर्थं मनुष्या ये गईउमर्दात् ते च ये हउशिअंघात् राज्ञः [61]प्राक्सृष्टात्[1] स्वामिभ्यो राजभ्यश्च यावत् गुश्तास्पं राज्ञां राजानं ईदृशाः कामकारिणः संभूता अभविष्यन् [ अभवन् ] । ३. ते च अहुर्मज्दात् शुभं प्रभूतं अलभंत ॥ (२) ४. बहवश्च ते येऽन्तः इअजदेषु न त्रिधाप्रहरकिणः संजाता अभविष्यन् [ अभवन् ] । ५. अस्ति च यत् केचित् अतीव अत्रिधाप्रहरकिणः मित्रद्रोहिणः पापकर्मिनश्च [ °र्मिणश्च ] संभूता अभविष्यत् [ अभवन् ] ॥ (३) ६. अथ ते प्रत्येकं कस्मै शुभाय दत्ता आसिष्यन् [ आसन् ] । ७. तेभ्यः फलं लाभश्च कः प्रवर्त्तितः ॥

(४) ८. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ९. किल तत् यत् अमीषां शुभं अथ अशुभं पृच्छसि सुप्रबुद्धो भव अधिकं च जानीहि ॥ (५) १०. यतः कार्यं पृथिव्याः सर्वेषु भाग्येन समयेन न्यायेन च छिन्नं प्रचरति । यः स्वयं अस्ति समयो राजा दीर्घस्वामी ॥ (६) ११. यथा अंतर्युगे युगे सर्वस्मै कस्मैचिद् विभक्तमास्ते यथा [ तथा ]

---

॥ १ ॥ १. Some MSS. अंधहृदय ( Pâzend " Kor-dil " ) $MLHL_3$ अंधलोचनहृदयः

॥ ५-६ ॥ १. Omitted in all MSS.

॥ १ ॥ १. $MLHL_8$ $K_8$ प्राक्सृष्टेः

तत् यत् योग्यं प्राप्तं उपरि प्राप्नोति ॥ (७) १२. यथा एतेषु समस्तेषु आम्नायेषु तेषां पूर्वपुरुषाणां ये परोक्षीभूताः प्रकटः । १३. निर्वाणे तत् शुभं यत् तेभ्यः सृष्टिषु स्वामिनो महाज्ञानिनः प्राप्तुं योग्यं संप्राप्तं च ॥

(८) १४. यतः गइउमर्दात् लाभः अयं संभूतः । १५. यत् प्रथमं व्यापादनं आज्जुरस्य[62] समर्प्पणाकरणं च निजतनोर्महालाभतायै आहर्मनस्य ॥ (९) १६. द्वितीयश्च लाभः अयं संभूतः । १७. यत् मनुष्याः समग्राश्च वृद्धयो[63] या वृद्धिकर्मताकरिणां मुक्तात्मनां नराणां नारीणां शरीरादस्य सृष्टाः ॥ (१०) १८. तृतीयश्च अयं लाभः यत् सप्तधातवश्च शरीरादस्य निर्मिताः ॥

(११) १९. हउशिअंगाच्च राज्ञः पूर्वोचारकृतः लाभः अयं संभूतः । २०. यत् त्रिविभाग्येभ्यो देवानां माजंदरदेशिनां भूसंभूतिविनाशकृतां विभागद्वयं निजघान[64] ॥

(१२) २१. तह्मूरफाच्च राज्ञः शुभोदितात् लाभः अयं संभूतः । २२. यत् निकृष्टं गनायं[65] दुर्गतिमंतं त्रिंशत् वर्षाणि वाहनं अकरोत्[66] ॥ २३. सप्तप्रकाराश्च अक्षराणां सिद्धयः या अनेन दुर्गतिमता निखातीकृताः प्रकटतायां समानयत्[67] ॥

(१३) २४. शुभचयिनश्च यमात् राज्ञो दीप्तिमयात् वीवंघानस्य पुत्रात् लाभः अयं संभूतः । २५. यत् षट् वर्षशतानि षण्मासान् षोडश दिवसान् अमृत्युमत्तां समग्रायै सृष्टयै दातये च स्रष्टुः स्वामिनो महाज्ञानिनः अघटयत् ॥ (१४) २६. अक्लेशिनी च अजरामती च अप्रतिविघाता च कृता आसिष्यन् [ आसीत् ] ॥ २७. द्वितीयश्च अयं लाभः यत् गुफां च यां यमकृतां नाम्नीमकरोत् । २८. यतो यदि [ यदा ] सा वृष्टिर्या मरकोशराक्षसीया भविष्यति यथा दीनौ प्रकटं यत् मनुष्यं अपरा च सृष्टिर्दातिश्च या अहुमज्दस्य स्वामिनः प्रभूता [ °ताः ] प्रलयिष्यति । २९. पश्चात् तस्या गुफाया यमकृताया द्वारं समुद्घाटयंति[1] । ३०. मनुष्याणि [ मनुष्याः ] चतुष्पदानि अपरा च सृष्टिर्दातिश्च या स्रष्टुः स्वामिनो महाज्ञानिनः तस्या गुफायाः समायांति । ३१. भूसंभूतिं च पुनरपि सम्मार्जयंति [ संमार्जयिष्यंति ] ॥ (१५) ३२. तृतीयश्च अयं लाभः । ३३. यत् प्रमाणं यत् पृथ्वीभुवां अनेन दुष्टदातिना दुर्गतिमता आहर्मनेन गिलितमासीत् असौ च अस्योदरात् व्यावृत्य[1] समानयत् ॥ ( ... ... ... ... ... ... ... ... )

(१७) ३४. अहेर्दहाकात् वएवरास्पात् राज्ञो निकृष्टाच्च फ्रासिआकात् तुरष्कात् राज्ञः लाभः अयं संभूतः । ३५. यत् यदि स्वामिता बएवरास्पे राज्ञि फ्रासिआके च राज्ञि न प्राप्ता आसिष्यत् तदा निकृष्टेन आहर्मनेन सा स्वामिता कोपदेवाय दत्ता आसिष्यत् । ३६. यदि च कोपदेवे संप्राप्ता आसिष्यत् यावत् शबोत्थानं तनोः अक्षयत्वं[68] नाशकिष्यत् एतस्मादपहर्तुं । ३७. इति हेतो र्यतस्तस्यतनुमत्ता नास्ति ॥

(१८) ३८. फ्रेदूनाच्च राज्ञः लाभः अयं संभूतः । ३९. यथा हननं बंधनं च अहेर्दहाकस्य वएवरास्पस्य यः ईदृशो महापापी ॥ (१९) ४०. अनेन अन्याश्च बहवो माजंदरदेशीया देवा हताः जंबुद्वीपाच्च[69] दूरीकृताः ॥

---

॥ १४ ॥ १. W. समुद्घाटयंति.

॥ १५ ॥ १ $K_3$ व्याघुष्य.

(२०) ४१. मनोश्चिहराच्च राज्ञः लाभः अयं संभूतः। ४२. यत् सल्मः थोजश्च[70] यौ अस्य पितृभ्रातरौ अभूतां द्वेषेण एरजस्य निहतौ। ४३. एतयोः प्रतिघातश्च यः पृथिव्यां अन्यथा कृतः। ४४. तथा पदसघुआरगरदेशात् [ पदषखुआरगर° ] यावत् मूलं नरकस्य यथा प्रमाणं फ्रासिआकेन राज्ञा कृतमासीत् फ्रासिआकात् व्याघुट्यं [ व्याधृत्य ] हठात् हृतं स्वाधीनतायां च परांन्नगरस्य समानीतं ॥ ( ... ... ... ... ... )

(२१) ४५. कइकवादाच्च राज्ञः लाभः अयं संभूतः। ४६. यत् अंतः इअजदेषु त्रिधाप्रहरककारी बभूव ॥ (२२) ४७. स च स्वामित्वं शुद्धं चकार। ४८. तथा आम्नायो बीजं च यत् राज्ञां एतस्मात् पुनरपि प्राचरत् ॥

(२३) ४९. सामाच्च [ सामस्य वंशे जातात् ] करेसास्पात् राज्ञः लाभः अयं संभूतः। ५०. यत् सर्पं च यं श्रुवरनामानं व्याघ्रं च यं कपूतनामानं यं च पेहिनमिति आकारयंति देवं च यं पयसि चारिणं गंदर्प्पि [ गंधर्वं ] पक्षिणं च यं कमकूनामानं देवं च यं वैकल्यरूपं निजघान। ५१. अन्यानि च बहूनि कार्याणि च महांति मूल्यमत्तराणि अकरोत् ॥ ५२. बहूंश्च प्रतिघातान् अस्या भूसंभूतेः अन्यथा व्यदधात्। ५३. यदि च प्रचुरेभ्यः एतेभ्यः प्रतिघातेभ्यः एकोऽपि व्याघुट्यं स्थितः आसिष्यत् शबोत्थानं तनोः अक्षयत्वं च कर्त्तुं नाशकिष्यत् ॥

(२४) ५४. कहोसाच्च राज्ञः लाभः अयं संभूतः। ५५. यथा राजा सिआवक्षः शरीरादस्य सृष्टः। ५६. अन्याश्च बहवः सत्कर्मप्रवाहा एतस्मात् प्रचरिताः ॥

(२५) ५७. सिआवक्षाच्च राज्ञः लाभः अयं संभूतः। ५८. यथा जननिः कइखुस्रवस्य [कएखुस्रवस्य] राज्ञः करणं च कंदिजप्रासादस्य ॥

(२६) ५९. कइखुस्रवाच्च [ कएखुस्रवाच्च ] राज्ञः लाभः अयं संभूतः। ६०. यथा व्यापादनं फ्रासिआकस्य। ६१. उत्खननं च प्रतिमाप्रासादस्य यत् चयचिस्तगुफायां। ६२. संमार्ज्जनं च कंदिजप्रासादस्य। ६३. तथा शबसंमार्ज्जयिता सउशिउसः विजयकारी शबोत्थानं तनोः अक्षयत्वं च साहाय्येन अस्य साधु शक्नोति कर्त्तुं ॥

(२७) ६४. राज्ञो लहुरास्पाच्च लाभः अयं संभूतः। ६५. यत् स्वामित्वं शुद्धं चकार। ६६. अंतः इअजदेषु च त्रिधाप्रहरककारी बभूव। ( ............ ) ६७. दीनेः प्रतिकर्त्ता च राजा गुश्तास्पः शरीरादस्य सृष्टः ॥

(२८) ६८. गुश्तास्पाच्च राज्ञः लाभः अयं संभूतः। ६९. यथा प्रतिकरणं यजनं च दीनेः उत्तमाया माज्दइअस्न्याः। ७०. विभंजना [ विभंजनया ] च केवलं अहुनवरवाचः स्रष्टुः स्वामिनोः महाज्ञानिनः ७१. विनाशनं भंजनं च कलेवरस्य देवानां देवीनां च। ७२. आनंदः समाधानं च अपां अग्नीनां सर्वेषां च इअजदानां परलोकीयानां इहलोकीयानां च। ७३. संपूर्ण्णा आशा उत्तमानां योग्यतराणां च। ७४. स यः सदाचारी कामः [ सदाचारिकामः ] तत्र यत्र स्वीया रुचिः। ७५. मान्यता च प्रमोदकारिता च अहुरमज्दस्य समं अमिशास्पितैः। ७६. पीडा विघातश्च आहर्मनस्य अस्य दुष्टसृष्टीनां च[71] ॥

---

॥ २० ॥ १. W. व्यावृत्य.
॥ २३ ॥ १. W. व्यावृत्य.

## [ अथ सप्तविंशतितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् कः सहिष्णुतरः । ३. को बलवत्तरः । ४. कः शीघ्रतरः । ५. कः सानंदतरः । ६. को विषादितरः कोऽनाशातरः [ अनाशतरः ] ॥

(२) ७. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ८. यत् अहुरमज्दः स्वामी सहिष्णुतरः । ९. यो नववर्षसहस्राणि अन्यायं सृष्टिषु स्वीयासु आहर्म्मनात् अवलोकयति तथापि विना न्यायेन सहिष्णुतया च अन्यथा नो निहंति ॥

(३-५) १०. चक्रं[72] च बलवत्तरं ॥ ११. मनश्च मनुष्याणां शीघ्रतरं ॥ १२. आत्मा च मुक्तात्मनां सानंदतरः ॥ (६) १३. स यो दुर्गतिमतां [ आत्मा ] विषादितरः अनाशातरश्च [ अनाशतरश्च ] ॥

## [अथ अष्टाविंशतितमः प्रश्नः]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् किं निरीक्षिततरं रक्षिततरं च युज्यते धर्त्तुं[1] ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युतरमकरोत् । ४. यत् डिंभं यं असंपूर्णतरं नारीं च चतुष्पदं च अग्निं च रक्षिततरं निरीक्षिततरं च युज्यते[1] धर्त्तुं ॥

## [ अथ नवविंशतितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् जीवितं कस्य निकृष्टतरं । ३. बुद्धिश्च कस्य अप्रतिकरणीयतरा ॥

(२) ४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ५. यत् जीवितं अस्य निकृष्टतरं यो भयेन मिथ्योक्त्या च जीवति ॥ (३) ६. बुद्धिश्च अस्य अप्रतिकरणीयतरा यः परलोकं न प्रबुध्यति इहलोकं च मण्डयति ॥

## [ अथ त्रिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् आचार्याणां क्षत्रियाणां कुटुंबिकानां[1] च प्रत्येकं सत्कार्यता का ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् आचार्याणां सत्कार्यता दीनेः शुद्धं धारणं । ५. इजिश्नेः आह्वानतायाश्च[2] इअजदानां शुद्धं ज्ञात्वा च करणं । ६. विचारस्य न्यायस्य आचारस्य च यथा निर्म्मलाया उत्तमदीनेर्म्माज्दइअस्न्याः प्रकटं सत्यं धारणं । ७. मनुष्याणां च पुण्यस्य पापस्य प्रबोधनं । ८. मार्गस्य च स्वर्गलोकीयस्य भयस्य प्रतिविघातस्य[3] च नरकलोकीयस्य दर्शनं ॥

---

॥ १ ॥ १. W. सहितरः

॥ २ ॥ १. MLHL$_3$ जुद्यते for युज्यते.

॥ ३ ॥ १. K$_8$ MLHL$_3$ कुटंबिकानां २. ALL आह्वाननायाश्च. ३. K$_8$ प्रतिविधानस्य.

(३) ९. क्षत्रियाणां च सत्कार्यता विरोधिनां व्यापादनं। १०. नगरस्य सीमायाश्च स्वीयाया निर्भयं समाधानतया धारणं ॥

(४) ११. कुटुंबिकानां च सत्कार्यता कृषेर्निवासतायाश्च करणं। १२. शक्त्यनुरूपतया च गोविभूतेः पोषणं निवासीकरणं च ॥

## [ अथ एकत्रिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं ॥ २. यत् सुव्यवसायिनां विद्यावतां सत्कार्यता का ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् विद्यावतां सत्कार्यता इयं। ५. यत् तस्य कार्यस्य यत् न जानंति हस्तं संमुखं न प्रसारयंति। (३) ६. तच्च यत् जानंति शुद्धं[१] ज्ञात्वा च कुर्वंति। ७. भाटकं[73] च आचारतया याचंते ॥ ८. यतोयः तत् यत् न जानाति कर्तुं प्रकुरुते अस्ति च यत् तत् कार्यं विनष्टं अनुपकारि च भवति। ततो यद्यपि प्रचुरतया एनं मनुष्यं यं कार्यं स्वीयं संतुष्टं कुरुते तथापि तत्पापं अस्य मूले भवति ॥

## [ अथ द्वात्रिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् राजा को निकृष्टतरः। ३. अधिपतिश्च को निकृष्टतरः। ४. मित्रश्च को निकृष्टतरं। ५. गोत्री च को निकृष्टतरः। ६. भार्या च का निकृष्टतरा। ७. पुत्रश्च को निकृष्टतरः। ८. नगरं च किं निकृष्टतरं ॥

(२) ९. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। १०. यत् राजा स निकृष्टतरः यो नगरं निर्भयं मनुष्यांश्च निरुपद्रवान् कर्तुं न शक्नोति ॥ (३) ११. अधिपतिश्च स निकृष्टतरः यस्य गुणो निकृष्टः अंतश्च कृतकार्याणां अत्रिधाप्रहरकी अनुजीविनां च नो सहायी न च याचनाकरः ॥ (४–५) १२. मित्रश्च तत् निकृष्टतरं यस्मिन् विश्वासिंको[१] भवितुं न शक्यते ॥ १३. गोत्री च स निकृष्टतरं यः संदेहे न सहायी ॥ (६) १४. भार्या च सा निकृष्टतरा यया समं सानंदं जीवितुं न शक्यते ॥ (७–८) १५. पुत्रश्च स निकृष्टतरः यो न नामकीर्तिकः ॥ १६. नगरं च तत् निकृष्टतरं यत्र शुभस्य निर्भयत्वस्य समयस्य च मध्ये जीवितुं न शक्यते ॥

## [ अथ त्रयस्त्रिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं ॥ २. यत् स्रष्टा स्वामी महाज्ञानी कांचित् तां दातिं अददत् यत्र आहर्मनः प्रतिघातं संमुखं क्षिप्तुं न शक्नोति ॥

---

॥ ३ ॥ १. W. सत्त्वं $K_8$ नसक्तं (?) $MLHL_3$ सक्तं (?).

॥ ४–५ ॥ १. $K_8$ विश्वासिकैः

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्।४. यत् एतस्मिन् बुद्धिमति संतोषमति मनुष्ये प्रतिघातं क्षिप्तुं किंचित्[74] शक्यते ॥

## [ अथ चतुस्त्रिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धि ॥ २. यत् कियंतस्ते मनुष्या ये शक्तिमंतः कियंतश्च ते ये दुर्बलतमा ज्ञातुं योग्याः ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् एते एतावंतो मनुष्याः शक्तिमंतो ज्ञातुं योग्याः। ५. एकः असौ यो बुद्ध्या संपूर्णः। ६. द्वितीयश्च यस्य वपुः आरोग्यं निर्भयतया च जीवति। ७. तृतीयश्च यस्तेन यत् प्राप्तमस्ति संतुष्टः। ८. चतुर्थश्च असौ यस्य भाग्यं सुव्यापारे सहायी। ९. पंचमश्च यो लोचनैः इअजदानां जिह्वाभिश्च उत्तमानां सुश्लाघ्यः। १०. षष्ठश्च यस्य प्रबोध उपरि अस्यां एकस्यां निर्मलायां उत्तमदीनौ माज्दइअस्न्यां। ११. सप्तमश्च यस्य शक्तिकारिता सद्व्यापारात् ॥

(३) १२. एते एतावंतो मनुष्या दुर्बलतमाः परिज्ञेयाः। १३. एकः स यस्य बुद्धिर्नास्ति। १४. द्वितीयश्च यस्य वपुः अनारोग्यं। १५. तृतीयश्च यो भयेन मिथ्योक्त्या च जीवति। १६. चतुर्थश्च यः स्वीये वपुषि न स्वामी। १७. पंचमश्च यस्य भाग्यं न सहायि। १८. षष्ठश्च यो लोचनैः इअजदानां जिह्वाभिश्च उत्तमानां अश्लाघ्यः। १९. सप्तमश्च यो वृद्धः पुत्रो वंशश्च नहि ॥

## [ अथ पंचत्रिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिः। २. यत् पापं किं भारितरं ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्।४. यत् पापेभ्यो यानि मनु[illegible] कुर्वंति अपानमैथुनं भारितरं ॥ (३) ५. द्वितीयं च यत् मुखमैथुनं वीर्यपानं[75] च [मुष्टिमैथुनवीर्यपातनं]॥ (४) ६. तृतीयं च यो मनुष्यं मुक्तात्मानं निहंति ॥ (५) ७. चतुर्थं च यः ख़ुअएतुअदथं[76] [ ख़ुअए° ] विनाशयति॥ (६) ८. पंचमं च यः स्तरप्रवृत्तिकारितां भनक्ति[77] ( किल कश्चित् अपत्यहीनः स्वर्गी भवति तस्य द्रव्येण तन्नामकीर्त्तनाय तद्वंशवृद्धये च कमपि पुरुषं प्रतिष्ठीयते तच्च भनक्ति ) ॥ (७) ९. षष्ठं च यः अग्निं बहरामं निहंति ॥ (८) १०. सप्तमं च यो जलसूसुआरं[77a] निहंति ॥ (९) ११. अष्टमं च यः प्रतिमां पूजयति ॥ (१०) १२. नवमं च यः समग्राणि दर्शनानि प्रतिबुध्यति अर्चयितुं च ईहते ॥ (११) १३. दशमं च यः किंचित् कस्यचित् रक्षाकारितायै प्रतिकृतं भक्षति अवलुप्ता च भवति ॥ (१२) १४. एकादशमं च [illegible] पापकारितायै पक्षं अनृतस्य कुरुते ॥ (१३) १५. द्वादशमं च यः कार्यं न कुरुते अत्रिधाप्रहरकतयां अनाचारतया च खादति ॥ (१४) १६. त्रयोदशमं च यो जन्दीकदर्शनतां[78] कुरुते। ( किल आहर्मनात् देवेभ्यश्च शुभं मन्यते ) ॥ (१५) १७. चतुर्दशमं च यो राक्षसीविद्यां कुरुते ॥ (१६) १८. पंचदशमं च यो आस्रोई[79] कुरुते । ( किल अविस्ताऽर्थं सम्यक् ज्ञात्वा छद्मी भवति ) ॥ (१७) षोडशमं च यो देवाराधनां कुरुते ॥ (१८) २०. सप्तदशमं

॥ ३ ॥ १. W. मुषमैथुनं [मुष्कमैथुनं] वीर्यपातनं च. ॥ १३ ॥ १. $K_8$ अत्रिप्रहरकतया.

च यः चोरतां अथ [वा] चौरितं हस्ते करोति ॥ (१९) २१. अष्टादशमं च यो मित्रद्रोहं करोति ॥ (२०) २२. एकोनविंशतितमं च यो द्वेषं कुरुते ॥ (२१) २३. विंशतितमं च यः किंचित् केषांचित् स्त्रीयं कर्त्तुं बलात्कारं कुरुते ॥ (२२) २४. एकविंशतितमं च यः पुरुषं मुक्तात्मानं पीडयति ॥ (२३) २५. द्वाविंशतितमं च यः पैशुन्यं कुरुते ॥ (२४) २६. त्रयोविंशतितमं च यो हीनमानसतां कुरुते ॥ (२५) २७. चतुर्विंशतितमं च यो नारीं केषांचित् प्रयाति ॥ (२६) २८. पंचविंशतितमं च यो न त्रिधाप्रहरकतां करोति ॥ (२७) २९. षड्विंशतितमं च यः असत्यं अनास्तिकं च जल्पति ॥ (२८) ३०. सप्तविंशतितमं च यः तस्मात् यत् वेचितं [व्यतीतं?] विगतं[80] किंचित् असंतुष्टिं कुरुते ॥ (२९) ३१. अष्टाविंशतितमं च यः सानंदः पीडनात् उत्तमानां ॥ (३०) ३२. एकोनत्रिंशत्तमं च यः पापं प्रवृत्त्या पुण्यं च दिनस्खलनतया दधाति[81] ॥ (३१) ३३. त्रिंशत्तमं च यस्तेन शुभेन यत् कस्मिंश्चित् कृतं अनुतापी भवति ॥

---

## [ अथ षट्त्रिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यन्मनुष्याः कतिभिर्मार्गैः हेतुभिश्च पुण्यस्य स्वर्गलोकं अधिकं प्रयांति ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् प्रथमं पुण्यं दक्षिणा ॥ (३) ५. द्वितीयं च सत्यता ॥ (४) ६. तृतीयं च त्रिधाप्रहरककारिता ॥ (५) ७. चतुर्थं च संतुष्टिः ॥ (६) ८. पंचमं च शुभस्य करणं [ करणाय ] वांच्छा च उत्तमेषु मित्रीभवनं च सर्वेषु केषुचित् ॥ (७) ९. षष्ठं च अनेन सुनिश्चिती भवनं यत् आकाशं पृथ्वीं सर्वं च शुभं यत् इहलोकीयं परलोकीयं स्रष्टुः अहुरमज्दात् ॥ (८) १०. सप्तमं च सुनिश्चयता या अनेन यत् सर्वेऽपि अन्यायाः प्रतिघाताश्च आहर्मनात् दुर्गतिमतो निकृष्टात् ॥ (९) ११. अष्टमं च सुनिश्चयता या शबोत्थाने च तनोश्च अक्षयतायां ॥ (१०) १२. नवमं च यः आत्मनो वाल्लभ्याय पुअएतुअदथं[82] [ खुअएतुअदथं ] समाचरति ॥ (११) १३. दशमं च यः स्तरीं[83] प्रचारयति । ( किल कश्चित् अपत्यहीनः स्वर्गी भवति तस्य द्रव्येण तन्नामकीर्तनाय तद् वंशवृद्धये कमपि पुरुषं प्रतिष्ठीयते अथ एवं आत्मार्थे च पुण्यवृद्धये ) ॥ (१२) १४. एकादशमं च यः सदाचारिणं व्यवसायं कुरुते ॥ (१३) १५. द्वादशमं च यः अस्यां निर्मलायां उत्तमदीनौ माज्दईअस्न्यां सुनिश्चयी ॥ (१४) १६. त्रयोदशमं च यो गुणेषु साधनेषु संपत्तिषु सर्वस्य कस्यचित् सुलोचनो भवति ॥ (१५) १७. चतुर्दशमं च यः सुलोचनतां उत्तमानां आकांक्षति स्वयं च उत्तमतायां तां अंतः उत्तमेषु अवलोकयति सुलोचनो भवति ॥ (१६) १८. पंचदशमं च यो वाल्लभ्यं उत्तमानां वांच्छति ॥ (१७) १९. षोडशमं च यो द्वेषं निकृष्टवाल्लभ्यं च मनसो दूरे दधाति ॥ (१८) २०. सप्तदशमं च यः ईर्षां [ ईर्ष्यां ] अव्यापारिणीं [असदाचारिणीं ] नो वहति ॥ (१९) २१. अष्टादशमं च यः कामचिंतां नो कुरुते ॥

---

॥ २७ ॥ १. W. अनास्तिक्यं.

(२०) २२. एकोनविंशतितमं च यः असंप्रपत्तिं समं केनापि न कुरुते ॥ (२१) २३. विंशतितमं च यः केनचित् विगतेन[1] वेचितेन [ व्यतीतेन ][84] चिंतां न वहति ॥ (२२) २४. एकविंशतितमं च यः कोपं वपुषि न दधाति ॥ (२३) २५. द्वाविंशतितमं च यो लज्जाहेतोः पापं न कुरुते ॥ (२४) २६. त्रयोविंशतितमं च यः अलसत्वात् निद्रां स्वेच्छया नाचरति ॥ (२५) २७. चतुर्विंशतितमं च यः अहुरमज्देन सुनिश्चयी ॥ (२६) २८. पंचविंशतितमं च यः अस्तित्वेन[1] स्वर्गलोकस्य नरकस्य च लेख्यकेन[85] च आत्मनः शुभेन च स्वर्गलोकस्य निग्रहेण च नरकस्य सुनिश्चयी ॥ (२७) २९. षड्विंशतितमं च यः पैशुन्यात् लोचनेर्षायाश्च स्वीयं वपुः परिरक्षति ॥ (२८) ३०. सप्तविंशतितमं च यः स्वयं शुभं समाचरति केभ्यश्चित् शिष्यां च शुभां ददाति ॥ (२९) ३१. अष्टाविंशतितमं च य उत्तमानां सहायी निकृष्टानां च प्रतिद्वंद्वी भवति ॥ (३०) ३२. एकोनत्रिंशत्तमं च यः छद्मतः स्वेच्छाचारित्वाच्च निजं वपुः परिरक्षति ॥ (३१) ३३. त्रिंशत्तमं च यः असत्यं अनास्तिकं च न जल्पति ॥ (३२) ३४. एकत्रिंशत्तमं च यो मित्रद्रोहात् स्वीयं वपुः गाढं परिरक्षति ॥ (३३) ३५. द्वात्रिंशत्तमं च यो लाभस्य शुभस्य च इहलोकीयस्य अभिलाषाय अन्यायात् केषुचित् रक्षां कुरुते ॥ (३४) ३६. त्रयस्त्रिंशत्तमं च यः क्लेशिभ्यः पङ्गुभ्यो वाणिज्यकरेभ्यः आश्रमस्थानानि विदधाति ॥

---

## [ अथ सप्तत्रिंशत्तमः प्रश्नः ]

(१) अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् किमर्थं शुभं यत् इहलोकीयं न अनुरूपतया विभजंते आत्मानं च परलोकीयायाः कर्मानुरूपताया ग्रहीतारं कुर्वंति ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् पालना या अहुरमज्दस्य स्वामिनः उपरि सृष्टीनां सर्वेभ्यः उत्तमेभ्यः सर्वेभ्यश्च निकृष्टेभ्यः सर्वं शुभं विभंजयति। ५. यदमीषां न एकहेलया [ एकवेलया ] उपरि प्राप्नोति बलात्कारत्वात् [°रित्वात्] आहर्मनस्य देवानां च अपहाराच्च तेषां सप्तग्रहाणां ॥ (३) ६. परलोकीयाया इति हेतोः आत्मानं कर्मानुरूपताया ग्रहीतारं कुर्वंति यतः सर्वस्य कस्यचित् दुर्गतिः कर्मणा स्वीयेन कृता भवति ॥

---

## [ अथ अष्टत्रिंशत्तमः प्रश्नः ]

(१) अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् शक्तिः कस्य आकांक्षनीयतरा [आकांक्षणीयतरा ]॥ (२) ३. बुद्धिश्च कस्य संपूर्णतरा ॥ (३) ४. शीलं च कस्य प्रवीणतरं ॥ (४) ५. वाणी च कस्य शुद्धतरा ॥ (५) ६. उत्तमता च मनसि कस्य प्रभूततरा ॥ (६) ७. मैत्री च कस्य निकृष्टतरा ॥ (७) ८. आनंदश्च कस्य मनसि किंचित्तरः ॥

---

॥ २१ ॥ १. W. विभक्तिवेचितेभ्यः.

॥ २६ ॥ १. $K_8$ $MLHL_8$ सत्तया.

(८) ९. मनश्च कस्य स्पृहणीयतरं ॥ (९) १०. भारधारणा[1] च कस्य प्रतिकरणीयतरा[2] ॥ (१०) ११. कश्च प्रवीणो न परिक्षेयः ॥ (११) १२. किं तत् यत् समं सर्वैः कैश्चित् युज्यते कर्त्तुं ॥ (१२) १३. किं च तत् यत् समं केनापि नो विधेयं ॥ (१३) १४. किं च अन्योन्यप्रश्ने विधेयं ॥ (१४) १५. के ते ये साक्षिणो न प्रतिकरणीयाः ॥ (१५) १६. अंतश्च केषां आदेशकारिभिर्युज्यते भवितुं ॥ (१६) १७. किं च अधिकं युज्यते सर्त्तुं त्रिधाप्रहरकतया च धर्त्तुं ॥ (१७) १८. किं च तत् यत् केनापि हेतुना अगौरवितं नो विधेयं ॥ (१८) १९. कः स यः पदेन स्वीयेन तुल्यः अहुरमज्दस्य अमिशास्पिन्तानां च उक्त आस्ते ॥ (१९) २०. कः स यः पदेन स्वीयेन तुल्यः आहर्मनस्य देवानां च उक्त आस्ते ॥

(२०) २१. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । २२. यत् अस्य शक्तिः आकांक्षनीयतरा [ °णीयतरा ] यश्चेत् कोपं कुरुते कोपं उपशामयितुं पापं च नो कर्त्तुं स्वीयं च वपुः सानंदयितुं शक्नोति ॥ (२१) २३. बुद्धिश्च अस्य संपूर्णतरा यस्तं यं स्वीयं आत्मानं छोटयितुं[86] शक्नोति ॥ (२२) २४. शीलं च अस्य प्रवीणतरं यस्मिन् किंचिदपि छद्म कारणं[87] च नास्ति ॥ (२३) २५. वाणी च अस्य शुद्धतरा यः सत्यतरं वक्ति ॥ (२४) २६. उत्तमता च विनयमनसि मनुष्ये प्रभूततरा ॥ (२५) २७. मैत्री च द्वेषकृतो मनुष्यस्य हिंसकस्य निकृष्टतरा ॥ (२६) २८. आनंदश्च मनसि अस्य ईर्ष्यालोः मनुष्यस्य किंचित्तरः[88] ॥ (२७) २९. मनश्च अस्य स्पृहणीयतरं यः इहलोकं मुंचति परलोकं च गृह्णाति । ३०. तथा अभिलाषं च यं स्वाधीनं पुण्यस्य एनमेव प्रतिकरोति ॥ (२८) ३१. भारधारणा च अस्य प्रतिकरणीयतरा यः अन्यायं प्रतिघातं च यं आहर्मनात् देवेभ्यश्च निकृष्टेभ्यश्च उपरि संप्राप्तं संपुष्ट्या साभिलाषतया च एनमेव प्रतिकरोति ३२. तथा केनापि हेतुना आत्मानं निजं न पीडयति ॥ (२९) ३३. असौ च प्रवीणो न परिक्षेयः यः इअजदेभ्यो भयं मनुष्येभ्यश्च लज्जां न कुरुते ॥ (३०) ३४. तच्च यत् समं सर्वैः कैरपि युज्यते कर्त्तुं संप्रपत्तिर्वाल्लभ्यं च ॥ (३१) ३५. तच्च यत् समं केनापि न करणीयं द्वेषः असंप्रपत्तिश्च ॥ (३२) ३६. इदं त्रितयं अन्योन्यप्रश्ने[1] विधेयं । सुमतं सूक्तं सुकृतं च मनसि वचसि कर्मणि च यत् स्वीये ॥ (३३) ३७. एते त्रयः साक्षिणो न प्रतिकरणीयाः । स्त्री डिंभश्च यो असंपूर्णनरः दासश्च मनुष्यः ॥ (३४) ३८. अमीषां एतावतां वपुषा आदेशकारिणा भवितुं शुश्रूषां च कर्त्तुं युज्यते । ३९. स्त्रियः अंतर्भर्त्तरि । ४०. पुत्रस्य च अंतः पितरि मातरि अधिपतौ गुरौ च कर्म्मप्रवीणे च अग्नौ च स्तरीप्रतिष्ठिते[89] च वंशे च पंगौ । ४१. अंतश्च स्वामिनां अधिपतीनां कर्म्मप्रवीणां [ °प्रवीणानां ] च आदेशकारिभिर्भवितव्यं ॥ (३५) ४२. इअजदांश्च अधिकं युज्यते सर्त्तुं त्रिधाप्रहरकतया च धर्त्तुं ॥ (३६) ४३. आत्मानं च स्वीयं कार्स्मिश्चित् पदे अगौरवितं नो विधेयं । ४४. तथा सर्वदैव अंतः स्मरणे धरणीयं ॥ (३७) ४५. न्यायद्रष्टा च यो न्यायं सत्यं कुरुते लंचां च न गृह्णाति पदेन स्वीयेन तुल्यः अहुरमज्दस्य अमिशास्पिंतानां च उक्त आस्ते ॥ (३८) ४६. स च यो न्यायं असत्यं कुरुते पदेन स्वीयेन तुल्य आहर्मनस्य देवानां च उक्त आस्ते ॥

---

॥ ९ ॥ १. $K_8$. भरधारणा. २. $MLHL_8$ प्रतिकारीयतरा.
॥ ३६ ॥ १. $MLHL_3$ पक्षे.

## [ अथ एकोनचत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् किं शीतलतरं किं च उष्णतरं ॥ (२) ३. किं उद्द्योततरं । किं तिमिरतरं ॥ (३) ४. किं संपूर्णतरं किं च स्वल्पतरं ॥ (४) ५. किं निर्वाणं निष्फलतरं ॥ (५) ६. किं तत् किंचित् येन कस्यापि तृप्तिर्न स्यात् ॥ (६) ७. किं तत् यत् केनापि अपहर्त्तुं न शक्यते ॥ (७) ८. किं तत् किंचित् यत् मूल्येन क्रयितुं न शक्यते ॥ (८) ९. किं तत् किंचित् येन सर्वोऽपि कश्चित् संतुष्टः ॥ (९) १०. किं तत् येन कश्चिदपि न संतुष्टः ॥ (१०) ११. कः स एकः कामः यं अहुरमज्दः स्वामी मनुष्येभ्योऽभिलषते ॥ (११) १२. कः स एकः कामः यं आहर्मनो दुर्गतिमान् मनुष्येभ्योऽभिलषते ॥ (१२) १३. किं निर्वाणं यत् इहलोकीयं किंच निर्वाणं यत् परलोकीयं ॥

(१३) १४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । १५. यत् हृदयं मुक्तात्मनां उष्णतरं । तच्च यत् दुर्गतिमतां शीतलतरं ॥ (१४) १६. मुक्तिश्च[1] निर्म्मलतरा । दुर्गतिश्च तिमिरतरा ॥ (१५) १७. आशा रक्षा च या इअजदानां संपूर्णतरा । सा च या देवानां स्वल्पतरा ॥ (१६) १८. इहलोकमण्डनस्य परलोकविनाशकस्य च मनुष्यस्य निर्वाणं निष्फलतरं ॥ (१७) १९. ज्ञानिता अस्ति यया कश्चिदपि तृप्तिं न जानाति ॥ (१८) २०. विद्या च गुणश्च अस्ति यः केनापि अपहर्त्तुं न शक्यते ॥ (१९) २१. चैतन्यं स्मृतिश्च अस्ति यत् मूल्येन क्रयितुं न शक्यते ॥ (२०) २२. बुद्धिश्च अस्ति यया सर्वोऽपि कश्चित् स्वीयं च वपुर्निरुपद्रवं संतुष्टं च [......] (२१) २३. जडता दुष्टज्ञानता च अस्ति यया सर्वोऽपि कश्चित् स्वीयं च वपुः सोपद्रवं न–संतुष्टं [ असंतुष्टं...... ] ॥

(२२) २४. स एकः कामः यं अहुर्मज्दः स्वामी मनुष्येभ्योऽभिलषते अयं । २५ यत् मां सुष्ठुतया[1] जानंतु । यतः सर्वोऽपि यो मां सुष्ठुतया जानाति पश्चात् मयि आयाति संतुष्टये च मम प्रारोहति ॥ (२३) २६. स एकः कामः यं आहर्मनो मनुष्येभ्योऽभिलषते अयं । २७. यत् मां मा जानंतु यतः यो मां दुर्गतिमंतं जानाति पश्चात् मम कर्मणि न प्रयाति । २८. मयि कश्चिदपि लाभः साहाय्यं च एतस्मात् मनुष्यात् न संप्राप्नोति ॥

(२४) २९. तच्च यत् त्वं परलोकस्य इहलोकस्यार्थे च पृच्छसि । इहलोकस्य निर्वाणं मृत्युः अप्रकटता च । ३०. परलोकस्य च निर्वाणं स यो मुक्तात्मनां आत्मा अजरोऽमरश्च अप्रतिविघातः संपूर्णश्रीकः संपूर्णानंदः यावत् सदा च सदा प्रवृत्तिं[1] सह इअजदैरमिशास्पिंतैः वृद्धिभिश्च[90] मुक्तात्मनां ॥ (२५) ३१. छेदो निग्रहश्च दुर्गतिमतां नरके यावत् सदा च सदा प्रवृत्तिं । ३२. तथा स यो दुर्गतिमान् आत्मा विना[91] विग्रहभवनेन विना च आलोकेन यः समं देवैर्देवीभिश्च ईदृशो दुःखायते यथा इहलोके मनुष्यः पटुशरीरः समं तेन यो भारितरो रोगी ॥

---

॥ १४ ॥ १. W. सुभक्तिश्च.

॥ २२ ॥ १. W. सुष्टतया. $K_4$. सुष्टतया.

॥ २४ ॥ १. W. प्रवृत्तिः.

## [ अथ चत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् मनुष्यः कः शूरतरः ॥ (२) ३. मार्गश्च को भयवत्तरः ॥ (३) ४. लेख्यकं किं चमत्कारितरं ॥ (४) ५. बंधश्च कः सुखतरः ॥ (५) ६. कार्यं च किं अनुतापितरं ॥ (६) ७. दानं च किं अलाभतरं ॥

(७) ८. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ९. यत् मनुष्यः स शूरतरः यः समं द्रूजिभिः [ द्रुजीभिः ] स्वीयाभिर्योद्धुं शक्नोति। १०. नामांकिताश्च या एताः पंच द्रूज्यं स्तनोर्दूरे [ द्रूजीस्तनोर्दूरे ] दधाति। ११. यथा अस्ति लोभः कोपश्च कामश्च लज्जा[92] च असंतुष्टिश्च ॥ (८) १२. मार्गश्च अंतः समुत्तारके यः चंदोरपुहलसेतोः भयवत्तरः ॥ (९) १३. लेख्यैकं च यत् आत्मनां दुर्गतिमतां चमत्कारितरं ॥ (१०) १४. बंधश्च यः अपत्यानां सुखतरः स्पृहणीयतरश्च ॥ (११) १५. कार्यं च तत् अनुतापितरं यत् अत्रिधाप्रहरकिणां कुर्वंति ॥ (१२) १६. दानं च तत् अलाभतरं यत् अत्रिधाप्रहरकिभ्योऽयोग्यतरेभ्यश्च ददंति [ ददति ] ॥

---

## [ अथ एकचत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् मनुष्याः कतिभिर्जातिभिः संति ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् मनुष्यास्त्रिभिर्जातिभिः संति। ५. एको मनुष्यः एकश्च अर्धमनुष्यः एकश्च अर्धदेवः ॥

(३) ६. मनुष्यश्च स भवति यो दातृतायां [ धातृतायां ] अहुर्मज्दस्य मृत्युकारितायां च आहर्म्मनस्य भविष्ये च शवोत्थाने तनौ च पाश्चात्ये अपरेषु च सर्वेषु शुभेषु अशुभेषु च इहलोकीयेषु परलोकीयेषु सुनिश्चयी। ७. यत् मूलं एताभ्यां द्वाभ्यां अहुरमज्दात् आहर्मनाच्च॥(४) ८. अस्य प्रबोधश्च अस्या एकस्या निर्म्मलाया दीनेः उत्तमाया माज्द्ईअस्याः। ९. कयाचित् विभिन्नदर्शनतया न संबोध्यते न च शृणोति ॥

(५) १०. अर्धमनुष्यश्च स भवति यः किंचित् यत् इहलोकीयं परलोकीयं रुच्या स्वीयया कुरुते स्वबुद्ध्या स्वेच्छाचारतया च। ११. अस्ति कार्यं पुण्यं च यत् कामेन अहुरमज्दस्य अस्ति च यत् कामेन आहर्मनस्य एतस्मात् प्रचरति ॥

(६) १२. अर्धदेवश्च स भवति यस्य यथा नाम मानुषीयं मनुष्यजननेश्च अन्यथा पुनः सर्वं कार्यं कर्म च देवस्य द्विपदस्य समानं। १३. न इहलोकं जानाति न च परलोकं। १४. नो पुण्यं जानाति न च पापं। १५. न स्वर्गभुवनं जानाति न च नरकं। १६. लेख्यकं च यत् आत्मनो न चिंतयति ॥

---

॥ ७ ॥ १. $K_8$ W. द्रूजीः

॥ ११ ॥ १. $K_8$ अत्रिप्रहरकिणां.

## [ अथ द्विचत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् अहुरमज्दं अमिशास्पिंतान् स्वर्गभुवनं च यत् सुगंधं शुभानंदं कथं अतीव स्वीयं शक्यते कर्तुं । ३. आहर्म्मनं च दुर्गतिमंतं देवांश्च क्षिन्नान् [ खिन्नान् ][93a] कर्तुं नरकाच्च दुर्गंधिनस्तमोमयात् शोद्धुं[2] [ मोचयितुं ][93b] कथं शक्यते ॥

(२) ४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ५. यत् अहुरमज्दं स्वामिनं अमिशास्पिंतान् स्वर्गभुवनं च यत् सुगंधं शुभानंदं स्वीयं कर्तुं आहर्म्मनं च दुर्गतिमंतं देवांश्च क्षिन्नान् कर्तुं नरकाच्च तमोमयात् दुर्गंधिनः शोद्धुं एवं शक्यते । ६. यदि परलोकीयां बुद्धिं पृष्ठिरक्षकां[1][94] [ पृष्ठरक्षकां ] । ७. शून्यचारिणीं च संतुष्टिं सर्वसन्नाहसमानां[95] वपुषि प्रावृण्वंति । ८. शून्यचारिणीं च सत्यतां फरिका[96]समानां । ९. शून्यचारिणीं च त्रिधाप्रहरककारितां वज्रतुल्यां । १०. शून्यचारिणीं च संपूर्णमानसतां धनुःसमानां । ११. शून्यचारिणीं च दक्षिणां शरसमानां । १२. शून्यचारि च यत् प्रमाणं कुं[97]तत्तुल्यं कुर्वंति । १३. शून्यचारिणं च सद्व्यवसायं हस्तावलंबि[98]नं । शून्यचारि च यत् भाग्यं रक्षकं कुर्वंति ॥ (३) १४. अनेन प्रकारेण स्वर्गलोके आलोके च इअजदानां संप्राप्तुं आहर्म्मनाच्च दुर्गतिमतो नरकाच्च दुर्गंधिनः शोद्धुं शक्यते ॥

---

## [ अथ त्रयश्चत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् आकाशं पृथ्वी च कथं विनिर्मितमास्ते ॥ (२) ३. पयसश्च अंतः पृथिव्यां प्रवाहो विनिर्म्मणा च कथं ॥ (३) ४. मेघश्च क्व समुपविशति ॥ (४) ५. शीतकर्त्ता च देवः कुत्र स्वामितरः ॥ (५) ६. नगरं च किं अप्रतिघाततरं ॥

(६) ७. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ८. यत् आकाशं पृथ्वी च पयश्च अपरं च सर्वं किंचित् अंतराकाशे एवं विनिर्मितमास्ते यथा पक्षिणां अण्डकं ॥ (७) ९. आकाशं उपरि पृथिव्या अधश्च पृथिव्या अण्डकतुल्यं हस्तकारितया स्रष्टुः स्वामिनो महाज्ञानिनः विनिर्मितमास्ते ॥ (८) १०. पृथ्वी च अंतराकाशे एवं तुल्या यथा गोलकं मध्ये अण्डकस्य ॥ (९) ११. पयश्च अंतः पृथिव्यां आकाशे च एवं यथा जलश्च अंतः अण्डके ॥

(१०) १२. सर्वासां च अपां अंतः पृथिव्याः प्रवाहोऽर्जहिद्वीपात् । १३. तत्र च यत् सूर्यः ऊर्ध्वमायाति संहतिः सवहिद्वीपे । १४. तत्र च यत् सूर्यः अधः प्रयाति संहतिः अपां अंतः समुद्रे पुइतीके । १५. समुद्राच्च पुइतीकात् पुनरपि क्षीरसमुद्रे प्रयाति ॥

(११) १६. मेघस्य च निवसतिरुपविशनं च मेरौ ॥

(१२) १७. शीतकर्त्ता च देवः परांग्वेजदेशे स्वामितरः ॥

---

॥ १ ॥ १. W. क्षितान्. [ correctly खिन्नान्—क्ष for ख ]. २. Omitted and place left for it in $K_8$.

॥ २ ॥ १. W. पृष्ठे रक्षकां

(१३) १८. तथा अस्या दीनेः प्रकटं। १९. यत् एरांग्वेजदेशे दशमासान् शीतकालः द्वौ मासौ च उष्णकालः। २०. तयोश्च द्वयोर्मासयोः उष्णकालीययोः शीतलं पयः शीतला भूमिः शीतलो वनस्पतिः॥ (१४) २१. तेषां प्रतिघातः शीतकालः॥ २२. सर्पाश्च तत्र प्रचुरतराः। २३. अन्यथाऽमीषां अन्ये प्रतिघाताः किंचित्तराः॥

(१५) २४. तथा च प्रकटं यत् अहुरमज्दः एरांग्वेजदेशं अपरेभ्यः स्थानेभ्यो देशेभ्यश्च उत्तमं अददत्॥ (१६) २५. तस्य उत्तमता च इयं यत् मनुष्याणां जीवितं त्रीणि वर्षशतानि। २६. गवां च पशूनां च वर्षशतैकं सार्द्धं॥ (१७) २७. तेषां दुःखं मांद्यं च किंचित्। २८. असत्यं च न जल्पंति। २९. अश्रुपातं केशत्रोटनं च न कुर्वंति। ३०. आजिदेवस्य च क्षुधारूपिणो वपुषि अमीषां स्वामिनः किंचित्तरा॥ (१८) ३१. दश मनुष्या एकं मण्डकं [मोदकं?] यदि भक्षयंति तृप्ताः संति॥ (१९) ३२. तथा सर्वस्मात् चत्वारिंशद्वर्षेभ्योऽनंतरं स्त्रियः पुरुषाच्च अपत्यं जायते॥ (२०) ३३. तेषां आचार उत्तमो दीनिश्च पूर्वन्यायवती॥ ३४. यदि [यदा] म्रियंते मुक्ता भवंति॥ (२१) ३५. तेषां गुरुर्गोपतिशाहः स्वामी राजा च स्रोशः॥

## [ अथ चतुश्चत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् आहर्मनो मनुष्यान् कथं अधिकतरं प्रतारयति नरके च नयति॥ (२) ३. तस्य आनंदश्च कीदृशात् [कस्मात्] अधिकतरः। ४. मूलं च क्व स्थाने दधाति॥ (३) ५. तस्य समं देवैश्च संप्राप्तिः क्व प्रचुरतरा॥ (४) ६. तस्य खाद्यं च [कीदृशं]॥

(५) ७. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ८. यत् आहर्मनो मनुष्यान् बहुसंभूत्या अतिविपत्या च देव्या च आ[99]श्मोईनाह्वया भ्रांत्या च ईर्षया[1] च अधिकतरं प्रतारयति॥ (६) ९. तस्य आनंदश्च असंप्रपत्तित्वात् मनुष्याणां अधिकतरः॥ (७) १०. तस्य खाद्यं च अप्रमाणभक्षणत्वात् अप्रकटत्वाच्च मनुष्याणां। ११. मूलं च पिशुनेषु द्वेषकरेषु च दधाति॥ (८) १२. तस्य संप्राप्तिः प्रचरणा च समं कोपालुभिः प्रचुरतरा॥

## [ अथ पञ्चचत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् आहर्मनो मनुष्येषु बलात्कारं किं [कं] हानितरं [हानिकरतमं] महत्तरं च विदधाति॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् आहर्मनो यदि मनुष्यात् जीवितं कलत्रं अपत्यानि सर्वं च शुभं यत् इहलोकीयं अपहरति न इदं जानाति यत् काचित् हानिः अस्य कस्यचित् कृता। ५. यदि तं यं केवलं आत्मानं अपहरति दुःखिनं च कुरुते तदा इदं जानाति यत् मया हानिः संपूर्णा अस्य कृता (... ... )॥

॥ ५ ॥ १. $K_8$ ईर्क्षया [क्ष for ष].

## [ अथ षट्चत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् किं तत् किंचित् यत् अस्याः सर्वस्या लक्ष्म्या अतःपरतरं ॥ (२) ३. किं च तत् यत् उपरि सर्वस्य कीदृशस्य स्वामी ॥ (३) किं च तत् यस्मात् कोऽपि प्रणष्टुं न शक्नोति ॥

(४) ५. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ६. यत् बुद्धिरस्ति उत्तमा या अस्याः सर्वस्या लक्ष्म्या इहलोकीयायाः [......]॥ (५) ७. भाग्यं अस्ति यत् उपरि सर्वस्य कस्यचित् सर्वस्य कीदृशस्यचित् स्वामी ॥ (६) ८. कालश्च विषादरूपी निकृष्टोऽस्ति-यस्मात् कोऽपि प्रणष्टुं न शक्नोति ॥

---

## [ अथ सप्तचत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् मनुष्याणां चैतन्यस्य स्मृतेर्वीर्यस्य च संनिवासोऽन्तर्वपुषि कथं ॥

(२) ३ परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् चैतन्यस्य स्मृतेर्वीर्यस्य च मनुष्याणां स्थानं मज्जायां मस्तकस्य ॥ (३) ५. यदि मज्जा मूर्ध्नि सुपाटवा चैतन्यस्य स्मृतेर्वीर्यस्य च बुद्धिर्भवति ॥ (४) ६. यदि [ यदा ] मनुष्यस्य वार्द्धकं [ वार्द्धक्यं ] संप्राप्नोति मज्जा मूर्ध्नि क्षीणतया संतिष्ठति ॥ (५) ७. असौ च यो वृद्धो मनुष्यः क्षीणत्वात् चैतन्यस्य स्मृतेश्च तच्च यत् बुद्ध्या योग्यं कर्तुं किंचित् पश्यति किंचिच्च जानाति ॥ (६) ८. तथा बुद्धिश्च प्रथमं मज्जासु हस्तांगुलीनां मनुष्याणां संमिश्रीभवति । ९. तस्याः पश्चात् संनिवेशस्य संस्थितेः स्थानं हृदयं ॥ (७) १०. आत्मनश्च संनिवासोऽन्तःसमग्रेऽपि वपुषि एवं भवति यथा पादौ कलेवरं च अंतः सन्नाहे ॥

---

## [ अथ अष्टचत्वारिंशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् एतास्तारा या आकाशे प्रकटाः तासां संख्या एवं प्रभूततरा । अथ एतासां कार्यं प्रवृत्तिश्च किं ॥ (२) ३. प्रवृत्तिश्च या सूर्यस्य चंद्रस्य तारकाणां च कथं ॥

(३) ४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ५. यत् एतेभ्यस्तारकेभ्यः यानि आकाशे प्रथमं तारकं यत् तिश्तरं महत् उत्तमं मूल्यमत्तरं च श्रीमत्तरं च उत्क्रमास्ते । (४) ६. सर्वेषां च फलमत्ता [ फलवत्ता ] संभूतिश्च या पृथिव्या मार्गात् तिश्तरतारकस्य ॥

(५) ७. ताराश्च याः पयश्चिह्नाः वृद्धये पयसः । ८. ताराश्च या भूमिचिह्ना वृद्धये भूमेः । ९. ताराश्च या वनस्पतिचिह्ना वृद्धये वनस्पतीनां । १०. ताराश्च या गोचिह्ना वृद्धये गवां पशूनां । ११. तथा पयःपृथ्वीवनस्पतिगोचिह्ना वृद्धये मनुष्याणां दत्ताः संति ॥

---

॥ ४ ॥ १. $K_3$, $MLHL_3$, वार्द्धिक्यं.

(६) १२. तारकं च यत् वनंतं उत्तारकेषु द्वारेषु च मेरोर्विनिर्मितमास्ते। १३. यतो देवा महाराक्षस्यो देव्यश्च तेषु द्वारेषु उत्तारकेषु च परिभ्रमयंति। १४. तद्देता मार्गे उत्तारकं च यत् सूर्यस्य चंद्रस्य तारकाणां च विदारयितुं भक्तुं च न शक्नुवंति ॥

(७) १५: तारकं च यत् हप्तोईरंगं समं नवनवतिनवशतनवसहस्रनवबएवर-[100] वृद्धिभिः[101] मुक्तात्मनां द्वारे उत्तारके च नरकस्य विनिर्मितमास्ते। १६. विनाकरणाय तान् ये नवनवतिनवशतनवसहस्रनवबएवरं देवा देव्यश्च महाराक्षस्यः शाकिन्यश्च प्रतिद्वंद्वितायै चक्रस्य राशीनां च संति ॥ (८) १७. तस्य प्रचारश्च परिवर्तुलं नरकस्य ॥ (९) १८. तस्य मुख्यतया[1] कार्यं इदं यथा द्वादश गृहाणि राशीनां हस्ते दधाति सुंदरं गंतुं आगंतुं च ॥ (१०) १९. एते च द्वादश ...यः इत्येवं बलेन साहाय्येन च हप्तोईरंगस्य प्रचरंति ॥ (११) २०. सर्वं च राशीगणं यदि मेरोर्मध्ये आयाति हस्तं हप्तोईरंगस्य गृह्णाति। २१. रक्षां च हप्तोईरंगात् याचयति।

(१२) २२. अपराश्च असंख्या अगणनीयास्तारा या प्रकटाः संति वृद्धयः पृथ्वीचारिणां उक्ताः संति। २३. यत् समग्राः सृष्टयो दातयश्च याः स्रष्टा अहुरमज्देन पृथिव्यां दत्ता या जाता याश्च अज्ञाताः संति सर्वासामपि तनोः समग्रं रत्नं वृद्ध्या स्वीयया प्रकटं ॥

(१३) २४. प्रवृत्तिश्च या सूर्यस्य चंद्रस्य मुख्यतया उद्द्योतकारितायै जगतः। २५. परिपाकाय च सर्वासां फलसंभूतीनां उद्गतीनां च। २६. सुंदरज्ञानाय दिनस्य मासस्य वर्षस्य उष्णकालस्य शीतकालस्य वसंतस्य शरदः अपरेषां च सर्वेषां संख्यालेख्यकानां यानि मनुष्याः शक्नुवंति प्राप्तुं द्रष्टुं ज्ञातुं च। २७. नवरोजश्च[102] सूर्यात् चंद्राच्च अधिकतरं प्रकटः ॥

---

## [ अथ एकोनपञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् कः स शक्तिमान् यः सुसमृद्धः कश्च स यो दुष्टसमृद्धिः परिज्ञेयः ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् स येन शक्तिमत्ता सुव्यापारिव्यवसायात् कृता आस्ते सुसमृद्धः स च येन अव्यापारात् कृता आस्ते दुष्टसमृद्धिः परिज्ञेयः ॥

---

## [ अथ पञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् किमर्थं यत् अलसस्य दुष्टज्ञानिनो निकृष्टस्य मनुष्यस्य अस्ति यत् किल श्लाघ्या [ श्लाघा ] शुभं च महत् प्राप्नोति। ३. अस्य च यः सानुरागो ज्ञानी उत्तमश्च मनुष्योऽस्ति यत् किल गुर्वी अन्यायतां महाक्लेशतां च नास्तिकतां च प्राप्नोति ॥

---

॥ ९ ॥ १. $K_8$ मुख्यतया [ ष for ख ].

॥ १३ ॥ १. $MLHL_3$ adds वृष्टि above *seconda manu.*

(२) ४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ५. यत् अस्य योऽलसो दुष्टज्ञानी निकृष्टश्च मनुष्यो यदि भाग्यं सहायि भवति तदा सा अलसता व्यवसायतुल्या सा च दुष्टज्ञानता ज्ञानतुल्या [सुज्ञानतुल्या] सा च निकृष्टता उत्तमतातुल्या भवति ॥ (३) ६. अस्य च यो ज्ञानी सानुराग उत्तमश्च मनुष्यो यदि भाग्यं प्रतिद्वंद्वि तदा सा ज्ञानिता अज्ञानतायां ग्रहिलतायां[1] सा च सानुरागता दुष्टज्ञानतायां व्यस्तयति । ७. ज्ञानं च गुणश्च अनुरागश्च अजंगमत्वे प्रकटो भवति ॥

---

## [ अथ एकपञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् इजिश्निः इअजदेभ्यस्त्रिधाप्रहरककारितां शुभस्य च यत् इअजदेभ्यः कथं युज्यते कर्तुं ॥ (२) ३. पश्चात्तापश्च आत्मनः शुद्धये कथं कार्यः ॥

(३) ४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ५. यत् इजिश्निः इअज्देभ्यः सा उत्तमा या अनया निर्मलया उत्तमदीन्या माज्दइअस्न्या कुर्वंति ॥ (४) ६. तस्या मूलं उत्तमता सत्यता सुनिश्चयता च या इअजदानां ॥ (५) ७. अल्पं च बहु च यत् प्राप्तमस्ति अंतः इअजदेषु त्रिधाप्रहरककारी भवति ( ... ... ... ... ... ... ) ॥ (६) ८. यदि च आहर्म्मनात् देवेभ्यश्च महत्कष्टं अन्यायं च उपरि प्राप्नोति शुभे च इअजदानां अनिश्चयी न भवति । ९. त्रिधाप्रहरककारितां च अंतः इअजदेषु न क्षीणयति ॥ (७) १०. सर्वा हानयश्च याः प्राप्नुवंति व्यावृत्य बलात्काराय आहर्मनस्य देवानां च ददाति ॥ (८) ११. शुभाय लाभाय च स्वीयाय हानिं अन्यस्य कस्यापि नाभिवांच्छति। १२. सृष्टीनां अहुरमज्दस्य प्रतिपालको भवति ॥ (९) १३. कार्यं पुण्यं च व्यवसायितया युद्धतया च करोति । १४. नामांकितश्च [ नामतश्च ] रक्षायै पयसां बह्वीनां वनस्पतीनां अधिकं व्यवस्यति ॥ (१०) १५. तथा एतस्मिन् सुनिश्चयी भवति यत् इअजदा मनुष्येभ्यो विना शुभेन अन्यथा किंचित् अशुभं न ददंति [ ददति ] अहर्मनो देवाश्च विना अन्यायेन अन्यथा किंचित् शुभं न ददंति [ ददति ] ॥

(११) १६. पश्चात्तापभवनाय मुख्यतया किंचित् इदं यत् पापं न कुरुते निजया वांच्छया ॥ (१२) १७. यदि अज्ञानत्वात् अथ [ वा ] व्याकुलत्वात् अथ [ वा ] दुष्टज्ञानत्वाच्च पापं प्राप्नोति ततः पुरतो गुरोः उत्तमानां च पश्चात्तप्तो भवति ॥ (१३) १८. ततः पश्चात् चेत् न कुरुते तदा तत् पापं यदनेन कृतमास्ते तनोः अस्य एवं दूरे भवति । १९. यथा वायुः स यः प्रचण्डक्रमः शीघ्रतरश्च गाढतरश्च आयाति अरण्यं ईदृशं संमार्जेति [ संमार्जयति ] यत् सर्वं तृणसंचयं किंचिच्च यत् तत्र स्थाने पतितमास्ते परिस्फोटयति ॥

---

## [ अथ द्विपञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् नमस्कृतिः स्तुतिश्च ईअजदेभ्यः कथं कार्या ॥

---

॥ ३ ॥ १. MLHL$_3$, K$_8$ ग्रथिल; TD गहिल [ Compare Gujerati घेलुं insane, mad ].

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् सर्वेषु दिनेषु त्रीन् वारान् संमुखं सूर्यस्य मिहिरस्य यथा संमिश्रौ प्रचरंतौ तिष्ठतः[104] नमस्कृतिः स्तुतिश्च कार्या। ५. इत्येवं संमुखं चंद्रस्य अग्नेश्च बहरामस्य[105] अथ [ वा ] अग्नेश्च आदरोयस्य[106] प्रत्यूषे मध्याह्ने दिनावसाने च नमस्कृतिः स्तुतिश्च करणीया। ६. त्रिधाप्रहरककारिभिश्च भवितव्यं ॥ (३) ७. यदि किंचित्[107] अंतः ईअजदानां परलोकचारिणां इहलोकचारिणां मनुष्याणां गवां पशूनां शुनां शुनकजातीनां अपरासां च सृष्टीनां दातीनां च या अहुरमज्दस्य स्वामिनः पापं प्राप्तमस्ति। ८. पुरतः सूर्यस्य मिहिरस्य चंद्रस्य अग्नेश्च अहुरमज्दस्य पुत्रस्य पश्चात्तापिभिर्भवितव्यं। ९. पापस्य च शुद्धये यावत् साधु शक्यते पुण्यं विधेयं ॥

---

## [ अथ त्रिःपञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २ यत् किमर्थं यो दुष्टज्ञानी मनुष्यो यस्य शिष्यां संमुखं ददंति [ ददति ] विद्यां शिष्यां च यां ज्ञानिनां उत्तमानां च एवं पीडितां दधाति यथा संमुखं शिष्यापयितुं महत्कष्टं ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् इति हेतोर्यतो दुष्टज्ञानी मनुष्यो दुष्टज्ञानतां यां स्वीयां मनसि एवं उत्तमां मन्यते यथा ज्ञानी ज्ञानितां स्वीयां मनसि ॥

---

## [ अथ चतुःपञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् किमर्थं असौ यो निकृष्टरत्नो मनुष्य उत्तमानां नो मित्रः अशिक्षितायुधश्च शिक्षितायुधानां ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् इति हेतोर्यतः अस्य यः अशिक्षितायुधो मनुष्यः सर्ववारं शिक्षितायुधेभ्यो भयं ५. यत् मा कथंचित् गुणं शस्त्रकौशल्यं च यदस्य नास्ति अवलोकयंति [॰यं तु] तस्य ततः पुरतः उत्तमानां सर्वेषां च सहायिनां लज्जा उपरि प्राप्नोति ॥

(३) ६. निकृष्टरत्नाश्च मनुष्या इति हेतोः उत्तमानां नो मित्रा भवंति यतः अमीषां समयो यो विनाशस्य विघातस्य च हस्तात् उत्तमानां भवति ॥

---

## [ अथ पञ्चपञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं २. यत् एते पर्वताः समुद्राश्च [108]ये पृथिव्यां किमर्थं कृतास्तिष्ठंति ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् ४. यत् ते पर्वता ये पृथिव्यां अस्ति यत् वायोः अदृढयितारः [आवहयितारः][109] टालयितारश्च ५. अस्ति च यत्

---

॥ १ ॥ १. $K_8$ शिख्यां [ ख for ष ].

॥ २ ॥ १. TD अदर्हयितारः (?), W. अदर्हयितारः moderators.

संस्थानं प्रवृत्तिकरां च [प्रवृत्तिकराश्च] आसनं च उत्थानं च मेघस्य वार्षीयस्य। ६. अस्ति च यत् निहन्तारः आहर्म्मनस्य देवानां च। धर्त्तारो जीवनिकर्त्तारश्च सृष्टीनां दातीनां च अहुरमज्दस्य स्वामिनः ॥

(३) ७. एते च समुद्रा ये पृथिव्यां रक्षाकारितायै जीवनिकारितायै च सृष्टीनां दातीनां च स्वीयानां स्रष्ट्रा स्वामिना महाज्ञानिना मेरोस्तटेभ्यः कृतास्तिष्ठंति ॥

## [ अथ षट्पञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं २. किल किमर्थं यत् परलोकीयानां इहलोकीयानां च ज्ञानं कार्यावबोधश्च द्वावपि बंधौ त्वयि प्रवर्तितौ ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् इति हेतोः यतः प्रथमतः अहं या नैसर्गिका बुद्धिरस्मि एतेभ्यः परलोकीयेभ्यः इहलोकीयेभ्यः समं अहुरमज्देन संजाता[1] अभविष्यम् [अभवं] ॥

(३) ५. तथा दाता स्वामी महाज्ञानी परलोक-इहलोकदायकान् इअजदान् अपरां च समग्रां सृष्टिं दातिं च बलेन दार्ढ्येन ज्ञानेन कार्यावबोधेन च नैसर्गिकबुद्धेः अददत् [अदधात्] दधाति च प्रचारयति च ॥

(४) ६. तथा[110] वृद्धिकारिताप्रांते विनाशं विघातं च य आहर्म्मनस्य तस्य सृष्टीनां च बुद्धेर्बलेन अधिकतरं शक्यते कर्तुं ॥

(५) ७. तथा सउशिउसः पुरुषः समं कईपुश्रवेण [कइखुस्रवेण] ते च ये शवोत्थानं वपुश्च पाश्चात्यं कुर्वंति बलेन साहाय्येन च बुद्धेः अधिकतरं कर्तुं शक्नुवंति ॥

(६) ८. ज्ञानं कार्यावबोधश्च यः पृथिव्यां विद्या शिष्या च या सर्वेषां वर्णानां[1] सर्वाः प्रवृत्तिकारिताश्च याः समयानां बुद्ध्या भवति ॥

(७) ९. आत्मानश्च ये मुक्तात्मनां संशुद्ध्यं[1] नरकात् गरोथमाने स्वर्गे बलेन रक्षया च बुद्धेः अधिकतरं प्राप्नुवंति ॥

(८) १०. मनुष्येभ्यश्च इहलोके उत्तमं जीवनं आनंदं च श्लाघां[1] च समग्रं च शुभं बलेन बुद्धेः शक्यते अभिलषितुं ॥

(९) ११. वीर्यस्य च मनुष्याणां गवां पशूनां अपरासां च सर्वासां सृष्टीनां दातीनां अहुरमज्दस्य स्वामिनो धारणे शक्तिं[1] यां अंतः उदरे यच्च क्षुधया तृष्णया नो म्रियंते प्रकटीकरणं च यदमीषां आहारस्य अंतः उदरे विभक्तिं परिपाकं च यं अवयवानां महाशक्त्या प्राणेन च बुद्धेरधिकतरं शक्नुवंति कर्तुं ॥

(१०) १२. घटना च या पृथिव्याः संमिश्रता च या पयसः अंतः पृथिव्यां उद्गतिः वृद्धिश्च या वनस्पतीनां रागश्च[1] यो वर्णवर्णतया गंधः स्वादो रसश्च[2] यो बहुप्रकारो बुद्ध्या अधिकतरं विभक्तः कृतश्च आस्ते ॥

॥ २ ॥ १. W. संयाता; MLHL$_3$ सजाता.

॥ ६ ॥ १. MLHL$_3$ has समग्रं गुणं विद्यायाः instead of सर्वेषां वर्णानां.

॥ ७ ॥ १. W. संशुध्या.

॥ ८ ॥ १. K$_8$ श्लाघ्यं.

॥ ९ ॥ १. K$_8$ धारणाशक्तिः

॥ १० ॥ १. MLHL$_3$ रंगश्च. २. W. रमश्च pleasantness;

(११) १३. संमार्जना च या मेरोः परिवर्तुलं पृथिव्याः प्रकटयनं च यत् सप्तद्वीपानां पृथिव्यां आकाशं च उपरिष्टात् यत् मेरोः प्रवृत्तिश्च या सूर्यस्य चंद्रस्य द्वादशराशीनां च षट् समयाश्च ये गहंबाराणां पंच गाथाश्च या फ्रऊर्दिआन्-समयस्य स्वर्गभुवनं च यत् सुमतस्थानं च सूक्तस्थानं च सुकृतस्थानं च सर्वशुभसमृद्धि च गरोथ्मानं यत् अतःपरं उत्तारकश्च यः परलोकिनां इहलोकिनां सेतुश्चंदोरो बलेन बुद्धेः कृतो विभक्तश्च[1] आस्ते ॥

(१२) १४. मेघस्य च काचरत्नाकृतेः समुद्रात् पयोग्रहणं आकाशे च प्रचारणं प्रमाणतया च कणैः कणैः पृथिव्यां प्रक्षेपणं परिज्ञानं च यत् सृष्टीनां अहुरमज्दस्य आहर्म्मनस्य च कीदृशतां च यां स्वर्गभुवनस्य नरकस्य च प्रतिपालनां च यां अहुरमज्दस्य अभिशासितानां च अपरेषां च इअजदानां उपरि सृष्टिषु तीयासु विघातं मृत्युकारितां च यां आहर्म्मनस्य देवानां च उपरि सृष्टिषु अहुरमज्दीयासु बलेन बुद्धेः अधिकतरं शक्यते परिज्ञातुं ॥

(१३) १५. दीनेः[111] उत्तमाया माज्दईअस्न्या गिरां आस्वादो यः इहलोकिनां भंजनं च यत् देवानां कलेवरस्य पृथिव्यां अप्रकटीकरणं च यत् आलोकात् मनुष्याणां अत्युत्तमशस्त्रेण बुद्धेः अधिकतरं कृतमास्ते ॥

(१४) १६. युद्धं च संग्रामं च यत् समं अनादेशिभिः अग्दीनै[1] विघातं च यत् आहर्म्मनस्य देवानां च बलेन बुद्धेः शक्यते कर्तुं ॥

(१५) १७. पयश्च यत् प्रच्छन्नं अधः पृथिव्याः सूर्यावलोक्यं कर्तुं कृषिं च निवासतां च लाभं च समाधानं च आनंदं च मनुष्याणां गवां पशूनामर्थं बलेन बुद्धेः शक्यतेकर्तुं ॥

(१६) १८. पीडां व्याधिं च मनुष्याणां गवां पशूनां अपरेषां च जीवमतां परिज्ञातुं औषधं पथ्यं च तनोः पाटवं च समाधानं च कर्तुं बलेन बुद्धेः अधिकतरं शक्नुवंति ॥

(१७) १९. सर्वेऽपि मनुष्या येषां बुद्धित्वात् [ बुद्धिप्रभावात् ] समृद्धिः अधिका ते स्वर्गसमृद्धिं अधिकतरां लभंते ॥

(१८) २०. गुश्तास्पश्च जरथुश्त्रो गइउमर्दश्च अपरे च ते ये स्वर्गलोकात् समृद्धिं अधिकतरां अलभंत प्रचुरं सह संप्राप्तित्वात्[1] बुद्धेः ॥

(१९) २१. यमशेदः फ्रेदूनः कहोशश्च[112] अपरे च ते राजानो ये अहुरमज्दात् कर्म्मकारितां शक्तिमत्तां च अधिकतरां अलभंत (......) नोसंप्राप्तिर्या अमीषां स्वर्गभुवने तथा तच्च यत् अंतः स्वीये स्वामिनि अत्रिधाप्रहरकिणः संजाता[1] अभविष्यन् [ अभवन् ] स्वल्पं सह संप्राप्तित्वात् बुद्धेः ॥

(२०) २२. आहर्म्मनो देवाश्च एनं मनुष्यं अधिकं प्रतारयंति नरके च नयंति यो बुद्धित्वात् दुर्बलतरः शीलेन च स्वल्पतरः ॥

(२१) २३. प्रकटं च यत् असौ यः शीलसुंदरः प्रचारसुंदरश्च तस्य त्रिधाप्रहरको बुद्धित्वात् परिज्ञेयः ॥

---

॥ ११ ॥ १. MLHL$_3$ कृता विभक्ताश्च.

॥ १४ ॥ १. W. K$_8$ अदीनैः

॥ १८ ॥ १. W. संप्राप्तत्वात्

॥ १९ ॥ १. W. संयाताः

(२२) २४. यतः प्रकटं यत् आहर्म्मनो जरथुश्त्रं प्रत्यवोचत् यत् यदि[113] अस्या दीने-रुत्तमाया माज्दईअस्न्या अन्यथा भवसि ततस्तुभ्यं वर्षसहस्रं राज्यं पृथिव्या ददामि। २५. यथा वदगनराज्ञे दहाकाय दत्तं ॥

(२३) २६. जरथुश्त्रः संपूर्णबुद्धित्वात् शीलस्य प्रचारस्य च सदाचारत्वात् तेन वैकल्येन यत् निकृष्टस्य आहर्मनस्य दुर्गतिमतः छद्मकस्य विकलो न बभूव ॥

(२४) २७. स च आहर्म्मनं प्रत्यवोचत्। (२८) यत्[114] भंजयामि टालयामि कृशं करोमि कलेवरं यत् युष्माकं देवानां देवीनां शाकिनीनां महाराक्षसीनां च हूमेन बरश्मेनेन दीन्या सत्यया उत्तमया यां स्रष्टा अहुरमज्दो मह्यं आस्वादयत् ॥

(२५) २९. आहर्म्मनो यदि [ यदा ] तद् वाक्यमशृणोत् मंदः खिन्नश्च[1] [ क्षीणश्च ] बभूव नरकं च प्राविशत् दीर्घं कालं मंदः आसीत् ॥

(२६) ३०. इदं च प्रकटं किल अहुरमज्दो यत् आहर्म्मनेन समं समस्तायाः सृष्टेर्दातेश्च अवधिप्रमाणं अकरोत् पश्चात् समं समग्रैः इअजदैः अमिशास्पिंतैश्च हंजमनं चकार स तस्मात् यत् स्वीयं बुद्धिप्रभुत्वं अवोचत् अगणयत् ॥

(२७) ३१. तथा इदं च प्रकटं यत् नववर्षसहस्रान् यान् वृद्धिकृतेः[115] यावत् शबोत्थानं वपुश्च पाश्चात्यं समग्रां सृष्टिं दातिं च बुद्ध्या दधाति प्रचारयति च ॥

(२८) ३२. तथा इदं च प्रकटं यत् असौ यो दुष्टज्ञानी कपटशीलश्च मनुष्यो यदि प्रभूतायामपि श्लाघायां शक्तिमत्तायां स्वामितायां च संप्राप्नोति तथापि तत् शुभं स्वामित्वं च श्लाघितुं न युज्यते ॥

---

## [ अथ सप्तपञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। (२) यत् किमर्थं स्वामी यो दुष्टज्ञानी स्वामित्वात् या अस्य अस्ति दुष्टज्ञानता ग्रहिलता च व्यावृत्य ज्ञानतायां गुणमत्तायां च परिभ्रमति। ३. दुर्बलश्च यो ज्ञानी अपापश्च दुर्बलत्वात् ज्ञानिता कार्यावबोधता च या अस्य अस्ति व्यावृत्य ग्रहिलतायां अलाभतायां च परिभ्रमति ॥

(२) ४. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ५. यत् प्रतारणात् बलात्काराच्च आजिदेवस्य[116] क्षुधारूपिणो लोभदेवस्य च। ६. मनुष्याश्च सर्वस्य यस्य लक्ष्मीः शक्तिमत्ता च अधिकतरा पौरुषीयं यदस्य वचः अधिकतरं श्रुवंति कर्म्म च कर्तृतां च अधिकतरां गणयंति ॥ (३) १. लोचनेषु च पुनः ईअजदानां अमिशास्पिंतानां च दुर्बलो यः अपापो ज्ञानी च उत्तमो वल्लभतरश्च राज्ञोऽपि शक्तिमतोऽपि दुष्टज्ञानिनः ॥

---

## [ अथ अष्टपञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् को दोषः आचार्याणां। ३. कश्च दोषः क्षत्रियाणां। ४. कश्च दोषः कुटुंबिकानां[1]। ५. कश्च दोषः प्रकृतिकर्म्मिणां ॥

---

॥ २५ ॥ १. W. क्षिप्तश्च.

॥ १ ॥ १. $K_8$ कुटंबिकानां.

(२) ६. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ७. यत् दोषो यः आचार्याणां आस्मोई[117] ईर्षा च विस्मृतिकारिता च अलसता च सूक्ष्मनिरीक्षणा च दुष्टप्रबोधश्च दीनेः ॥

(३) ८. दोषश्च यः क्षत्रियाणां बलात्कारो हिंसा च मित्रद्रोहश्च अप्रतिपालना च वेश्यारतिश्च उद्धतशरीरता च हीनमानसता च ॥

(४) ९. दोषश्च यः कुटुंबिकानां दुष्टज्ञानता लोचनेर्षा विरुद्धेच्छा द्वेषकारिता ॥

(५) १०. दोषश्च यः प्रकृतिकर्म्मिणां दुष्टप्रबोधः अत्रिधाप्रहरकता अव्यापारजल्पो जड़ता कर्कशं च वाक्यं ॥

## [ अथ नवपञ्चाशत्तमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं। २. यत् मनुष्य उत्तमतया निकृष्टतया च कः प्रकटतरः ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ४. यत् मनुष्यस्य यस्य प्रचुरतया कार्यं समं उत्तमैः यस्य नाम्नश्च श्लाघां उत्तमतां ब्रुवंति मनुष्य उत्तमतया स प्रकटतरः ॥

(३) ५. यस्य च प्रचुरतया कार्यं समं निकृष्टैः यस्य नाम्नश्च निंदां निकृष्टतां ब्रुवंति मनुष्यो निकृष्टतया स प्रकटतरः ॥

(४) ६. यत उक्तमास्ते। ७. यत् यः समं उत्तमैः प्रवर्तयति उत्तमतां सह आनयति। ८. यश्च समं निकृष्टैः प्रवर्त्तयति निकृष्टतां सह आनयति ॥ ९. एवं यथा वायुर्यो दुर्गंधं स्पृशति दुर्गंधं च सह आनयति। १०. यश्च सुगंधं स्पृशति सुगंधं च सह आनयति ॥

(५) ११. पश्चात् शक्यते परिज्ञातुं। १२ यत् यस्य कार्यं समं उत्तमैः उत्तमतां प्रतिकरोति। १३ यस्य च कार्यं समं निकृष्टैः निकृष्टतां प्रतिकरोति ॥ १४. तथापि द्वयोः परिणामः परिज्ञेयः ॥

## [ अथ षष्टितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं २. यत् गुरु र्नराणां कः। गुरुश्च नारीणां कः। । ३ गुरुश्च अश्वानां कः। गुरुश्च पक्षिणां कः। ४. गुरुश्च गवां कः। गुरुश्च मृगाणां कः। गुरुश्च धान्यानां कः ॥

(२) ५. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत्। ६. यत् नरो यो ज्ञानी दीनिनिश्चयी शुद्धत्रिधाप्रहरकी सत्यवाक् उपरि सर्वेषां सहायिनां [सहायानां] गुरुः ॥

(३) ७. नारीच या वाक्चतुरा उत्तमरता कर्म्मकुशला श्लाघावती सुशीला गृहसंमार्ज्जका यस्या लज्जा भयं च भव्यं निजस्य च पितुः पितृभ्रातुः भर्त्तुः अधिपतेश्च मित्रा शुभरूपा उपरि नारीणां स्त्रीयानां सर्वासां सहायिनीनां गुर्वी ॥

---

॥ २ ॥ $K_8$ ईर्ष्या.

॥ २ ॥ १. MLHL$_3$ सुष्टत्रिधाप्रहरकी $K_8$ सुष्टत्रिधाप्रहरक.

(४) ८. गौश्च या श्रीमत्तमा रूपश्विनी[118] [रूपवती] अपत्यबहुला उपरि गवां गुर्वी॥ ९. चक्रवाकः पक्षिणां गुरुः ॥

(५) १०. अश्वश्च यः श्वेतः अश्वानां गुरुः ॥

(६) ११. शशकश्च मृगाणां गुरुः ॥

(७) गोधूमश्च धान्यानां गुरुः ॥

## [ अथ एकषष्टितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् कंदिजः प्रासादः क्व स्थाने संतिष्ठति ॥ (२) ३. गुफा च यमकृता क्व स्थाने संतिष्ठति ॥ (३) ४. तनुश्च केरेशास्पस्य क्व स्थाने संतिष्ठति ॥ (४) ५. निवसतिश्च स्रोशस्य क्व ॥ (५) ६. खरश्च त्रिपादः क्व स्थाने संतिष्ठति ॥ (६) ७. हूमश्च यः शवसंमार्जयिता येन शवं संमार्जयंति वपुश्च पाश्चात्यं कुर्वंति क्व उदितस्तिष्ठति ॥ (७) ८. गोपतिशाहः पुरुषः क्व स्थाने संतिष्ठति ॥ (८) ९. खरमाही च मत्स्यः कस्मै कार्याय विनिर्म्मितस्तिष्ठति ॥ (९) १०. सीनमुरुपक्षी आश्रमं क्व विधत्ते ॥ (१०) ११. चम्रोशः पक्षी क्व स्थाने उपविशति तस्य कार्यं च किं ॥

(११) १२. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । १३. यत् कंदिज प्रासादः पूर्वदिक्पक्षे आसन्नः सतवएसतारकस्य विनिर्मितस्तिष्ठति । १४. सीमया एरांग्वेजदेशस्य ॥

(१२) १५. गुफा च यमकृता एरांग्वेजदेशे पृथिव्या अधः संतिष्ठति॥ (१३) १६. सर्वप्रकारं बीजं यत् सर्वासां सृष्टीनां दातीनां अहुरमज्दस्य स्वामिनो मनुष्येभ्यो गोभ्यः पशुभ्यः पक्षिभ्यः सर्वं यत् उत्तमतरं प्रवीणिततरं[1] [प्रविनीततरं] च तत्र प्राक्षिप्तमास्ते ॥ (१४) १७. तथा सर्वेभ्यः चत्वारिंशत्तमे वर्षे नारीभ्यो नरेभ्यश्च ये तस्मिन् स्थाने संति अपत्यं जायते । १८. तेषां जीवितं त्रीणि वर्षशतानि । १९. तेषां पीडा प्रतिघातश्च किंचित्तरः ॥

(१५) २०. वपुश्च केरेशास्पस्य पुस्त-गुस्तास्पंनाम्नि[1] वने आसन्नं गिरेः दमावंदस्य संतिष्ठति ॥ (१६) २१. तथा तस्मिन् वने विना धान्येन खाद्येन च किंचित् यत् वपंति लुनंति येन च जीवंति अन्यथा अन्यो मूर्दो[119] वृक्षो वनस्पतिर्वा नास्ति । २२. तस्मिन् सुवर्णवर्णः प्रचुरो दमनकः[120] (१७) २३. तथा इअजदैः अमिशास्पितैश्च तनोः केरेशास्पस्य नवनवतिनवशतनवसहस्रनवबएवरसंख्या वृद्धयः[121] मुक्तात्मनां रक्षायै विनिर्म्मिताः संति । २४. यतो देवा देव्यश्च नो विनाशयंति ॥

(१८) २५. निवसतिश्च या स्रोशस्य प्रचुरतया अर्जहिद्वीपे पश्चाच्च सवहिद्वीपे समग्रायां च पृथिव्यां ॥

(१९) २६. खरश्च यः त्रिपादः अंतः क्षीरसमुद्रे संतिष्ठति॥ (२०) २७. समग्रमपि पयो यत् नसासु रजस्वलारुधिरेषु च अपरेषु च कुत्सितेषु मलिनेषु वर्षति यदि खरे त्रिपादे संप्राप्नोति सर्वं निरीक्षणेन पवित्रं निर्मलतरं च कुरुते ॥

---

॥ ४ ॥ १. MLHL$_3$ रूपश्निनी (?).

॥ १३ ॥ १. MLHL$_3$ K$_8$ वीणिततरं ( Gujerati वीणेलुं ? ) selected, choicest (?).

॥ १५ ॥ १. MLHL$_3$ पुश्तास्पां.

(२१) २८. हृमश्च यः शवसंमार्जयिता क्षीरसमुद्रमध्ये तत्र यत्र अस्थाघतमं[122] स्थानं उदितः आस्ते ॥ (२२) २९. तस्य नवनवतिनवशतनवसहस्रनवबपवरसंख्या वृद्धयो मुक्तात्मनां रक्षार्थै विनिर्म्मिताः संति ॥ (२३) ३०. तस्य खरमाहीमत्स्यः परिवर्तुलं सर्वदा परिभ्रमति तस्मात् दर्दुरान् अपरांश्च क्षुद्रजंतून् सदैव अन्यथा विधत्ते ॥

(२४) ३१. गोपतिशाहः पुरुषः एरांग्वेजदेशे जंबूद्वीपमध्ये संतिष्ठति । ३२. पादात् यावत् अर्धं शरीरं गोरूपः अर्द्धात् तनोर्यावत् ऊर्ध्वं मनुष्यरूपः । ३३. सर्ववारं समुद्रतटे उपविशति । ३४. इजिश्निं च ईअजदेभ्यः सदैव कुरुते जोरं[123] च समुद्रे सर्वदा प्रवाहयति । ३५. तेन च जोरप्रवाहेन असंख्याः क्षु. जंतवो अंतः समुद्रे म्रियंते ॥ (२५) ३६. यतो यदि प्रचुरां असौ तां इजिश्निकर्म्मतां न कुरुते तं च जोरं समुद्रे न प्रवाहयति ते च असंख्याः क्षुद्रजंतवो न विनश्यंति ततः सदैव यत् वर्षा वर्षति क्षुद्रजंतवश्च एवं वर्षति यथा वर्षाः ॥

(२६) ३७. सीनम्रूपक्षिणश्च विश्रामो वृक्षे व्यथाहीनं सर्वबीज [ व्यथाहीने सर्वबीजे ] । ३८. सदैव यदि उपरिष्टात् उत्तिष्ठति सहस्रं शाखानां तस्मात् वृक्षात् उदेति । ३९. यदि च उपविशति सहस्रं शाखानां भनक्ति तस्मात् बीजानि च पातयति[124] ॥

(२७) ४०. चम्रोशः पक्षी सदैव तस्य सान्निध्ये उपविशति । ४१. तस्य कार्यं च इदं यत् तानि बीजानि यानि वृक्षात् सर्वबीजात् व्यथाहीनात् पतंति असौ च चिनोति तत्र च यत्र तिश्तरं तारकं पयो गृह्णाति नयति । ४२. यावत् तिश्तरं तारकं पयः समं तैः समग्रैः बीजैर्गृह्णाति समं च वृष्टिभिर्भूमौ वर्षति ॥

---

## [ अथ द्वाषष्टितमः प्रश्नः ]

(१) १. अपृच्छत् ज्ञानी एनां परलोकीयां यां बुद्धिं । २. यत् किं तत् पुण्यं यत् समग्रेभ्यः पुण्येभ्यो महत् उत्तमं मूल्यमत्तरं च लाभमत्तरं च यत्र किंचिदपि कष्टं व्ययं च मध्ये न युज्यते ॥

(२) ३. परलोकीया या बुद्धिः प्रत्युत्तरमकरोत् । ४. यत् सर्वस्मै कस्मैचित् शुभस्याभिलषणं । ५. अंतश्च ईअजदेषु उत्तमेषु च त्रिधाप्रहरककारिता । ६. अंतश्च सर्वेषु स्थानेषु समयेषु च अहुरमज्दस्य दातृताया आहर्म्मनस्य च मृत्युकारितायाश्चिंतनं अंतः स्मरणे च धारणं । ७. आस्तिकत्वे अहुरमज्दस्य दीनेः आत्मनश्च स्वर्गभुवनस्य च लेख्यके[125] च त्रिरात्रस्य भविष्ये च शवोत्थाने तनौ च पाश्चात्ये सुनिश्चितीभवनं ॥ (३) ८. मुख्यतया इदं पुण्यं यत् समग्रेभ्यः पुण्येभ्यो महत् उत्तमं मूल्यमत्तरं च यत्र किंचिदपि कष्टं व्ययं च मध्ये न युज्यते ॥

---

॥ २१ ॥ १. MLHL$_3$ अछ्येतम स्थानं.

॥ २३ ॥ १. K$_8$ MLHL$_3$ दुर्दरान्.

॥ २६ ॥ १. TD. पातति (?) W. पायति.

---

॥ २ ॥ १. K$_8$ अभिलखनं [ ख for ष ]; MLHL$_3$ अभिलाषनं.

परिसमाप्ता इयं मैनीऊषर्दनाम्नी [ मईनीऊखर्दनाम्नी ] परलोकीया बुद्धिः । शुभा सिद्धिः समृद्धिः सानंदता च भूयात् ॥ शोभनं च भवतु लेखकपाठकयोः ॥ ([a])

---

## Postscript.

१. परिसमाप्तं प्रणामेन समाधानेन प्रमोदेन पार्थिवत्वेन च सर्वेषां उत्तमानां सदाचारिणां । २. तस्मै च यदर्थं समालिखितं सुसिद्धिः सुवकृत्वं भूयात् । ३. पश्चात् वर्षशतैकात् सार्द्धात् पुत्राणां पुत्रेभ्यो दीनीयेभ्यः संपादयिता भूयात् । ४. स्वामिनः कामेन ॥

५. यस्य च सा या महागुणा न बुद्धिः तस्य च सा महागुणा एतस्मात् भवति । ६. बुद्धिश्च अपेतविद्या दुर्बला । ७. विद्या च अपेतबुद्धिः अजंगमा ॥ ([b])

---

## Colophons.

संवत् १५७७ वर्षे कार्तिक सुदि अष्टमी वार शुक्रे अद्यीह [ अद्य-इह ] श्रीनागमण्डलकरणे[126] । पारसी संवत् ८९० साल् हश्त् सद् नवद् अज्ञ शाहिंशाह इज्दजर्दशहरीआर रोज्ञ रश्ना माह बह्मन् उ०[127] पज्ञपौत्र [पज्ञपौत्रेण] उ० महीआरसुतेन उ० महिर्पान् [ मिहिरआपानेन ] पुस्तकं मइनीउषिरद् [ मइन्योइ खर्द ] लिखितं । ए०[128] पाल्हणसुत-ए० विहिराम् [ ०मेण ] लेखायितम् । यदि कोऽपि पठयति यदि कोऽपि गुणयति[129] यदि कोऽपि उत्तारयति[130] तस्य कार्ये मया लिखितं । शुभं भवतु । हुमत हूख्त हूरिश्त ॥ This colophon is given in the printed texts of Dr. West and Tehmuras Dinshah Anklesaria.

---

संवत् १६१० वर्षे माह अविद्दाद रोज रश्न फागुण सुद ११ एकादसी भूंमदने द्वितीयायां तिथौ भूंम दीने अदेह श्रीः दमणवंदरे अमल अमानत हवालि मलीक अ सद्व्यापारे अदेहः श्रीः दमणबंदरे श्रीः श्रीः श्रीः गूयरातः जनमपदे श्रीः श्रीः श्रीः श्रीः श्रीः शुलतांन मांहांमूदशाहः विजयराये सर्वे मुद्राव्यापारे परिपंथीअतीत्येवंकाले प्रवर्त्तमाने सत्य श्रीः दमणबंदरे एर्वद कांमदीन शुत एर्वद जालकेन्य बुहुतरिंमानं लिखियापतं कागलं च श्रदाय श्रीः पारसी ज्ञाइतीय श्रीः एर्वद जाल कांमदीन शुत्येन पुण्यार्थं एतसै पारस्वात् पुस्तकं लखियासं मयनीउषर्द जंदप्रकट वेजंदनामय कोडं पुस्तक मयद्य रक्षति पठिति वा तेन एर्वद जाल कांमदीनस्य पूर्वजानां लख्यापतं ॥

अक्षरमात्रपदस्वरहीनं । व्यंजनसंधिविवर्जतरेफं । साधुभिरेवम् मंक्षमितव्यं ॥ को नव मुह्यति साश्व समुद्रे ॥ १ ॥ यावत् स्वयंभुमर्णे । यावद्रुधिमंडलामेरु यावद् चंद्रादितौ तावदियं पुस्तंकाजयेत ॥ २ ॥ भग्न प्रष्टि कटिर्ग्रीवा सूबृहष्टर द्वेयमुषं । कष्टेन लिखितं सास्त्रां जतनेन प्रपालयेत् ॥ ३ ॥ तोलाद्रक्षेत् धृताद्रक्षेद्रमाच्छथिलबंधनात् । परहस्तगतात् रक्षेदेवं वदति पुस्तिका ॥ ४ ॥ कन्याकोटि सत्यि दांनं हस्तीनां वाजिनां ग्वां शास्त्रदानं तथा षव्यं षर्वकोटि न लभ्यते ॥ ५ ॥ यादशं पुस्तके दृष्टं तादशं लिखतं मया ॥ युद शुदमशुदं वा मम दोषो न्यदीयति ॥ ६ ॥

---

(a) Here end the two MSS. $K_8$ and $MLHL_3$ without any postscript or colophon.

(b) This postscript, printed in West's and Tehmuras's editions, is the translation of an original Pázend postscript.

The above colophon, evidently very incorrect, is printed *verbatim* in Ervad Tehmuras's edition. With necessary corrections, I try to reproduce it as follows:—

**संवत् १६१० वर्षे "माह अविर्दाद रोज रश्न[1]" फाल्गुण सुदि ११ एकादश्यां भौमदिने ( द्वितीयायां तिथौ भौमदिने[2]) अद्य इह श्री दमण बंदरे[3] "अमल अमानत हवालि मलेक असद[4]" व्यापारे अद्य इह श्रीदमणबंदरे श्रीगुर्जरातजनपदे[5] श्री सुलतान महमुदशाह विजयराजे (?) सर्वमुद्राव्यापारे (?) परिपंथीयति[6] [illegible]नि एवं काले प्रवर्तमाने सति श्रीदमण बंदरे एर्वद-कामदीनसुतेन एर्वद-जालेन बहुतरं [illegible]मं लिखापितं कागलं च प्रदाय। श्रीपारसीज्ञातीयेन श्रीएर्वदजालेन कामदीनसुतेन पुण्यार्थं एतस्य पार्श्वात्[7] पुस्तकं लिखापितं मइनीऊखर्दजंद प्रकटे पाजंद [ इति ] नाम। यः कः इदं पुस्तकं अधीय (?) [ अधीते ] रक्षति पठति वा तेन एर्वदजालकामदीनस्य पूर्वजानां................. लिखापितं.................**

**अक्षरमात्रापदस्वरहीनं। व्यंजनसंधिविवार्जितरेफं।**
**साधुभिरेवं मम क्षमितव्यं। को नहि मुह्यति शास्त्रसमुद्रे॥ १॥**
**यावत् स्वयं भूमरुत्। यावदुदधिर्मेरुः।**
**यावच्चन्द्रादित्यौ च। तावदीयं पुस्तकं॥ २॥**
**भग्ना पृष्ठकटीर्ग्रीवा। शुष्कमोष्ठद्वयं मुखं।**
**कष्टेन लिखितं शास्त्रं। यत्नेन प्रतिपालयेत्॥ ३॥**
**तैलाद् रक्षेद् घृताद् रक्षेत्। रक्षेन् मात्स्यकबन्धनात्।**
**परहस्तगमाद् रक्षेद्। एवं वदति पुस्तकः॥ ४॥**
**कन्यादानं कोटीशतं। वाजिनां हस्तिनां गवां।**
**शास्त्रदानं वरं तस्मात्। खर्वकोटि न लभ्यते॥ ५॥**
**यादृशं पुस्तके दृष्टं। तादृशं लिखितं मया।**
**यदि शुद्धमशुद्धं वा। मम दोषो न दीयते॥ ६॥**

---

1. The month Khordad (3d) and the day Rashna (18th). 2. This *second tithi* is unintelligible. 3. In the port Damon. 4. During the administration of the government ( *Subedari* ) of Malek Asad. 5. In the country or province of Gujerat:

6. Sultan Mahmudshah ( King Mahmud )......................... 7. With his own expense ( એની પાસેથી or એના પૈસાથી ).

# NOTES.

1. This is the usual and stereotyped heading of Neriosengh, which he prefixes to every translation of his. Compare Part I. and II. of this Collection.

2. मान्यता=माननीयता adoration, honorification, propitiation; Pahlavi "*Shnâyishn*" from the Avestic root "*Khshnû*" to propitiate.

3. The original texts of these words is nowhere met with in the extant Avesta, they being probably lost.

4. Compare Part II. Hâ १० para. ९ of this Collection.

5. Note that all MSS. use the Present instead of the Potential in the clauses beginning with यत:

6. The Author seems to believe in the doctrines of Predestination, Astrology, and the Will of gods, simultaneously.

7. मौन = Silence at the time of eating.

8. सीव्रि means the *Sudreh*, the religious garment of the Parsis; Pahlavî "Shavîk." To put on only the shirt without the "Kustî" (the religious waist band) is considered a sin.

9. It should be अनुपानत् without shoes.

10. This is Nerioseng's rendering of Pahlavî "*viçtâkhv*," Pâzend "*gustâkh*," arrogant, presumptuous. MLHL$_3$ has in some of the following sentences भरवशी instead of रभसवशी. It seems to be something like Gujerati ભરોસે relying upon.

11. नसा dead body.

12. उत्शीर्षक = Gujerati ઓશીકું pillow.

13. Thus Nerioseng renders the Pahlavi-Pâzend "*hoshbām*" *i.e.* morning dawn (!).

14. This rendering of Pahlavi-Pâzend "*Vâe-i-veh*" by Nerioseng is equivalent to Râm Yazad. *Râm* meaning आनन्द.

15. Avesta "*Açtovîdhotush*" the separator of bones.

16. This is Nereoseng's rendering of Pahlavi-Pâzend "Vâe-i-vatar", the worse air.

17. *Frehzisht* and *Nizisht*, these two demons are not found in the extant Avesta.

18. The "*Aêshma*" of the Âvesta.

19. Wide for the holy souls, and dreadful for the sinful ones.

20. This is Nerioseng's rendering of Pahlavi—Pâzend "*âzarm*", respect, honour.

21. Avesta "*maidhyô-zarema,*" mid-spring.

22. Avesta "*Vîzaresho*", a demon who draws the sinful soul to hell.

23. Next-of-kin marriage.

24. Pahlavi "*Hamâk-dîn-yashtann,*" name of a particular ceremony of the Parsi religion.

25. Pahlavi "*zôhar*", Avesta "zaothra" = होत्र offering, sacrifice, oblation, consecrated water, &c.

26. दातिश्च पुनर्दातिश्च.—This is Nerioseng's rendering of the original Pahlavi-Pazend "*Bakht u Bagho-bakht*" (Fate and destiny of gods). West translates these two terms by "destiny and divine providence", or "perhaps "divine inter-

position or miracle" or "divine appointment or allotment." See also Question XXIII. paras. २-३.

27. Jamshed, Fredûn, and Kaûs.

28. Zohâk, Afrâçyâb, and Alexander.

29. विना = except.

30. Whence does the Author of the Mainyoi Khard quote this passage, is not known. According to Dr. West, this passage is also met with in the Pand-nâmeh of Buzurg Mihir.

31. This allusion to the carriers of Gushtâsp and Zarathost can be substantiated from the Farvardîn Yasht, paras. 99–100, and some of the Pazend recitals of the Parsis.

32. "The meaning of the passage (9–11), if the text be not corrupt, appears to be that the proper use of wealth does not make the wealth itself any better, but only the rightful possessor of it". Dr. E. W. West.

33. Compare Gatha *Ahunavaiti*, Hâ *Tâ-vê-urvâtâ*, Yasnâ XXXI§16.

34. समुत्सृति (Pahlavi-Pâzend "*rô-yishn*") growth. Compare Gujerati ઉછરવું and ઉછેરવું to rise up, to raise, to rear.

35. "They order (to give to the weaned ones) the milk of the she-goat or sheep or the cow."

36. तथापि = यद्यपि although (?); or = यतः because.

37. What Avesta does the Author refer to, is not known. I suspect Neriosengh has read the Pâzend "hasta" (= Persian "hast" is) as Pahlavi "Avasta", and consequently the wrong meaning. If we read the Pâzend word as "hast", the whole would be rendered as follows:— "For it (wheat) is the chief of the corns; that is its name is well-known in the chieftainship of corns."

38. द्रून sacred unleaven bread of wheat.

39. पुजितुं to consecrate:-This alludes to the ceremony of pronouncing grace before eating any thing.

40. पुजितं consecrated.

41. स्वामी is here inappropriate rendering of the Pahlavî—Pazend term "*pâdakhshâh*" in the original text, which means "is allowable."

42. That is, if a man after drinking wine can control himself, there is no further need of examining his disposition by other means.

43. चोक्ष may be compared with Gujerâti ચોખો pure. But the original text has "*charvatar*" more glib-tongued.

44. किंचित् is not the proper rendering of "*Kîm*" in the original text. "*Kîm*" (Persian "*Kam*") means less.

45. पटसूत्र or पट्टसूत्र silk. The original text is "*parnîn*" Persian "*parniân*". Compare Gujerati પટોળું, પટોલાં.

46. किंचित्तरम् (Pázend "*Kamtar*") less.

47. लेख्यकम् (Pâzend "*amâr*") accountability.

48. त्रिग्रहे त्रिरात्रीये (Pâzend "pâdafrâh i çêdôsh") punishment of the three nights [after death].

49. ऋते besides, over and above' apart, also, from.

50. द्वितीय सुखं (= असुखं) that which is another [feeling] than happiness, *i. e.* unhappiness.

51. सेतौ on the Bridge, *i. e.* punishment after death.

52. विना except.

53. यावत् सओशीओसं until [the time of] Saoshyôsh, *i. e.* the resurrection of the world.

**54.-55.-56.-57.** किंचित् ( Pâzend Kam" ) least; *i. e.* not.

**58.** श्राजक balance, *i. e.* estimation of good and evil deeds in the next world on the morning of the fourth day after death.

**59.-60.** किंचित् (Pâzend "Kam") little, less, least, not, &c.

**61.** प्राक्सृष्ट ( = Pahlavi-Pâzend "*Péshdâd*," Avestâ "paradhâta," Skr. पुरोहित) the most ancient kings of Iran.

**62.** आर्जुर name of a demon.

**63.** वृद्धयो the Farohars (Av. *fravashayo*), the guardian spirits of the holy; the spiritual counterparts of the holy.

**64.** Compare Âbân Yasht, para. २२.

**65.** गनाय Ganâ Mînô, Ahriman, the Devil.

**66.** Compare Yasht XV. para. 11; XIX. para. 28.

**67.** Compare the Shâhnâmeh.

**68.** शवोत्थानं (Pâzend "*Ristâkhêz*") the rising of the dead. तनोः अक्षयत्वं (Pazend "*tan-i-pasîn*") the future body.

**69.** जंबुद्वीप (Pâzend "*Khvaniras*") the seventh continent of the Earth.

**70.** सल्मः थोजश्च Salam and Tûr, the two wicked brothers of Erach, who treacherously murdered him.

**71.** The Author of the Mainyo-i Khard, narrating the acts of Gushtâsp, has loosely mixed some acts of Zoroaster with his. Compare Yaçnâ IX. para. 13, 14, 15; and Farvardîn Yasht § 87-95 99-100; Zamyâd Yasht§ 79-87.

**72.** चक्रं the celestial sphere.

**73.** भाटकं wages—Compare Gujerati ભાડું.

**74.** किंचित् See Notes 54, 55, 56, 57, 59, 60.

**75.** मुखमैथुनं वीर्यपानं च should be rectified as मुष्टिमैथुनं वीर्यपातनं च masturbation and causing the virile seed to fall; suffering and performing unnatural intercourse.

**76.** खुअएतुअदथ next-of-kin marriage; marriages (of first cousins.)

**77.** स्तरप्रवृत्तिकारितां भनक्ति annulment of adoption (Pâzend "*Star-shikanashnî*;" "*Sti*..." adopted child, preferably a male one ).

**77** *a.* जलसूसुआर water-crocodile, aligator, water otter (Gujerati જલ-સૂસવાટ ).

**78.** जन्दीक (Persian "*zandîk*") a heretic.

**79.** आस्मोई deception, cheating, deluding (from Avesta "*ashemaogha*" a hypocrite, a deceiver ).

**80.** वेचितं [व्यतीतं] विगतं passed and gone.

**81.** "who has sin in continuance, and one impulse of good works in a day."—West.

**82.** Next-of-kin marriage; marriage of first cousins. See Note 76.

**83.** See Note 77. स्तरी (Pahlavî "*starîh*") the act of making or causing the adoption of a child (?), preferably a son.

**84.** वेचितं should be व्यतीतं, as the original Pahlavi text is "*anjafta*" = Part. "*anjâmîde*" ended, past, which by misreading is rendered into Pâzend as "*khazîd*". Compare Note 80.

**85.** लेख्यक accountability.

**86.** आत्मानं छोटयितुं—Pâzend "*Khvish ruân bôkhtan*", to get the salvation of one's own soul.

**87.** कारणं—Pâzend "*vahâna*" (Persian "*bahâneh*") subterfuge, pretext.

**88.** किंचित् here, as in many other places, is equivalent to Iranian *"Kam"* meaning "little, less, least."

**89.** स्तरीप्रतिष्ठित = one who is appointed as *"Satar"* to perform the obsequies of a person who died childless.

**90.** वृद्धि ( Pazend *"Frohar"*, Avesta *"Fravashi"* ) the guardian spirit.

**91.** विना ( Pazend *"jad ez"* ) besides, over and above.

**92.** लज्जा ( Pazend *"nang"* ) *i. e.* to commit sins through fear of shame.

**93** (p.35 l. 9) लेख्यकं (Pazend *"âmâr"*) reckoning, giving account of one's own deeds after death.

**93**.*a.* क्षिन्नान् ( Pazend *"stôh"* ) correting it into खिन्नान्, tired, desponding [क्ष for ख].

**93**.*b.* शोद्धुं ( Pazend *"bhokhtan"* ) to relieve.

**94.** पृष्ठरक्षक ( Pazend *"posht-pânâî"*) protecter from the back, a shield for the back.

**95.** सर्वसन्नाह ( Pazend *"zîn u zarch u gurdî"* ) complete armour.

**96.** फरिका ( Pazend *"separ"* ) shield.

**97.** कुंत ( Pazend *"nêzha"* ) javelin, lance.

**98.** हस्तावलंबिन ( Pazend *"achdast"* ) gauntlet.

**99.** आश्मोई infidality.

**100.** बएवर ten thousand ( 10000 ).

**101,** वृद्धि = *Frohar* ( Av. *Fravashi*).

**101**.*a.* शरद् ( Pazend *"pâdezh"* ) Autumn.

**102.** नवरोज ( Pazend *"vahezha"* ) Intercalation and New Year's Day.

**103.** ग्रहिल ( Pahlavi *"halakîh,"* Pazend *"halaê"* ) senseless, silly, foolish, stupid, absurd. Compare Gujerati घेलुं insane, mad.

**104.** तिष्ठत: standing, *i. e.* in standing posture.

**105.** Âtash Baherâm, the consecrated fire of the Greater Fire-Temple.

**106.** Âtash Âderân, the consecrated fire of any ordinary Fire Temple.

**107.** किंचित्—better कदाचित्, for the original Pahlavi-Pâzend word is *"pargast"*.

**108.** अदृढयितार: those who make unfastened, who unloose (from अ and दृढ fastened, firm, tight ). The Pazend *"anasakhtâr"* seems to be a misreading of the original *"angekhtâr"*, one who raises ( *viz.* the wind ).

**109.** Better नद्यश्च ( rivers ); for the original Iranian word "Daryâwîhâ" is used in the sense of "rivers".

**110.** वृद्धिकारिता (Pâzend *"frashokard"*) Renovation of the world, प्रांते ( Pâzend *"sar"* ) at the end.

**111.** This paragraph alludes to many acts of the Prophet, Spitama Zarathushtra. Compare Yasna, Hâ IX § 14-15; the Zamyad Yasht, § 79-81; Vendidad, Fargard XIX. &c.

**112.** The stories of the rise and fall, or rather back-slidings and consequent disgrace, of Jamshed, Fredun, and Kâus, are related in several traditional writings of the old Parsis.

**113.** See Vendidad, Fargard XIX.§6.

**114.** See Vendidad, Fargard XIX.§5. and the Pâzend Nirang to be recited after the Hom Yasht.

**115.** वृद्धिकृति (Pâzend *"Frashokard"*) Renovation of the world.

**116.** आजिदेव ( Pâzend "Âzh Dev" ) the demon of inordinate desire, avarice.

**117.** आश्मोई ( Pazend *"Âshmôî"* ) hypocrisy.

यथा तिमिरंच तेजश्च ५. शुभज्ञानंच दुष्टज्ञानंच ६. सुगंधिश्च दुर्गंधिश्च ७. जीवितंच मरणंच ८. मांद्यंच आरोग्यंच ९. न्यायश्च अन्यायश्च १०. विपत्तिश्च संपत्तिश्चः ११. अपराणिच प्रतिद्वंद्वकराणि येषां सुनिश्चिता सत्ता दृश्यतरा समग्रेषु नगरेषु भूमिषुच समग्रेषु कालेषु १२. एवं यत् नावलोक्यते किमपि नगरं भूमिश्च नचाभूत् भविष्यतिच कोऽपि कालः १३. यदिदं नाम नामांकितंच शुभस्य अशुभस्य नाभूत् नचास्ति। १४. नच केनापि स्थानेन कालेन वा शक्यते वक्तुं यत् शुभस्य अशुभस्यच स्वीययथास्थत्वात् स्वतया व्यतयो भवति ॥ ॥

१५. एवंच अपरेषां प्रतिद्वंद्विनां येषां विभिन्नत्वं न विभिन्नकार्यतया विभिन्नजातितया विभिन्नरूपतया ॥ १६. यथा विभिन्नत्वं एकरत्नानां अन्योन्यांत एवं यथा नरत्वं नारीत्वं ॥ १७. गंधानां स्वादानां वर्णानां सूर्यचंद्रतारकाणां येषां विभिन्नत्वं न विभिन्नरत्नतया किंतु विभिन्नकार्यतया विभिन्नरूपिततया विभिन्नारचिततया यस्य यथा कार्ये कार्ये अभीप्सा ॥ १८. शुभस्य अशुभस्य तेजसस्तमसश्च अपरेषांच विभिन्नरत्नानां। तेषां विभिन्नता न विभिन्नकार्यतया किंतु विभिन्नरत्नतया ॥ १९. असंसर्गरूपत्वं विरोधत्वं [ विरोधित्वं ] येषां अन्योन्यं प्रकटं २०. एवं यत् यत्र शुभं तत्र अशुभस्य असत्ता असंदिग्धा ॥ २१. यदिच रोचिः[50] संप्राप्ता तमिस्रं प्रतिस्खल्यते ॥ २२. एवंच अपराणि प्रतिद्वंद्वीनि येषां असम्मार्जनत्वं विरोधत्वं [ विरोधित्वं ] अन्योन्यं विभिन्नरत्नत्वहेतोः ॥ २३. यथा अंतः पृथिव्यां प्रतिद्वंद्विरत्नत्वं विरोधत्वं [ विरोधित्वं ] पदार्थानां अन्योन्यं प्रकटं ॥ ॥

२४. पृथ्वी फलं परलोकस्य। अस्याः परलोको मूलं ॥ २५. यतः फलं अवाप्यते मूलेन ॥ २६. अमुना प्रकारेण संजातं साक्ष्यदायकं अंतर्ज्ञानिनां निर्म्मलतरं ॥ २७. पृथ्वी फलं परलोको मूलमिति संभूतेः प्रकटत्वं इदं २८. यत् समग्रस्य दृश्यस्य स्पृश्यस्य पदार्थस्य अप्रकटत्वात् प्रकटत्वे प्राप्तिः सुव्यक्ततरा प्रकटा ॥ २९. यथा मनुष्यस्य अपरायाश्च सृष्टेः दृश्यायाः स्पृश्यायाः परलोकात् अदृश्यात् अस्पृश्यात् संभूतिः परिस्फुटा एव ॥ ३०. एवं यथा कलेवरं दर्प्पणे दैर्घ्येण पृथुकत्वेन पिंडेन स्वीयेन ३१. तनोः मनुष्यस्य अपरायाश्च सृष्टेः प्रकटता अंत बीजे यत् धातृभ्योऽप्रकटा अदृश्याच अभूत् ३२. स्वयंच बीजं अंतस्तत्र यत् पितॄणां चर्म्म[51] [ पृष्ठात् ] प्रकटत्वे दृश्यत्वे स्पृश्यत्वेच संप्राप्तं ॥ ३३. इदानीं अनुमानेनैव शक्यते परिज्ञातुं यत् इदं जगत् दृश्यं परलोकात् अदृश्यात् अस्पृश्यात् दत्तं संभूतंच आस्ते ॥ ३४. अमुना प्रकारेण दृश्यत्वात् स्पृश्यत्वात् अदृश्यत्वे अस्पृश्यत्वे निजे परलोकीये भवितुं न संशयः ॥ ॥

३५. यदहं ददर्श इहलोकतया प्रतिद्वंद्विरत्नत्वं संस्पर्द्धनत्वं विरोधत्वं [ संस्पर्धनित्वं विरोधित्वं ] अन्योन्यं परलोकीयैश्च द्रव्यैः ॥ ३६. यो मूलं अस्ति इहलोकस्य ३७. अस्य इहलोकीयद्रव्याणां फलस्य अमुना प्रकारेण संभूतौ नहि संदेहः ॥ ३८. इदंच तत् यत् प्रतिद्वंद्विरत्नत्वात् प्रकटं ॥ ॥

३९. अन्यथाहं [अन्यत् यथाऽहं] उपरि अदर्शयं अर्थः कारणंच निर्व्वाणज्ञतया कर्म्मणो दातुः [धातुः]। ४०. यो ददौ [दधौ] सृष्टिं या दर्शयित्री अस्ति सत्तायाः प्रतिपक्षस्य॥ ४१.यतः परिस्फुटमेव यत् कर्म्म कर्म्मकर्त्तुः द्विप्रकारं। कामीयं अथवा रूपीयं॥ ४२.तच्च यत् कामीयं त्रिप्रकारं॥ ४३.द्विधा। ज्ञानिभ्यो निर्व्वाणज्ञेभ्यः। ४४. अथवा आकांक्षया स्वीयकरणे लाभस्य शुभस्यच ४५. अथवा प्रतिस्खलितुं अन्यथा-धर्त्तुं हानिं अन्यायंच यो विभेदात्॥ ४६. एकंच। दुष्टज्ञानिभ्यो ऽज्ञानिभ्यः। ४७. ग्रहिलतया निरर्थकतया॥ ४८. ज्ञानिभ्यो निर्व्वाणज्ञेभ्यः कर्म्म निरर्थकं निःकारणं न शक्नोति भवितुं॥ ॥

४९. यथा दाता [धाता] निर्व्वाणज्ञः सर्व्वावगतिः संपूर्णशक्तिः स्वतया संपूर्णः संपन्नः तच्च यदस्य न निहीनं [विहीनं?] लाभे वृद्धौच विभेदात् इयेष।५०. पश्चात् शक्यते परिज्ञातुं यत् अर्थस्य कारणानांच यानि अस्य कर्म्मणां स एकः प्रकारः॥ ५१. हानि र्या हाने र्या ऽस्य प्रतिपक्षात् विरोधिनो या विभेदात् शक्नोति भवितुं प्रतिस्खलनं अन्यथा-विधानं [निजः] अर्थः कारणंच सृष्टिदातेः॥—५२. इदंच यत् निर्व्वाणज्ञः उत्तमकामी। ५३. अस्य कामः समग्रा उत्तमता। ५४. असौ ददौ [दधौ] सृष्टिं अनुरूपां स्वीयकामस्य॥—५५. संपूर्णप्रवृत्तिकामी असौ उत्तमकामस्य निर्व्वाणज्ञः निरसनेन नास्तिकरणेन निकृष्टतायाः॥ ५६. यतो यावत् निकृष्टता न विहन्यते। असौ उत्तमकामी न संपूर्णकामी॥—५७. इदं यत् असौ दाता [धाता] निर्व्वाणज्ञः उत्तमतायाः दातृत्वात् पालनत्वात् रक्षणत्वात् मार्गं अन्यायस्य अपनेतुं प्रतियत्नं च पापात् कर्त्तुं उपायं आदेशयन् शिक्षापयन् प्रकटः। ५८. रूपावयवेभ्यः प्राणेभ्यश्च तनोः यत् पीडया मांद्येनच बाह्यात् ५९. कारणेनच तनोः ६०. प्रतिपक्षस्य यो वपुषि प्राप्नोति प्रतिस्खलनेन अन्यथा-धारणेन धारणं परिपाचनं विकाशनंच जीवमतां वनस्पतीनां धान्यानांच प्राणेन धात्रा प्रतिपालयित्रा रूपस्य सर्व्वेषु कार्येषु या दीनीयेषु वृद्धिरिति[52] आकार्यते ६१. तैश्च चतुर्भिः प्राणैः योऽस्ति प्राणः आकृष्टा धर्त्ता विहारयिता पोष्टाच ६२. यश्च सर्व्वेभ्यो दातुः निर्व्वाणज्ञानेभ्यः सर्व्वेषु कार्येषु प्रमाणतया प्राणो ऽन्यथा-धरणेन पीडायाः मांद्यस्यच पृथक् पृथक् जातेः यत् प्रतिपक्षात् ग्रहिलकर्म्मणो ऽन्यायकामिनः ६३. अपरेच सहप्राणाः सहसहायाः संति। प्रकटाः [प्रकटा] उत्तमकामतायाः [०ता या] दातुः [धातुः]॥ ॥

६४. इदं च यत् इदं दुःखं मरणं च यत् तनोः विघाटयितृ न दातुः उत्तमकामिनः तनुधातुः प्रतिपालयितुः॥ ६५. प्रकटताच एतस्मात् यदि [यद्] दाता निर्व्वाणज्ञो न विषादिकार्यी अनुतापिकर्म्मा ६६.नच विनाशयिता विलाययिता [विलययिता] स्वीयानां सृष्टीनां॥ ६७. यतो निर्व्वाणज्ञः सर्व्वज्ञानीच॥ ६८. इदं एवं विषादत्वं [विषादित्वं] अनुतापत्वं [अनुतापित्वं] यत् स्वीयात् कर्म्मणः उपरि एतस्मिन् किंचिज्ज्ञे अपूर्णबुद्धौ अनिर्व्वाणज्ञानिनि युज्यते वक्तुं॥ ६९. यथा ज्ञानिभ्यो निर्व्वाणज्ञेभ्यः कर्म्म निःकारणं निरर्थकं न भवति ७०. इत्येवं अज्ञानेभ्यो दुष्टावबोधेभ्योऽनिर्व्वाणदर्शिभ्यः कर्म्म समग्रं ग्रहिलं निरर्थकं निःकारणंच॥ ॥

७१. असौच निर्व्वाणज्ञः अन्यथा-विधानेन तस्य ग्रहिलकर्म्मिणो ऽनिर्व्वाणज्ञानिनः स्वीयाभ्यः सृष्टिभ्यो निर्व्वाणज्ञतया विवेकतयाच [०कितयाच] कर्म्मणो दर्शयिता ७२. एनंच ग्रहिलकर्म्माणं [०र्णं] गुफितं आवमर्द्धितं [अवमृदितं] अंतः सृष्टौ आलेखी-चकार ॥ ७३. यतः इदं परिस्फुटं यदेनं चंचलं जीवितरत्नं अंतः निःसीम्नि शून्ये एवं न शक्यते अन्यथा-धर्त्तुं संकोचयितुं विरोधत्वात् [ विरोधित्वात् ] निर्भयी-भवितुं ७४. यदिच आवमर्द्धितो [अवमृदितो] गुंफितो ग्राहीकृतो न स्यात् ॥ ७५. अंतः आवमर्द्दनत्वे [अवमर्दनित्वे] ग्राहेच दुःखस्य विमार्ज्जनं महतो विग्रहस्यच उपायः ॥ ७६. किंतु यावत् संपूर्णविमार्ज्जता या दुःखस्य संपूर्णावगतिश्च अस्य दुष्टावबोधकर्म्मणो न भवति तावदस्य प्रवर्त्तने निकृष्टमिथ्योक्त्या चिंतितं ॥ ७७. संपूर्णशक्तिः सर्व्वशक्तेः दातुः [धातुः] दुःखविमार्ज्जना ॥ ७८. संपूर्णविमार्ज्जनात् दुःखस्य अंतः सर्व्वशक्तौ निर्व्वाणज्ञो दाता [धाता] अक्षमतया पुनरवकिरति अंतस्तस्मिन् निःसीम्नि शून्ये ॥ ७९. साच या उत्तमा सृष्टिः एतस्मात् निर्भया अनश्वरा अदुःखाच भवति ॥ ८०. संपूर्णविवेकतया निर्व्वाणज्ञत्वं उपायावलोकनंच अस्य सर्व्ववेत्तुः दातुः [धातुः] उत्तमानां ॥ ॥

८१. लोचनग्रहणाच्च द्रव्याणां प्रकटं विभिन्नत्वं पदार्थानां ॥ ८२. विभिन्नत्वं द्विप्रकारं यथा उपरि उदीरितं ॥ ८३. एकंच विभिन्नकार्यत्वं द्वितीयंच विभिन्नरत्नत्वं ॥ ८४. विभिन्नकार्यत्वं ऐक्यसहायत्वात् ऐक्यप्राणत्वात् ॥ ८५. विभिन्नरत्नत्वं च असंसर्गत्वात् प्रतिपक्षत्वात् ॥ ८६. एकस्थानतया न संस्थितिः द्रव्याणां प्रकटा ॥ ८७. यदि किंचित् एकमेव स्यात् एकं नास्ति नाम स्यात् ॥ ८८. परिज्ञानत्वं पदार्थानां एकस्य द्वितीयात् नामग्रहणत्वाच्च ॥ ८९. अशुभानांच विभिन्नतया शुभेभ्यः सत्ता मूलास्पदतया एवं यत् एकमपि न अर्थाय अस्ति अस्य द्वितीयस्य ॥ ९०. यतः एकैकशः स्वीयस्वतया स्थितानि संति ॥ ९१. सदैव विरोधत्वात् [ ०धित्वात् ] प्रतिघातत्वं [प्रतिघातित्वं] येषां अन्योन्यं प्रकटं ॥ ॥

९२. चेत् कश्चित् वक्ति यत् यथा विरोधिनां विरोधत्वं [विरोधित्वं] प्रभूतं ९३. यथा शुभस्य अशुभस्य तेजसस्तमसश्च सुगंधस्य दुर्गंधेश्च जीवितस्य च मरणस्य मांद्यस्य आरोग्यस्यच आनंदस्य विषादस्यच। ९४. अपराणि प्रभूतानि एवं मूलास्पदानि प्रभूतसंख्यानि प्रभूतजातीनि संवदंति [ संभवंति ] भवितुं। ९५. अपरेच प्रत्युत्तरं ददति। ९६. यत् यद्यपि विरोधिनां प्रभूतानि नामानि प्रभूताश्च जातयः संति तथापि [ समग्राः ] अंतः समुद्गतानि द्वयो र्नाम्नोः ॥ ९७. एतेषां इमे द्वे नाम्नी बीजं समुत्पत्तेः यदस्ति शुभंच अशुभंच ॥ ९८. तानि विभिन्ननामानि विभिन्नजातीनि चिह्नानि संति एतयो र्द्वयो र्बीजयोः ॥ ९९. न किंचित् वस्तु यत् न प्रवर्त्तितं एतयो र्द्वयो र्नाम्नोः ॥ १००. नाभूत् न भविष्यतिच किंचित् यत् न शुभं अथवा अशुभं अथवा समाश्लिष्टं द्वाभ्यां ॥ १०१. यस्मात् प्रकटं सुव्यक्ततरं यत् मूलास्पदं द्वितयमेव नहि बहु ॥ ॥

(८—७४) १. $K_{10}$ आवमर्दितो गुफितो.
(८—९४) १. $K_{10}$ प्रभूतसंज्ञानि ! [ ज्ञ for ख्य ! ].

१०२. इदं च यत् शुभं अशुभात् अशुभंच शुभात् भवितुं न शक्नोति १०३. एत-स्माच्च शक्यते परिज्ञातुं १०४. यत् तत् किंचित् यत् शुभेन संपूर्णं संपन्नं[१]। अशुभं अस्मात् भवितुं न शक्नोति ॥ १०५. चेत् शक्नोति । पश्चात् न संपूर्णं ॥ १०६. यतः एकं किंचित् चेत् संपूर्णं उक्तं । अपरस्य कस्यचित् स्थानं न भवति ॥ १०७. चेत् स्थानं अपरस्य कस्यचित् न भवति । अपरंच किंचित् एतस्मात् न प्रभवति ॥ १०८. चेत् इअजदः उत्तमतया ज्ञानतयाच [ज्ञानितयाच] संपूर्णः । ततो ऽज्ञानत्वस्य निकृष्टत्वस्य एतस्मात् असंभूतिः परिस्फुटा एव ॥ १०९. चेत् एतस्मात् भवितुं शक्नोति । पश्चात् न संपूर्णः ॥ ११०. चेत् असंपूर्णः ततः इअजदत्वेन संपूर्णेन उत्तमेन स्तोतुं नाधिक्रियते ॥ १११. चेत् इअजदः उत्तमः निकृष्टंच एतस्मात् प्रभवति । उत्त-मतया असंपूर्णः ॥ ११२. चेत् उत्तमतया असंपूर्णः । उत्तमज्ञानतया असंपूर्णः ॥ ११३. चेत् उत्तमज्ञानतया असंपूर्णः । एवंच बुद्ध्या चैतन्येन अवबोधेन स्मृत्याच अपरैश्च विज्ञानशास्त्रैः असंपूर्णः ॥ ११४. चेत् बुद्ध्या चैतन्येन स्मृत्या अवबोधेनच असंपूर्णः । आरोग्येनच असंपूर्णः ॥ ११५. चेत् आरोग्येन असंपूर्णः । मांद्यवान् संवदति [संभवति] भवितुं ॥ ११६. चेत् मांद्यवान् संवदति भवितुं । जीवितेनच असंपूर्णः ॥ ॥

११७. चेत् कश्चित् वक्ति किल सदैव पश्यामि यत् एकस्मात् रत्नात् यथा मनुष्यः सर्वं शुभं सर्व्वंच अशुभंच कर्म्मणा एतेभ्यः सदैव प्रभवति ॥ ११८. तत् इति हेतोः यत् मनुष्यः एकेनापि न संपूर्णः ॥ ११९. असंपूर्णतया शुभस्य । अशुभं एतेभ्यः प्रभ-वति ॥ १२०. असंपूर्णतयाच आरोग्यस्य । मांद्यीयंति ॥ १२१. इति हेतोः म्रियंते ॥ १२२. यतो हेतुः मृत्योः युद्धं यत् द्वयोः प्रतिद्वंद्विप्रचरयोः अंतः एकरत्ने ॥ १२३. तत्र च यस्मिन् द्वौ प्रतिद्वंद्विप्रचारौ अंतः एकरत्ने स्यातां । मांद्यस्य मृत्योश्च संभवः परिस्फुट एव ॥ ॥

१२४. चेत् कश्चित् वक्ति यत् शुभानि अशुभानि कर्म्माणि संति । अन्यथा तु कारको नास्ति । १२५. अपरेच प्रत्युत्तरं ददति १२६. यत् कर्म्म विना कर्त्तुः भवितुं एवं न शक्नोति यथा कोऽपि प्रचारो विना रत्नात् रत्नेनच ॥ १२७. अन्यथा तु स्वतया स्वसंस्थितेः सम्मार्ज्जनायाश्च[१] असंभवः परिस्फुट एव ॥ १२८. यतश्चेन्मनुष्य क्रोधं-कुरुते । ग्वह्मनः तस्मात् दूरे ॥ १२९. चेत् ग्वह्मनः स्थानं गृह्णाति । क्रोधस्तत्र नहि ॥ १३०. चेत् मनुष्यो ऽलीकं वक्ति । सत्यं तस्मात् दूरे । सच पुमान् अलीकः आकार्यते ॥ १३१. चेत् सत्यं वक्ति । अलीकंच तत्र स्थानं न गृह्णाति । सच पुमान् सत्यः आकार्यते ॥ १३२. एवंच चेत् व्याधिः संप्राप्ता । आरोग्यं तत्र नहि ॥ १३३. चेत् आरोग्यं समागतं । व्याधिः विप्रनष्टा[१] [ विप्रणष्टा ] ॥ १३४. यथा रत्नं यत् अचंचलं भवितुं शक्नोति । १३५. चंचलताच विना रत्नेन भवितुं न शक्नोति ॥ ॥

---

(८—१०४) १. $K_{10}$ संपूर्णसंपन्नं.

(८—१२७) १. $K_{10}$ संमार्जतायाश्च.

(८—१३३) १. $K_{10}$ विप्रननष्ट (?).

१३६. उपरि अयं निबंधः संपूर्णत्वे निदर्शितः ॥ १३७. सूक्ष्मतया विवेकृतया तेन पश्येत समादिशेत ॥ ॥

[ ९. ]

१. अपरंच उपरि सत्तायां विपक्षस्य सर्व्वसाक्षितया दीनिकर्द्दप्रबंधेभ्यो ऽव-बोधार्थे[1] युष्माकं अत्र साभिज्ञाननिनं [ ०नितं ] शुद्धं ॥ २. यतः इदं च उपरि समालिखितं तच्च यत् आलेखिष्यते सर्व्वं बीजात् समारूढं हूफरवर्द्देन आदरपादिआवंदेन उप्तात् ॥ ३. मूलरक्षणाच्च अस्य अग्र्यनिर्वाणज्ञस्य आदरफरोबगस्य फ्रोषजादपुत्रस्य [ फ्रोखजाद० ] सक्तात्[1] ॥ ॥

४. बलिष्ठो मे [ चतुर्थो ][53] निबंधो दीनिकर्द्दात्—[54] "उपरि [१] सत्तायां सृष्टिविपक्षस्य [२] पूर्व्वत्वेच [३] विपक्षस्य सृष्टेः सन्निवेशाच्च । उत्तमदीनेः" ॥ ५. "स्यात्[55] [१] सत्ता सृष्टिविपक्षस्य अंतस्तमात्[1] मनुष्यस्य तनोः यावत् बीजं अस्य दृष्टिसंस्पृश्या ज्ञानावाप्त्या । ६. उपरि च तस्मिन् अंतः उपमानसीम्नि सुनिश्चिते । ७. अंतस्तमे मनुष्यस्य अंतस्तमे जीवस्य भवति[1] । ८. निरीक्षतेच संपूर्णनिरीक्षणतया अंतः सर्व्वसीमासु" ॥ ॥

९. "अहो [ एतद् ][56] यथा दुष्टज्ञानं शुभज्ञाने। १०. विप्रतारणंच शुभशीले। ११. अनृतंच सत्ये । १२. अपरेच दोषाः गुणानां सुज्ञानसुशीलसत्यैकबीजानां प्रतिपक्षाः। १३. आत्मनो दुर्गतिहेतवः ॥ १४. अन्यथा[1] [ अन्याः ] एताः अंतस्तनोः प्रचारिण्यो व्याधयः[57] अंतरंगानां तनुसम्मार्ज्जनायाः प्रतिपक्षाः तनो र्विनाशहेतवः" ॥ ॥

१५. "अन्यच्च इदं अंत र्जननीनां शैत्यं उष्णस्य रूक्षं सार्द्रस्य अपराणि विनाशकराणि संभूतिकार्याणां प्रतिपक्षाणि ॥ १६. अंतश्च युगे तमिस्रं तेजसः दुर्गंधिश्च सुगंधस्य दुष्टरूपं च सुरूपस्य दुःस्वादश्च सुस्वादस्य विषंच अमृतस्य क्षुद्रजंतवो दुष्टश्वापदाश्च उत्तमदानिनां गोपशूनां निकृष्टनराश्च उत्तमनराणां प्रतिपक्षाः ॥ १७. उपरिच युगे दुष्टग्रहाः दानविभक्तॄणां कार्यस्य प्रतिपक्षाः" ॥ ॥

१८. "उपरिच सर्व्वस्मिन् एतस्मिन् सैन्ये दृष्टिसंस्पृश्या ज्ञानावाप्त्याः तेच ये अंतः उपमानसीम्नि असंख्यानां संवित्तौ सुनिश्चितायां देवाः इअजदानां प्रतिपक्षाः" ॥ ॥

१९. [२-३] "प्रतिपक्षस्य सत्ता या पूर्व्वे सृष्टिदानात् । अस्य संप्राप्ति र्या सृष्टौ २०. पश्चाच्च सृष्टिदानात् । इयंच दात्रा [ धात्रा ] ज्ञानेन कारणेनच अभीप्सायाः दानस्य

---

(९—१) १. $K_{10}$ सर्वसाक्षतया. २ $K_{10}$ अवबोध्यच (?).
(९—३) १. $K_{10}$ सत्कार्यात्.
(९—५) १. $K_{10}$ अंतस्तस्मात्.
(९—७) १. $K_{10}$ भवितुं.
(९—१४) १. $K_{10}$ अन्यच्च.

उपायकर्म्मतयाच दत्ता सृष्टिः या कार्ये। २१. इदंच एकं वाक्यं दधाति पंच सीमाः॥ २२. (१) एका ज्ञानेन ददौ [दधौ]॥ २३. (२) एकाच कारणेन ददौ॥ २४. (३) एकाच कारणं दानेप्सायाः सृष्टेः संजातं॥ २५. (४) एकाच उपायार्थे ददौ सृष्टिं॥ २६. (५) एकाच कार्ये ददौ दाता सृष्टिं॥ २७. सत्ता या एतेषां पंचानां सीम्नां स्वयमेव दातिभिः सृष्टिभिश्च प्रकटा॥ २८. (१) ज्ञानेन दानं ज्ञानतया [ज्ञानितया] समारचनं सृष्टेः उपरि विपुलत्वे॥ २९. (२) कारणेन दत्तस्य सर्व्वज्ञानत्वात् [०ज्ञानित्वात्] प्रकटता॥ ३०. (३) कारणंच अभीप्सायाः यत् सृष्टेः जातं॥ ३१. सहैवं विवेकतया [विवेकितया] समारच॰ त्वं [०नित्वं] सृष्टेः अभीप्सायाः सृष्टेः भवितुं संवदति॥ ३२. अभीप्साकारणस्य स्वयमेव सृष्टिः रूपेण दधाति साक्ष्यं[1]॥ ३३. (४) उपायेन दत्तस्य ज्ञानेन दातिः दर्शयित्री॥ ३४. यतो ज्ञानं कामीयं। कामश्च रूपीयो भवति॥ ३५. (५) कार्ये दत्तं सत्कार्यतया सृष्टेः पृथक् पृथक् यथा-कामिन्या यथा-रूपीन्या प्रकटं" ॥ ॥

३६. "सत्तायाः प्रतिपक्षस्य पूर्व्वं सृष्टिदानात् प्रकटताः प्रभूताः॥ ३७. अस्य एका तावत् अभीप्सा या सृष्टिदानस्य॥ ३८. यथा सीमा अभीप्सायाः न सुरूपा-यते वस्तुनि कृते[1] निम्नत्वात्। ३९. ततोऽभीप्सायाः निम्नत्वं। निम्नत्वाच्च उद्वेगः। उद्वेगाच्च प्रतिपक्षस्य सत्ता पूर्व्वं अभीप्साकार्यात् यदस्ति सृष्टेः" ॥ ॥

४०. "संप्राप्तेः प्रतिपक्षस्य सृष्टौ पश्चात् सृष्टिदानात् प्रकटत्वे शस्त्रारचनं यत् दातुः [धातुः] प्रत्यभिमुखं प्रतिपक्षस्य प्रागेव प्रतिपक्षप्राप्तेः ४१. यत् सर्व्वज्ञानतया [०नितया] प्राक् सृष्टेः दातुः [धातुः] अनुरूपं ४२. समग्राणिच शस्त्राणि सृष्टेः दर्शयिता अस्ति यानि समारचितानि प्रतिपक्षाभिमुखं युद्धये [युद्धाय] रूपारचनतया [०नितया] ४३. कार्यंच सृष्टीनां रूपस्य तुल्यं कष्टावलोषितेन[1] [कष्टावलोपितेन?]॥ ४४. आसां समारचनं सैन्यं यत् प्रत्यभिमुखं प्रतिपक्षस्य शत्रोः सेनारचनोपमं॥ ४५. आसांच कार्यं रूपीयं कामीयं सर्व्वोपतापप्रतिस्खलनं अस्ति" ॥ ॥

---

## [१०.]

१. अन्यश्च[57a] निबंधः उपरि समालोचे एकत्वसमालोचिनां यस्मात् समारचनंच द्वित्वस्य[1] प्रकटायते॥ ॥

२. अहो ज्ञायते[1] यत् यो दातारं [धातारं] समीहते समाज्ञातुं। यदिच आयासं निजे जीवे ददाति। ३. सूक्ष्मतया ननु चिंतेत॥ ४. आदौ तनुं आत्मानं च निजं

---

(९—३२) १. $K_{10}$ साक्षं.
(९—३८) १. $K_{10}$ सुरूपा या ग वस्तु निज ते (?).
(९—४३) १. $K_{10}$ कष्टावलोसतेन.

---

(१०—१) १. $K_{10}$ द्वितस्य.
(१०—२) १. $K_{10}$ ज्ञायात.

अवलोकेत। ५. यत् [१] कः [२] कस्मात् [३] केनच कार्येण दत्तः ॥ ६. [४] अस्य प्रतिपक्षः प्रतिघातीच कः ॥ ७. [५] अस्य मित्रः सहायीच कः ॥ ८. [६] एनंच कल्मुखं [ कल्मषं ] कर्तुं कः क्षिपति। ९. [७] कस्माच्च रत्नात् ॥ १०. [८] असौ शोद्धुं कथं शक्नोति ॥ ॥

११. अन्यथा न समर्थो दातारं [ धातारं ] यथास्थतया परिज्ञातुं अस्यच स्वीयत्वे समागंतुं ॥ ॥

१२. यतो यदि दातेति [ धातेति ] नाम विहितं। ततो ऽस्य इमानि त्रीणि नामानि सममेव सन्निहितानि ॥ १३. दानं दीनिश्च आत्मा च ॥ १४. यतो [१] दाता [ धाता ] नाम दानात् भवतीति परिस्फुटमेव ॥ १५. [२-३] इदंच यत् दाता [ धाता ] सृष्टेः। सृष्टीः सत्कार्यत्वे [०त्वाय] ददौ [ दधौ ] ॥ १६. ऋते सत्कार्यत्वात् न विमुंचति ॥ १७. सत्कार्यताच सृष्टीनां कामं दातुः [ धातुः ] परिज्ञाय विधेया १८. अकामाच्च परिरक्षणीया ॥ १९. कामात् दातुः [ धातुः ] समाचरणं अस्य अकामाच्च परिरक्षणं आत्मनः शोधनं ॥ २०. कामंच दातुः [ धातुः ] ऋते दीने दातु [ धातु ] न परिज्ञायते ॥ २१. दीनिश्च दात्रा ( धात्रा ) विनिर्म्मितेति निर्व्विकल्पमेव ॥ ॥

२२. इदानीं[४,५,६] शक्यते परिज्ञातुं यत् इअजदो निर्म्मितवान् दीनिं परिज्ञानाय अस्य कामं [कामस्य] ॥ २३. परिज्ञानात् अस्य कामस्य शुद्धौ [शुद्ध्यै?] आत्मनः प्रकटायते दयालुत्वं पालनत्वं इअजदस्य ॥२४. शुद्धेश्च दीनेः आत्मनि [०नो?] प्रकटायते महत्त्वं मूल्यमत्त्वं दीनेः ॥२५. संशोधनात् समीहनाच्च आत्मनः प्रकटायते विप्रतारणं विमोहनंच आत्मनः ॥ २६. विप्रतारणात् विमोहनाच्च आत्मनां प्रकटायते विप्रतारको विमोहकश्च मनसां वचसां कर्म्मणां मनुष्याणां ॥ २७. सर्व्वत्र प्रकटायते विध्वंसकर्त्ता आत्मनां ॥ ॥

२८. (७) अस्माकं इह युज्यते संशोधयितुं परिज्ञातुं च यत् स विप्रतारकः आत्मनां विध्वंसकर्त्ता कस्मात् रत्नात् ॥ २९. यतो यदि एकरत्नात् दानं अपहारश्च इअजदस्य उदीर्येत। ततः कथं इअजदो दीनिं शुद्धये आत्मनो विनिर्म्मितवान् ॥ ३०. तस्मात् न युज्यते विप्रतारकं विमोहकं आत्मनां स्वीयेन ज्ञानेन कामेन उदाहर्त्तुं ॥ ३१. यदि चासौ स्वयं अस्ति दाता [ धाता ] स्वयंच विप्रतारको विध्वंसयिताच आत्मनां। ऋते कामात् अस्य किमपि न भवति। ३२. ततश्च यदि मे इअजदात् शुद्धि संयुज्यते समालिखितुं रक्षकं क करोमि ॥ ॥

३३. (८) इदानीं सर्व्वेषां सुचेतनानां मनुष्याणां इदं एतावत् संयुज्यते समवलोकितुं समाज्ञातुं ३४. यत् मे कस्मात् प्रनष्टं [ प्रणष्टं ] परिरक्षितुं च योग्यं ३५. मेच रक्षकः कः आशाच क धर्त्तव्या ॥ ३६. उपायो ऽस्य कार्यस्य अपरः कोऽपि नास्ति इअजदं यथास्थतया परिज्ञातुं ॥ ३७. यतो यथाहं उपरि समालिखं यत् न केवलं सत्ता परिज्ञातुं किंतु यथास्थत्वं अस्य कामंच उपयुज्यते अवलोकितुं ॥

---

(१०—११) १. $K_{10}$ यथाः स्छ तथा [ स्छ for स्थ ].
(१०—३०) १. $K_{10}$ युध्यते [ ध्य for ज्य ! ].
(१०—३२) १. $K_{10}$ रक्षयां (?) [ रक्षां ].

३८. अहं आलोकयं अंत जगति सर्व्वेषां दर्शनधारिणां दर्शनप्रबोधं यं दधति मूले इमे द्वे एव ॥ ३९. एकंच तत् यत् ब्रुवंति यत् समग्रं शुभं अन्यायश्च पृथिव्यां इअजदात् ॥ ४०. एकंच तत् यत् ब्रुवंति यत् समग्रं शुभं पृथिव्याः आशाच आत्मशुद्धौ [ ०शुद्ध्यै ] इअजदात् ४१. समग्रश्च अन्यायस्तनोः भयंच आत्मनः आहर्म्मनहेतोः ॥ ४२. सर्व्वेपि विभक्तित्वात् अनयो र्द्वयो र्मूलयोः खंडं खंडं भेदं भेदं प्रसारिताः संति ॥ ॥

४३. इहाहं सर्व्वेषु स्थानेषु इअजदपरिज्ञानेन यथा उपरि समालिखितं उष्णतरमनः [ ०मनाः ] संशोधनतया अस्य दीनेः कामस्य च प्रष्टा समभवं ४४. इत्येवं संशोधनाय द्वीपे हिंदुस्थाने भूमौच बहुषु विभिन्नजातिषु पर्यटितो ऽहं ॥ ४५. यतो ऽहं दीनिं न तां या पारंपर्येण मैत्रीचकार ४६. किंतु तां अभीप्सये या बुद्ध्या साक्षितया च विवेकितरा प्रतिकरणीयतरा । ४७. संसर्गत्वे [संसर्गे] प्रभूतानां विभिन्नजातीनां गतो ऽहं ॥ ४८. यावत् एकवारं ४९. यदहं तस्याः स्वामिनो रक्षायाः दीनेः उत्तमायाः शक्तेः श्रियश्च प्राणाच्च प्रभूतेभ्यो दुष्टागमेभ्यः तमस्विभ्यः संदिग्धेभ्यो दुष्टविचारेभ्यः शुद्धो ऽभूवं ॥ ५०. सर्व्वप्राणात् दीनिज्ञानस्य ५१. प्रबंधसमालोचाच्च ज्ञानिनां ५२. महादृष्टांतेभ्यः प्रबंधेभ्यो निर्व्वाणज्ञस्य आदरपादिआवंदस्य ५३. तस्माच्च निबंधात् यः कृतो हूफरवर्द्धन रोशनेन आदरफरोबगपुत्रेण ५४. यस्य "निर्म्मलनिबंधः" इति नाम निहितं ५५. तस्माच्च योऽस्य अग्र्यनिर्व्वाणज्ञस्य मुक्तात्मनः आदरफरोबगस्य फ्रोपजादपुत्रस्य [ फ्रोखजादपुत्रस्य ] ५६. उत्तमदीनिमतामग्रेसरस्य ५७. दीने र्विविच्य "दीनिकर्द्दनिबंधः" इति नाम विहितं ५८. शुद्धो ऽभूवं बहुभ्यः संदेहेभ्यो ऽजयेभ्यः छद्मभ्यो दुष्टत्वेभ्यो दर्शनानां ५९. नामांकिताच्च तस्मात् यत् विप्रतारकाणां महत्तरस्य मुख्यतरस्य दुष्टशिक्षातरस्य गुरोः मस्तर्गमानस्य[58] ६०. यस्य दर्शनं राक्षसीयं दीनिश्च विप्रतारका शिक्षाच विदुष्टा वेषश्च गुप्तप्रचारी[59] ॥

६१. सुनिश्चिती यातो ऽहं [ ज्ञानितया ] तेन बुद्धिप्राणेन दीनिज्ञानबलेन ६२. नच निविडप्रवाहतया किंतु निर्म्मलया विभिन्नदेवया दीन्या होर्म्मिज्द्न्यायिन्या ॥ ६३. यां दाता [ धाता ] होर्म्मिज्दः पुण्यात्मने जरथुश्त्राय समास्वादयत् ॥ ६४. जरथुश्त्रश्च सत्यदूततया एकाकी द्वारे कलावतो राज्ञो गुस्तास्पस्य समाजगाम ॥ ६५. असौच बलवत्या जिव्हया बुद्धिसाक्षितया हस्तोपरिविन्यस्ततया[१] ससीमवाक्यतया बहुसंदेहविभेदनतया अमिशास्पितानां परिस्फुटसाक्षिदातृतया दीनिं राज्ञो गुस्तास्पस्य निर्व्वाणज्ञानिनां च समास्वादयत् समं प्रभूतमहत्त्वेन ॥ ६६. महत्त्वं च अंतः शक्तेः शरीरिणां न विध्वस्तं ये ऽस्य गाढतरां वृद्धिं[60] ददृशुः ॥ ६७. राजा स्पुदाख्तो[१][61] जरगरश्च[62] अपरेच द्वीपीयाः बहुषु युद्धावलंबेषु रक्तप्रवाहेषु जातेषु[२] दीनिं एतस्मात् प्रत्यकुर्व्वन् ६८. यावच्च रूमस्थानं हिंदूस्थानं द्वीपे [ द्वीपे ] दीनेः प्रवृत्तिकारितायै पर्यटिताः संति ॥ ६९. अनंतरंच आम्नायेन महत्सु राजसु राजबीजेषु क्रियावत्सु

(१०—६५) १. $K_{10}$ हस्तोपरिविन्यसनतया.
(१०—६७) १. $K_{10}$ स्युदाष्ट्रो. २. $K_{10}$ यातेषु [ य for ज ].

संप्राप्ता ॥ ७०. यावच्च यावच्च महादिव्यं यत् उत्तमधातुना उपरि हृदये रेचितेन अस्य हूफरवर्ह्रस्य आदरपादस्य मारस्पिंदानपुत्रस्य अंतः राज्ये अस्य दातुः[63] साहपुरस्य[1] राज्ञां राज्ञो होर्मिज्दपुत्रस्य संवादेन समं प्रभूतजातिभिः विभिन्नजातियैः आश्मोगैः[64] ७१. तेभ्यो मुख्यतमेभ्यः आश्मोगेभ्यो ये अभीप्सुभिः [अभीप्सवः?] आकारिताः संति शुद्धश्च [ शुद्धं ? ] ॥ ॥

७२. रूमीयाश्च ये युगे युगे नास्तिकनामानो याताः संति बहून् प्रश्नान् दुष्टविचारान् एतस्याः दीनेः पप्रच्छुः ॥ ७३. नाभूत् कस्मिन्नपि प्रश्ने भ्रांतिः यः [ या ] एतस्याः दीनेः [न] विभेदितः [ विभेदिता ] ॥ ७४. निर्व्वाणज्ञाश्च परां-नगराणां सदैव अंतस्तेषां विजयधर्त्तारो बभूवुः । ७५. न यथा अपरे दर्शनीयाः येषां दीनिः गुह्यप्रचारकतया विप्रतारितानांच विमोहकारितया असत्कार्यतया अंतः वर्णेषु वृंदेषु किंचिज्ज्ञानां[65] अप्रबुद्धानां देवरूपिणां येषु ज्ञानात् बुद्धेश्च अवबोधाच्च कापि परिचिति र्न बभूव ॥ ७६. ततश्च कियतांचित् वृंदो यो बहुगुह्यतया विप्रतारितो विमोहितः तनुं प्रकटत्वे न ददौ ॥ ७७. पश्चात् प्रभूतेभ्यश्च समुदायः किंचिज्ज्ञानो ऽपरिचितन्यायो ऽमीभिः विप्रतारितः परिस्फुटो बभूव समं बह्वबद्धवाक्यतया अनृततया विभिन्नतया एतेषां दर्शनस्य ॥ ७८. बह्वबद्धत्वात् विभिन्नत्वात् न्यायपरिचितये नूतनशिक्षावज्ञो ऽत्र चिह्नयामः । ७९. तस्मात् हेतोः यत् निबंधान् निर्व्वाणज्ञानां पूर्वपुरुषाणां प्राप्तवारीकैः दारमीयैः[66] दुष्टज्ञानत्वे [प्रभूतवारिकैः सूक्ष्मत्वैः दुष्टज्ञानत्वे ? ] वाचितान् उत्तमज्ञानत्वे प्रतिपादनाय ८०. सुलोचनतया समादिष्टं पश्येत ॥ ॥

---

## [ ११. ]

१. इतः संलिखामो[1] ऽबद्धत्वं एतेषां प्रलापस्य सत्यनिरीक्षणत्वंच ॥ २. अहो पश्येत तेन ज्ञानलोचनेन ३. आदौ अमून् ये एकमूलास्पदसमालोचिनः॥ ४. येच प्रलपंति यत् एको ऽस्ति इअजदो यः पुण्यकरो ज्ञानी शक्तिमान् रक्षकः क्षमापरश्च ५. यत् पुण्यं पापं सत्यं अनृतं जीवितं मरणं च उत्तमत्वं च निकृष्टत्वं च सर्व्वं एतस्मात् ॥ ॥

६. इह एतेभ्यः पृच्छेत ७. यत् इअजदः सदैव रक्षकः क्षमापरः पुण्यकरो न्यायी सर्व्वं वर्त्तमानं अतीतं भाव्यं च वेत्ति सकलेन केनचित् कामेन कामचरः । तत् क न्यायत्वं [ न्यायित्वं ] माध्यस्थं[1] अथवा यत् एवं एवं नो ॥ ८. यतश्चेत् रक्षकः पुण्यकरः क्षमापरश्च । ततः आहर्म्मनं देवान् नरकं च एवं सकलमपि निकृष्टमाम्नायं स्वीयया रक्षया पुण्यकारितया क्षमापरतया स्वीयासु सृष्टिषु किमिति अवाकिरत् ॥ ९. चेत् न विज्ञातवान् । ततो ऽस्य ज्ञानत्वं [ ज्ञानित्वं ] सर्व्वावबोधत्वं कुतः ॥ १०. चेत् न

---

( १०—७० ) १. $K_{10}$ सहेपुर.

---

( ११—१ ) १. $K_{10}$ संल्लिखामः

( ११—७ ) १. $K_{10}$ माध्यस्छं [ स्छ for स्थ ].

समीहितवान् अन्यायं निकृष्टत्वंच सृष्टिभ्यो विना कर्त्तुं सर्व्वस्मै कस्मैचित् केवलं शुभं दातुं । ततो ऽस्य न्यायत्वं [ न्यायित्वं ] माध्यस्थं कुतः ॥ ११. चेत् नाशक्नोत् यत् न दत्तमास्ते । ततो ऽस्य सर्व्वशक्तित्वं कस्मात् ॥ १२. यत् सर्व्वं यथा निरीक्षामहे समालोचामः ॥ ॥

१३. सदैव यदि सर्व्वं शुभं अन्यायं च इअजदात् यातं वदंति । ततश्चेत् [ततश्चते] अमून् चतुरो गुणान् ये इअजदत्वेन अंतः संयुज्यते यदस्ति सर्वज्ञानित्वं सर्व्वशक्तित्वं उत्तमत्वं क्षमावत्त्वं एतस्मात् पृथक् कुर्व्वंति ॥ १४. अन्यथा उपायो नास्ति ॥ १५. चेच्च एकमपि एतेभ्यः चतुर्भ्यो गुणेभ्यः एतस्मात् पृथक् कुर्व्वं । तथापि [ ततोऽसौ] इअजदत्वेन न संपूर्णः ॥ १६. यतश्चेत् इअजदः स भवति यः सर्व्वज्ञानी सर्व्वशक्तिश्च उत्तमश्च क्षमापरश्च । ततो ऽसौ यो न सर्व्वज्ञानी न सर्व्वशक्तिः नोत्तमो न क्षमापरो न इअजदः ॥

१७. द्वितीयं च इदं यत् चेत् सर्व्वेषु केषुचित् पदार्थेषुच कामचरः स्वामी । ततो ऽसौ नगरं राज्यं च स्वीयं समग्रेभ्यः शत्रुभ्यः प्रतिघातेभ्यो ये [?] स्वीयात् कर्म्मणः किमिति एवं निरुपायं [ निरुपद्रवं? ] न दधौ यत् कस्यापि अंतः राज्ये कोऽपि उपद्रवो बलात्कारो ऽन्यायश्च आक्रंदश्च न भवेत् ॥ १८. यतः स्वामी राजाच नरः स्वामित्वे राज्ये च ततः श्लाघ्यो यदि स्वीयं नगरं राज्यं च स्वीयया बुद्ध्या एवं पातुं धर्त्तुं च क्षमो यथा स्वीयात् कर्म्मणः शत्रवः कदर्थयितुं पापं हानिंच कर्त्तुं न समर्थीयंति ॥ १९. अथ चेत् स्वीयात् कर्म्मणो दुष्टान् क्षीणयति । ततो ऽसौ स्वतो मनोमित्रान् [ मनसो मित्राणि उपद्रवेभ्यो ] विनानिधाय सर्व्वं कमपि निरुपद्रवं कर्त्तुं समर्थीयति ॥ ॥

२०. द्वितीयंच इदं यत् चेत् अधिकशक्तिः बलिष्ठः प्रधानतरः । २१. ततो ऽस्य अधिकशक्तित्वं बलिष्ठत्वं प्रधानत्वं उपरि कस्मिन् ॥ २२. यतो ऽधिकशक्तित्वं बलिष्ठत्वं उपरि शत्रुषु प्रतिद्वंद्वि भवति ॥ २३. प्रतिद्वंद्वी शत्रुश्च स्वयं न स्वीये संयुज्यते भवितुं ॥ २४. यावत् चेत् शत्रुः प्रतिपक्षी नास्ति कस्योपरि [ यस्योपरि ] अधिकशक्तिः बलिष्ठश्च भवति । २५. ततो ऽस्य अधिकशक्तित्वं बलिष्ठत्वं उपरि न समुदीर्यं ॥ २६. यतः उपरि स्वीये वपुषि गावः पशवश्च येषां प्रतिपक्षो विरोधी नास्ति बलिष्ठः अधिकशक्तयः संति [ ? ] ॥ ॥

२७. द्वितीयं च इदं यत् इअजदत्वेन महत्त्वेन निजेन ज्ञानी संतोषी किंवा नो ॥ २८. चेत् ज्ञानी संतोषी । ततो निजेन ज्ञानेन कामेन शत्रून् पापकर्म्मिणः कुर्व्वन् समग्रानपि नगरांतः विध्वंसिनो ऽवकिरन् शुभेन नगरस्य सृष्टीणां च [ ०नांच ] संतोषी बभूव [ ? ] ॥ २९. पापं अन्यायंच एषामाकांक्षा । स्वयंच उपर्येषां शत्रोः शापकरस्य संजातस्य अस्य [ शत्रुः शापकरश्च संजातः ? ] । मनुष्यान् अन्यायरतान् नरकीयान् कर्त्तुं कथं संयुज्यते ॥ ॥

३०. द्वितीयंच इदं किल सर्व्वं यत् वक्ति सत्यतया शुद्धंच वक्ति किंवा नो ॥

(११—१९) १. $K_{10}$ उपद्रवं [ ? ].
(११—२३) १. $K_{10}$ स्वीयं.

३१. चेत् सत्यतया शुद्धंच वक्ति तत्र यत् वक्ति किल पुण्ये मित्रः पापे शत्रुरसि
३२. सदैव पापं पापकर्म्मिभ्यः प्रभूतं [ प्रभूततरं ] ददाति पुण्येभ्यः पुण्यकर्म्मिणां।
३३. ततो ऽस्य सत्या वाक् क ॥ ॥

३४. द्वितीयंच इदं यदस्य कामो निकृष्टत्वे किंवा उत्तमत्वे ॥ ३५. चेत् अस्य कामो मिकृष्टत्वे । ततो ऽस्य इअजदत्वं कुतः ॥ ३६. चेत् कामः उत्तमत्वे । ततः किमिति निकृष्टाः निकृष्टताश्च प्रभूताः संति उत्तमेभ्यः उत्तमताभ्यश्च ॥ ॥

३७. द्वितीयंच इदं यत् क्षमाधरो [ क्षमाकरो ] ऽस्ति किंवा नो ॥ ३८. चेत् न क्षमाकरः । ततोऽस्य इअजदत्वं कुतः ॥ ३९. अथ चेत् क्षमाकरः । ततः किमिति वक्ति यदहं हृदयं श्रोत्रं लोचनेच मनुष्याणां विमुद्रितवान् यथैते न शक्नुवंति अवमंतुं वक्तुं कर्त्तुंच विना तेन यन्मे रोचते । ४०. संति केचित् अनिम्नत्वेन महाढ्याः[1] कृताः । ४१. संति केचित् प्रचुरप्रकारेण मृत्युना निहताः । अवशीर्णाः नरकेच दीर्घकालं निक्षिप्ताः । ४२. किल यावत् ते यान् पृथक् करोमि सुंदरं पुण्यकारितराः भवंति । ४३. इह तेच ये पृथक् कृताः पुनः अपकारं कुर्व्वंति । ४४. तस्मात् प्राक्तनीयात् प्रचुरं दोषकरतराः पापकारितराश्च संति ॥ ॥

४५. द्वितीयंच इदं । चेत् सर्व्वं यत् कुरुते ज्ञानतया [ ज्ञानितया ] कारणेनच कुरुते । ४६. ततश्चेत् कोऽपि प्रतिपक्षः प्रतिघातो नाभूत् । किमिति सृष्टयः प्राक्तनीयाः याः समारचिताः समाराधकाः देवीये अकृतादेशत्वे यदंतः मनुष्येषु दुर्गतित्वे नरकीये विपर्ययिताः संति ॥ ४७. अथ चेत् असौ न विज्ञातवान् यत् विपर्ययिष्यंति । ततो ऽस्य कार्यं विमृश्य संयुज्यते समादेष्टुं । ४८. यत इह वहवः सहस्रधाच लक्षधाच ये विनिर्म्मिताः किल अर्च्चयिष्यंति तेच राज्येन मार्यंति सर्व्वेऽपि अकृतादेशाः अशुभोपदेष्टारः संयाताः संति ॥ ४९. यतः समं तेन किंचिज्ज्ञानेन येन मनुष्यो न एवं समारच्यते विनिर्म्मीयते यथा मनुष्यस्य कामः ॥ ५०. अथ चेत् भविष्यति किंचित् यत् समारचिष्यति निर्म्मास्यति यत् न एवं उपरि आयाति भवति यथैषां कामः । द्वितीयेच पुनः समारचने तस्य कस्यचित् न स्थास्यति तस्माच्च रक्षिष्यति ॥ ॥

५१. तदसौ स्वामी सर्व्वशक्तिः सर्व्वज्ञानी यावत् इदानीं बहून् असंख्यान् कांश्चित् आरचत् एकोऽपि न एवं उपरि आयाति भवति यथास्य कामः । तथापि आरचनात् दानात् नवनवस्य सदैव न परिरक्षति ॥ ॥

५२. यथा यदि तान् प्राक्तनीयान् गणान् दाता [ धाता ] प्रियत्वाय पावकात् समारचत् कियंति चित् वर्षसहस्राणि ५३. यत् यथा वदंति किल पूजा अस्य सदैव चक्रिरे । ५४. निदाने एकेनैव आदेशेन अकृतेन यं ददौ यत् प्रणामं एतस्मै मनुष्याय प्राक्तनाय अस्माभिः कर्द्दमात् समारचिताय कुरुत । ५५. असौ शुद्धिं अयोग्यकरणेन[1] किमित्यवोचत् । ५६. ततश्च कर्द्दमेन शापेन कोपेन हीनान् लघून्

(११—४०) १. $K_{10}$ माढयाः
(११—५५) १. $K_{10}$ अजोग्यकरणेन [ ज for य ].

चकार । ५७. देवत्वे दूजत्वेच व्यावर्त्तयत् स्वर्गलोकाच्च बहिश्चकार । ५८. सहस्रतयाच जीवितं राज्यं दीर्घकालं ददौ। ५९. यत् प्रयामि दासान् आराधकान् मे अमार्गिणो विमोहितान् करोमि । ६०. असौ स्वीये कामे विरोधिनः प्रतिद्वंद्विनः चक्रे ॥ ॥

६१. निर्व्वाणे च तस्य नरस्य यः प्रियत्वाय हितत्वाय अस्याराधको महान् समं बहुभिः आराधकैः प्रणामं [ न ? ] कृतवान् समादिदेश ६२. उद्यानेच स्वर्गभुवनस्य चक्रे ६३. यत् विचरेः समग्राणि च फलानि भक्षेः ६४. विना तेनैकेन वृक्षेण यः समादिष्टो यत् मा भक्षेः ॥ ६५. असौ समं तं विप्रतारयितारं विमोहयितारंच समारचत् ६६. अंतश्च उद्याने सन्निहितवान् ६७. यं कश्चित् सर्प्पं वक्ति कश्चित् आहर्म्मनं ॥ ६८. असौ रूपंच स्वादनतायाः तृष्णायाः सर्व्वं स्वयं एतस्मै मनुष्याय ददौ ॥ ६९. पश्चात् तेन विमोहकर्त्रा विप्रतारिताः यत् तस्मात् वृक्षात् भक्षेत ॥ ७०. अस्ति कश्चित् आदमं वक्ति ॥ ७१. तेच तेन रूपेण स्वादनतायाः अस्वादन् ॥ ७२. पश्चात् स्वादनात् एवं ज्ञानवंतो बभूवुः यदेतैः उत्तमं निकृष्टंच अवलोकितं परिज्ञातंच ॥ ७३. तस्माच्च एवं प्रियत्वात् वात्सल्यात् तेनैकेनादेशेन ते विस्मृताः ७४. तस्याश्च विस्मृतेः सर्व्वं एतस्मात् कारणं ॥ ७५. समं कलत्रैरमून् महाक्रोधेन अप्रियत्वेन स्वर्गोद्यानात् बहिश्चकार ७६. हस्तेचास्य दुष्टमनसो विप्रतारकस्य विमोहकस्य समर्पितवान् ७७. यदेषां कामः स्वीय उपरि प्रचारितः उपर्येषांच कारितः ॥ ॥

७८. ननु किमस्ति अन्यायत्वं [ अन्यायित्वं ] निःकारणादेशत्वं अनुतापिबुद्धित्वं किंचिज्ज्ञानत्वं यदेतस्मात् निकृष्टतरं अन्यायितरंच ॥ ॥

७९. इदंच यत् तत् उद्यानं किमिति एवं सुप्राकारं सुदक्षतरंच न चकार यत् स विमोहनाकरः अंतर्नागमिष्यत् ८०. ननुच बहून् दासान् अर्च्चनाकरान् असौ विमुग्धान् चक्रे करोतिच ॥ ८१. असौ तेन हेतुना प्रचुरान् आचार्यान् विदग्धान् युगे युगे जगति असृजत् ८२. यत् दासान् मे हस्तात् अस्य विमोहयितुः शोधयंति ८३. मार्ग्गे प्रवाहेच सत्ये समानयंति ॥ ८४. असौ तानपि अर्च्चकान् आचार्यान् स्वीयान् येसत्कार्यत्वं [ सत्कार्यत्वे ] मनुष्यंच मार्ग्गे शिक्षायांचे सदाचारिण्यां समानीतवंतः समग्रानपि निजेच्छया विकृष्टेन मृत्युना निजघान ननाशच ८५. स यः आद्यो विमोहयिता अमार्ग्गनेता अनंतकालं जीवन् विनिर्म्मुक्तः आस्ते ॥ ८६. यावच्च इदानीं कामोऽस्य विमोहनतया अमार्ग्गनयनतया अधिकशक्तितरः कामचरतरश्च तस्मात् यः इअजदस्य ॥ ८७. यतो विमुग्धाः अमार्ग्गिणः प्रभूताः स्फीततराः संति सत्यमार्ग्गिभ्योऽमुग्धेभ्यः ॥ ॥

८८. द्वितीयंच इदं किल सर्व्वं यत् कुरुते कारणेन कुरुते किंवा नो ॥ ८९. चेत्

(११—८४) १. $K_{10}$ सिष्यायां [ स for श, and ष्य for क्ष, Quite a Prakrit form ].
(११—८७) १. $K_{10}$ विमुग्ध्याः So often !

अकारणं कुरुते । पिशाचकर्म्मा ॥ ९०. असौच यः पिशाचकर्म्मा इअजदत्वेन निर्व्वाणज्ञेन [०ज्ञत्वेन ] न युज्यते स्तोतुं ॥ ९१. चेत् कारणेन कुरुते । ९२. ततश्चेत् अस्य कोऽपि प्रतिपक्षः प्रतिद्वंद्वी नाभूत् । अस्याः समग्रायाः सृष्टेः या यथा देवाश्च मनुष्याश्च ये अकृतादेशाः प्रत्यभिमुखं कामस्यास्य योद्धारो विमोहयितारः असंख्यायाश्च सृष्टेः अलाभवत्याः आरचनेन किं ॥ ॥

९३. द्वितीयंच इदं यत् चेत् सर्व्वं वर्तमानं अतीतं भाव्यंच वेत्ति । तदस्य न युज्यते निजेन ज्ञानेन कामेनच किंचिदपि आरचितुं [ आरचयितुं ] यस्मात् पश्चात्तापः प्रतिकुलंचास्य कामस्य आदेशस्यच आस्ते ९४. अस्यच आचार्याणां कामकर्तॄणां प्रतिघाति भवति ॥ ९५. चेत् ब्रुवंति यत् इदं प्रतिद्वंद्वि मूलात् उत्तमं शुभंच समारचितं पश्चात् निकृष्टत्वे सृष्टीनां अमार्गकारित्वे व्यत्ययितं । ९६. तदिदं प्रतिवदेत यत् चेत् असौ सर्व्वशक्तिः । किमिति कामः प्रतिद्वंद्विनः व्यत्ययेन निकृष्टत्वे सृष्टीनां अमार्गकारित्वे बलिष्ठतरः प्रधानतरश्च तस्मात् यः इअजदस्य । ९७. किमिति निकृष्टत्वं अंत युगे बलिष्ठतरं उत्तमत्वात् ॥ ॥

९८. द्वितीयंच इदं यत् चेत् पापकर्म्मिणः सर्व्वेऽपि कामेनास्य । ९९. असौ मनः पापकर्म्मिणां स्वयं व्यामोहयत् । १००. असौ बीजं पापस्य स्वयं ववाप [ उवाप ]॥ १०१. चेत् समारूढं । कस्य मूले दधौ ॥ १०२. एकेच[1] निहताः एकेच[2] प्रसादपूरिताः कस्मात् प्राणात् न्यायमत्तायाः ॥ ॥

१०३. द्वितीयंच इदं यदसौ एनां भूविभूतिं कारणेन आनंदाय निजाय समाधानाय शुभायच मनुष्याणां चक्रे ददौच किंवा निःकारणं विषादाय निजाय उद्वेगाय अशुद्धये दुःखाय मरणायच मनुष्याणां ॥ १०४. यतः चेत् असौ निःकारणं चक्रे । पिशाचकार्यो ॥ १०५. निःकारणं किंचित् ज्ञानिनां अप्रतिकरणत्वात् ॥ १०६. चेत् कारणेन चक्रे असौ आनंदाय निजाय समाधानाय शुभायच मनुष्याणां ददौ । १०७. ततोऽसौ सुनिवासां संपूर्णशुभां किमिति नाकरोत् ॥ १०८. चेत् अस्य समारचनात् मनुष्याणां सृष्टेश्च आनंदः शुभंच । ततोऽस्य अपघातात् विध्वंसात् लाभः कः ॥ १०९. चेत् असौ मनः पापि न स्वयं मनुष्येषु ददौ । ततः कोऽस्ति यः ऋते आदेशात् कामाच्च अस्य मनः पापि ददाति [ दधाति ] ॥ ११०. चेत् असौ स्वयं ददौ [ दधौ ] अमीषामिह दोषं उपरि दधाति । ततोऽस्य सत्यं माध्यस्थं कुतः ॥ १११. यतो यद्यपि मनुष्याः समं किंचिज्ज्ञानेन किंचिद्बुद्ध्या तथापि व्याघ्रान् विरून्[1] [ वृकान् ] अपरांश्च क्षुद्रजंतून् यावदेते समर्थाः डिंभेषु गोस्थानेषु[2] निजेषु अंतर्न निक्षिप्यंति [ निक्षिपंति ] ॥ ११२. नो चेत् एते विनाशयंति ॥ ११३. ननु इअजदश्च पालनाकरः आहर्म्मनं देवान् स्वीयासु सृष्टीषु किमिति मध्ये निचिक्षेप ११४. यदेनां अश्रोत्रीं व्यामुग्धां दुर्गतिनीं नरकीयांच चक्रिरे ॥ ११५. चेत् विमर्शनाय चक्रे यथा

---

(११—१०२) १. $K_{10}$ एकाश्च. २. $K_{10}$ एकाश्च.
(११—१११) १. $K_{10}$ विरू [ Gujarati वरु ]. २. $K_{10}$ गोस्छानेषु [ स्छ for स्थ ].

तत् यत् ब्रुवंति यदसौ अशुभं विमर्शनाय उपरि सृष्टीनां ददौ । ११६. तदसौ पूर्व्वं तस्मात् मनुष्यान् सृष्टिंच किं न विज्ञातवान् ॥ ११७. किमसौ आचार्यो विमर्शकः सर्व्वज्ञानी अनाकार्यः ॥ ॥

११८. संक्षेपात् इदं यत् इअजदस्य चेत् कोऽपि प्रतिपक्षः प्रतिघाती नाभूत् । ततोऽसौ अनुपद्रवतया समग्रां सृष्टिं दातिंच दातुं शक्तोऽभूत् । किमिति न ददौ [ दधौ ] ॥ ११९. [ अथ ] चेत् समीहितवान् । न शक्तोऽभूत् ॥ १२०. चेत् समीहितवान् नच शक्तवान् । नच संपूर्णशक्तिः ॥ १२१. अथ चेत् असौ शक्तवान् न समीहितवान् । नच पालनाकरः ॥ १२२. चेत् असौ विज्ञातवान् ... अस्याः सृष्टेः दातेश्च यां ददामि किंचित् भविष्यति यत् न अंतः कामे मम । १२३. निदानेतु चकार । १२४. तन्ननु अयं सकलोऽपि असंतुष्टया निजेन करणेन प्रवर्तनेन कोपः शापश्च निक्षेपश्च यो निग्रहे नरकस्य निःकारणः ॥ ॥

१२५. द्वितीयंच इदं यच्चेत् समग्रं पापमनसा पापकर्म्मणा पापं यत् मनुष्याः मन्यंते ब्रुवंति कुर्व्वंतिच एवंच दुःखं मांद्यं दौष्ठ्यं[1] निग्रहोऽन्यायश्च नरकस्य विना कामेन आदेशेनच इअजदस्य भवितुं न शक्नोति । १२६. इअजदस्य कामः शक्तो नित्यश्च । १२७. यतोऽसौ स्वयंच नित्यः । १२८. इह कस्यापि नित्यात् अन्यायात् निग्रहात् शोद्धुं अनाशा [ अनाशता ] सुनिश्चिता एव ॥ ॥

१२९. यतः प्राचुर्येण प्रकटं यत् कोऽपि विद्याधिपतिः प्रवीणश्च नास्ति यः एतस्मात् अन्यायात् निकृष्टकामत्वात् अन्यथा दधाति ॥ १३०. चेत् आराधितः । तत्-प्रतिम एव तेषां आराधकानां आचार्याणां ये मनुष्येषु निरोपं इदं चक्रिरे यत् दोषं पापंच मा कुर्यात । १३१. यतः कामं आदेशंच इअजदस्य प्रतिस्खलितुं कामयंति ॥ १३२. इदंच यत् यथास्य द्वे ऽपि कामः । सकलंच पापं सकलंच पुण्यं । न प्रकटं यत् पुण्यं पुण्यकर्म्मिणां प्रभूतं प्रतिकरोति किंवा पापं पापकर्म्मिणां ॥ ॥

१३३. ननु तेच वैद्याः ये आशाये आत्मनो रोगिणां औषधानि विदधते १३४. अमीषां दुःखं मांद्यं प्रतिस्खलंति प्रेरंतिच १३५. यत्तेषां तस्मात् कर्म्मणः पुण्यं स्वीयायते । १३६. परं निग्रहे नरकस्य निःसंदिग्धं तिष्ठंति ॥ ॥

१३७. तेच ये आत्मनो वाल्लभ्याय दुर्बलेभ्यो नास्तिकेभ्यो दुःखितेभ्यो मनुष्येभ्यः किंचित् ददति १३८. तेषां नास्तिक्यं दौर्बल्यं तेभ्यो ऽपहरंति प्रेरंतिच १३९. यत्तेषां तस्मात् कर्म्मणः पुण्यं स्वीयायते । १४०. परमेषां पापं भारितरं भवति निश्चयेन ॥ ॥

१४१. चेत् वदंति यत् तेच वैद्याः औषधानि[1] ये विदधते तेच ये दुर्बलेभ्यो दुःखितेभ्यः किंचित् ददति सर्व्वेऽपि कामेन इअजदस्य । १४२. तच्चेत् इअजदो प्रतिघाती अप्रतिपक्षः । ततोऽस्य मांद्यस्य दौर्बल्यस्यच अदानं समाधानितरं सकारणतरं इअजद-

(११—१२५) १. $K_{10}$ दौस्छ्यं [ स्छ for ष्ठ ].
(११—१४१) १. $K_{10}$ ऊैषधानि [ ऊै for औ ].

त्वेच अनुरूपितरं १४३. तस्मात् यदमून् स्वयं रोगिणो दुर्बलान् कृत्वा मनुष्येषु समादिदेश यत् यूयं एतामेतान् [ यूयमेव तान् ] अरोग्यान् अपनास्तिक्यान् कुर्यात् ॥

१४४. चेत् वदंति यदस्य कामोऽयं यत् तेषां वैद्यानां दातॄणां तेन प्रसाददानेन शुभं तेभ्यः तत्र कुरुते १४५. एतांश्च स्वर्ग्गशुभेषु अनंतकालीयेषु प्रापयति । १४६. तदेतत् पश्येत यत् कथं अन्यायी अशक्तश्च यत् शुभं प्रभूतत्वंच उपरि अन्यस्मिन् संपूर्णकामे याते सति [ यातुं ] प्रभूतान् अपापान् उपद्रुतान् दुर्बलान् नास्तिकान् रोगिणो ऽन्यायागतान् कुरुते ॥ ॥

१४७. इदंच यत् चेत् शुभं प्रभूतत्वं उपरि एकस्मिन् विना उपद्रवेण दुःखेन कष्टेनच अपरस्य कर्त्तुं न शक्नोति । १४८. ततोऽसौ शक्तिकर्तृतायाः कामकारितायाः अप्रतिपक्षतायाः अननुरूपः ॥ ॥

१४९. चेत् वदंति यत् तान् रोगिणो दुर्बलान् परलोकीयेन तेन प्रसाददानेन स्वर्ग्गशुभेषु अनंतकालीयेन प्रापयति । १५०. तश्चेत् असौ प्रसाददानं यत् परलोकेन विना अन्यायेन इहलोकस्य दातुं न शक्तः । नच संपूर्णशक्तिः ॥ ॥

१५१. इदंच यदस्य उपद्रवकारित्वं यत् इहलोकेन निःसंदिग्धं प्राक् प्राप्तं निःकारणंच । १५२. प्रसाददानंच यत् परलोकस्य संदिग्धं अप्रतिकरणीयंच पश्चात् उपद्रवकारित्वात् ॥ १५३. यथा उपद्रवः आद्यो निःकारणः प्रसाददानं यत् पाश्चात्यं सकलमपि निःकारणतया ग्रहिलतयाच १५४. इदंच यत् किमपि ऋद्धत्वं पाश्चात्यं उपद्रवे आद्ये निःकारणतया नावलोक्यते ॥ ॥

१५५. द्वितीयंच इदं यत् एतेभ्यः त्रिभ्यः प्रकारेभ्यः एकस्यापि भवितुं अनुपायः ॥ १५६. [ १ ] एकंच किल यत् किंचित् अंतरस्मिन् जगति वर्त्तमानं अतीतं भाव्यं सकलमपि कामेनास्य किंवा [ २ ] [ अथवा ] नो । १५७. [ ३ ] अथवा अस्ति यदस्य कामेन अस्ति यत् नो ॥ १५८. [ १ ] यथा किंचिदपि नावलोक्यते यत् न शुभं अथवा अशुभं अथवा सम्मिश्रं द्वाभ्यां । १५९. चेत् वदंति यदस्य समग्रमपि कामः । ततोऽस्य शुभं अशुभंच द्वेऽपि कामः ॥ १६०. चेत् अस्य शुभं अशुभंच द्वेपि कामः । अपूर्णकामी ॥ १६१. यतः एकेनापि न संपूर्णः ॥ १६२. असौच अपूर्णकामी अपूर्णस्वयं शक्नोति भवितुं १६३. यथा उपरि निदर्शितं ॥ १६४. [ २ ] चेत् अस्य किमपि न कामः । १६५. कस्यापि कामस्य अभावान् नास्तिकामः ॥ १६६. असौच यो नास्तिकामो रूपकर्म्मा ॥ १६७. असौ यो रूपकर्म्मा रूपितश्च कृतश्च ॥ १६८. [ ३ ] चेत् अस्ति यदस्य कामः अस्ति यदस्य न कामः । १६९. किंचिदपि अंतर्जगति नावलोक्यते यत् न शुभं नच अशुभं ॥ १७०. तश्चेत् इअजदस्य शुभं कामः । ततो ऽसौ अशुभस्य अकामी परिस्फुट एव ॥ १७१. तच्च यत् अशुभं न कामेनास्य ॥ १७२. चेत् अस्य अशुभं कामः । ततो ऽसौ शुभस्य अकामी अनुमानेन ॥ १७३. तच्च यत् शुभं न कामेनास्य ॥ १७४. चेत् तच्च यत् शुभं कामः इअजदस्य । तच्च यत् अशुभं अन्यकामात् समुद्भूतं परिस्फुटमेव ॥ १७५. चेत् तत् यत् अशुभं कामोऽस्य ।

तच्च यत् शुभं अन्यकामात् यातं अनुमानेन॥ १७६. अनुमानतया एव प्रकटीयते प्रतिद्वंद्वी कामस्य इअजदस्य॥ ॥

१७७. चेत् अशुभं मनुष्यात् प्रभवतीति ब्रुवंति। १७८. तद्यथा मनुष्यो न नित्यः। स्वयं तत् अनुमानेनैव अथवा अशुभं प्राक् मनुष्यात् समुद्भूतं अथवा पश्चात् १७९. अथवा समं मनुष्येण समुत्पन्नं॥ १८०. चेत् प्राक् मनुष्यात् समुद्भूतं ब्रुवंति। १८१. तद्यथा ऋते इअजदात् अन्यः कोऽपि आरचिता दाता [आरचयिता धाता] नाभूत्। १८२. तत् अशुभं अथ इअजदो ददौ [दधौ] अथवा स्वं स्वयं ददौ [दधौ] अथवा स्वयं सदैव अभूत्॥ १८३. चेत् पश्चात् मनुष्यात् संजातं वदंति। १८४. तच्चेत् रत्नं मानुषीयं सकलमपि दातिः इअजदस्य। १८५. मनुष्यस्यच अशुभं इअजदः अंतः रत्ने न ददौ। १८६. कर्म्मणा कथं एतस्मात् प्रभवति॥ १८७. चेत् एते अशुभं कर्म्मणा चक्रुः ऋते कामात् इअजदस्य १८८. इअजदस्यच परिज्ञानं कारणेन तेषां समुत्पन्नं। १८९. ततः इअजदो निजेन कामेन असंपूर्णः १९०. मनुष्याश्च कामेन आदेशं इअजदस्य प्रतिस्खलितुं प्रतिद्वंद्वि कामस्य इअजदीयस्य अशुभं कर्त्तुं बलिष्ठा अधिकशक्तयश्च संति। १९१. इअजदश्च अंतः निजे कामे निजदासानांच प्राणे अप्रधानतरः प्रकटः॥ १९२. चेत् वदंति यदमून् पश्चात् नरकनिग्रहेषु घोरतरेषु प्रापयति। १९३. तच्चेत् इअजदः शक्तः कर्त्ता पापकरणस्य न विमोचनं मनसश्चैषां अपहरणं लाभितरं रक्षायाश्च इअजदस्य अनुरूपितरं कर्त्तुं विमुक्तात् १९४. अनुमानेनैव तेन संतुष्टोऽभूत्॥ १९५. पश्चात् संतुष्टोऽपि स्वीयां सृष्टिं निगृह्णाति॥ १९६. कार्येनैकेनापि यत् विमृशामः अथ अशक्तित्वं अथवा किंचिज्ज्ञानत्वं अथवा हीनोत्तमत्वं एतस्मात् प्रकटायते॥ ॥

१९७. चेत् वदंति यत् इअजदो ऽशुभं ददौच [दधौ च] आरचत् [आरचयत्] तेन हेतुना यत् यावत् मनुष्याः उत्कर्षमत्तां शुभस्य अधिकं जानंति। १९८. तदेतत् पश्येत यच्चेत् अशुभं परिज्ञानाय शुभस्य अभीष्टं लाभवच्च। ततोऽस्य अशुभं अस्ति उत्तमः कामः॥ १९९. चेत् अस्य अशुभं अस्ति उत्तमः कामः अभीष्टं लाभवच्च। तस्य यत् वदंति यदस्य अशुभं न कामः निराकर्त्तुं॥ २००. तच्च यत् वदंति यदसौ मरणं दुःखं दौष्ठ्यं तस्मै हेतवे ददौ [दधौ] यत् यावत् मनुष्याः उत्कर्षमत्तां जीवितस्य आरोग्यस्य शक्तेश्च अधिकतरं अवगच्छंति २०१. अंतश्च इअजदे त्रिधाप्रहरककारितरा भवंति। २०२. तदेतत् पश्येत यत् यथा [कथं] निःकारणं कर्म्म। तेन प्रकारेण असौ यो मूल्यविक्रयी विषौषधस्य वृद्धये विषं मनुष्येभ्यो ददाति। २०३. किल यावत् विषौषधं महत्तरं मूल्यमत्तरंच विक्रीणाति [विक्रीणीयात्] ॥ २०४. इयं कस्मात् मध्यस्थकर्म्मता [०तः] यत् परिज्ञानाय मूल्यमत्तां शुभस्यापरस्य दुःखं मरणं अन्यायंच उपरि अन्यस्मिन् प्रतिक्षिप्स्यति॥ ॥

२०५. द्वितीयंच तत् यत् समुदायीकाः एके तेभ्यो वदंति यत् इअजदः सकलाभिः सृष्टिभिः दातिभिश्च पार्थिवः। २०६. यतः सृष्टयः समग्राः तस्य स्वाधीनाः संति।

२०७. यथास्य रोचते यदस्य रोचते उपरि तासां कुरुते नच बलात्कारकरः। २०८. यतो बलात्कारः स यं उपरि कस्यचित् अस्वाधीनस्य कुर्वंति। २०९. ततः स यः केषांचित् सर्व्वस्वाधीनानां यथास्य रोचते उपरि तेषां कुरुते नच बलात्कारकरः। २१०. तदहो अवबुध्येत यच्चेत् पार्थिवत्वात् यो बलात्कारं कुरुते नच बलात्कारी आकार्यः। २११. तत् असौच यः पार्थिवो ऽनृतं वक्ति सत्यवाक् अस्ति। २१२ असौच यः पार्थिवत्वात् दोषं पापं चौर्यं अपहारंच कुरुते नच पापकारी आकार्यः॥ २१३. एवं यथा तत् यत् हूफरवर्द्दरोशनः आदरफरोबगस्य पुत्रः प्रतिरूपतया प्रत्यवोचत्। २१४. यत् तैः मनुष्यैको दृष्टो यो गर्द्दभीं सदैव मश्नाति॥ २१५. यदिच तैः तस्मात् पृष्टं यदिदं गर्ह्यतरं कार्यं किमिति कुरुषे। २१६. असौच शुद्ध्या प्रत्यवोचत् यत् गर्द्दभी मे स्वाधीना॥ ॥

२१७. द्वितीयंच इदं एतेभ्यो ननु पृच्छेत। २१८. यत् इअजदः एताः सृष्टीः दातीश्च याश्चकार सन्मुखं [ संमुखं ] तासां मित्रः किंवा शत्रुः॥ २१९. चेत् सृष्टिमित्रः। ततोऽस्य न युज्यते अशुभं अन्यायंच सृष्टीनां समीहितुं दातुंच॥ २२०. स्वीयानां सृष्टीनां विधूननात् अन्यायाश्चासां कदाचित् तृप्तो न बभूव॥ २२१. चेत् सृष्टिशत्रुः। ततो ऽस्य न युज्यते निजबलिष्ठज्ञानेन तत् किंचिदपि समारचितुं दातुं यदस्य शत्रुं [ शत्रु ] असानुकूलंच। असौच सम्मुखं कामं युद्ध्यति॥ ॥

२२२. इदंच ननु पृच्छेत। २२३. यत् इअजदः सदैव शुभज्ञानी सुराजा समृद्धिकरः २२४. किंवा दुष्टज्ञानी कुराजा बलात्कारकरः २२५. अथवा अस्ति कदाचित् यत् शुभज्ञानी सुराजा समृद्धिकरः २२६. अस्ति कदाचित् यत् दुष्टज्ञानी कुराजा बलात्कारकरः॥ २२७. चेत् सदैव शुभज्ञानी सुराजा समृद्धिकरः। २२८. ततोऽस्य न स्यात् अंत नगरे राज्ये बलात्कारः उपद्रवः आक्रंदश्च॥ २२९. अस्य सृष्टिमित्रता सृष्टेश्च सम्मुखमस्य मित्रता केवलैव। २३०. इति हेतोः उपरि स्वीयानां सृष्टीनां पालनाकरः। २३१. अस्य सृष्टिश्च त्रिधाप्रहरककारिणी सम्मुखंच स्तुतिकरा केवलं मित्राच। २३२. अस्य नामच इअजदीयं अनुरूपं आत्मनः॥ २३३ चेत् दुष्टज्ञानी कुराजा बलात्कारकरः। १३४. ततः स्वयमेव सृष्टिषु केवलः शत्रुः अस्य सृष्टिश्च सम्मुखं एवंविधा। २३५. इति हेतोः सृष्टीनां विभ्रंशयिता विनाशयिता विमोहनाकरः। २३६. अस्य सृष्टिश्च एतस्मात् आक्रंदिनी सम्मुखं युद्धकारिणी केवला विरोधिनी। २३७. अस्य नामच इअजदीयं अननुरूपनाम–सन्निभं॥ २३८. अस्य नित्यत्वाच्च सृष्टीनां अनंतकालीयात् उपद्रवात् अन्यायात् निर्भयी–भवितुं अनाशा एव॥ २३९. चेत् अस्ति कदाचित् यत् सुराजा शुभज्ञानी समृद्धिकरः अस्ति कदाचित् यत् अन्यथा व्यत्ययितः एतस्मात्। २४० ततो ऽस्य मित्रता सृष्टीनां समला॥ २४१. समलमित्रत्वाच्च समलकर्म्मा॥ २४२. समलकर्म्मत्वाच्च समलः स्वयमपि प्रकटायते॥ २४३. अस्य सृष्टिश्च सम्मुखं समलमित्रा॥ २४४. समभागात् नो चेत् [ नच ] मित्रा अस्य नच विरोधिनी। नच त्रिधाप्रहरकरा अस्य नचाक्रंदिनी। नच स्तुतिकरा अस्य नच निंदाकरा॥ अमुना प्रकारेण उपरि सर्व्वासां सृष्टीनां चित्रकृत् प्रकटः॥ ॥

२४५. द्वितीयंच इदं यत् यथा सर्व्वं किंचित् यदंत जगति एतस्मात् नामद्वयात् शुभस्य अशुभस्य नो बहिः। २४६. तच्चेत् शुभं अशुभंच सर्व्वं इअजदात् कामेनच इअजदस्य उद्गीर्यंते। २४७. तत् वराकः आहर्म्मनो निरर्थकं अपकीर्त्तितः अपापो ऽमूलास्पदश्च कदाचिदपि विरुद्धोऽ पहारीच नाभूत् नच भविष्यति ॥ ॥

२४८. तच्च यत् अंतः आगमे वक्ति यत् आहर्म्मनो ऽपहर्त्ता बभूव अमून् [तैश्च] स्वर्गात् बहिः कुरुते [कृतः]। निरर्थकं। २४९. यतस्तच्च अपहारित्वं अकृतादेशत्वं सर्व्वं कामेन इअजदस्य ॥ ॥

२५०. चेच्च शुभं इअजदात् कामेनच इअजदस्य अशुभंच मनुष्यात् उद्गीर्यंते। ततः आहर्म्मनस्य अमूलास्पदस्य अपापस्य अस्य शापो निंदाच निरर्थकं ॥ ॥

२५१. चेत् प्रवृत्तोऽयं सकलोऽप्यन्यायो ऽशुभं न विभिन्नरत्नत्वात् किंतु स्वत्वात् एकरत्नत्वाच्च आत्मनः इअजदस्य। २५२. तत् इअजदः स्वीयाभिमुखं शत्रुः प्रतिघातीच अस्ति ॥ २५३. इदंच यत् ऋते रत्नात् पापस्य पापं समुद्भूतमिति वक्तुं अतीव विमूढता ॥ २५४. यथा पापस्य रत्नात् उत्तमात् गणना विमूढा तथा आहर्म्मनस्यापि यो मूलं मूलास्पदं अस्ति सकलस्य पापस्य दातेः सृष्टेश्च इअजदस्य गणनं विमूढतरं ॥

२५५. संक्षेपात् इदं यच्चेत् आद्यं किंचित् अस्ति यत् न अंतः कामे इअजदस्य। चेत् सर्व्वं किंचित् कामेन इअजदस्य। कोऽपि न पापकर्म्मा। २५६. गुरुश्च दीनिश्च विनिर्मिता निरर्थकं ॥ २५७. चेत् पापकारितया कश्चित् अवलोपितुं युज्यते। तदसौ अवलोपितुं योग्यतरो यो मूलं कर्ता धर्त्ता आरचयिताच सकलस्य अशुभस्य पापस्यच ॥

२५८. चेत् अशुभं पापंच आहर्म्मनात् अथ [वा] मनुष्याच्च उद्गीर्यंते। तद्यथा ते सर्व्वेऽपि आरचिता दत्ताः इअजदेन संति। ततो मूलनिधानं सर्व्वं [सर्वस्य] असौ यो मूलकारणं अशुभस्य २५९. अशुभात् अशुभतरं ॥ ॥

२६०. इदंच ननु पश्येत यत् समग्राण्यपि दर्शनानि स्वीयेभ्यो गुरुभ्यः प्रवृत्तानि इदं वदंति यत्तैः उक्तं आदिष्टंच निजेषु गृथेषु यत् पुण्यं कुर्यात् [कुरुत] पापात् परिरक्षेत। २६१. विमोहनत्वात् इदं न विमृशंति यत् पापं यदादिष्टं यत् मा कुर्यात् [कुरुत] यः कुरुते नरके अनंतकालं निक्षेपयामि। तत् कुतः कस्मात् मूलात् युज्यते भवितुं ॥ २६२. यतश्चेत् सकलमपि इअजदात्। ततोऽस्य अदानं समाधानतरमाशिष्यत पश्चात् दानात् प्रकटत्वे समानीतात् एतस्माच्च परिरक्षितुं समादिष्टात्। २६३. यदिच किमपि लाभं हेतुंच दानस्य आरचनस्य अशुभस्य नावलोकामहे ॥ ॥

२६४. द्वितीयंच अंतस्तेषां आगमेषु उपरि पुण्यस्य पापस्यच असंबद्धतया वक्ति २६५. यत् [१] पुण्यं पापंच द्वितयमपि मत्तः। २६६. न देवाः नच राक्षसाः समर्थाः संति कस्यापि विपत्तिकरणे। २६७. न कश्चित् दीनिं प्रत्यकरोत् पुण्यंच चकार न कश्चित् अगदीवित्वेन[67] प्रचचार पापं च चक्रे विना कामेन मे ॥ २६८. अंतः सर्व्वेषु आगमेषु प्रभु-

रतया प्रचर्य आलिखेत् [आलिखति?] शापं सृष्टिषु कुर्यात् [करोति?] २६९. यत् किमिति मनुष्याः तत् पापं यदहं तैः [न ?] कामयामि कामयंति कुर्व्वंतिच ॥ २७०. अधिकं कामेन कर्म्मणाच स्वीयहस्तीयेन भवति तेषां निग्रहः [निग्रहं] उपरि वपुषि [करोति ?] आत्मानंच [ आत्मनश्च तेषां ? ] त्रासयति ॥ २७१. अन्यस्मिन् स्थानेच वक्ति यत् [ २ ] अहं स्वयमस्मि विमोहनाकरो मनुष्याणां । यतश्चेत् मे कामे स्यात् ततोऽहं मार्गं सत्यं दर्शयामि। विना मे कामेन यत् नरकं प्रयांति ॥ २७२. अन्यस्मिन् स्थानेच वक्ति यत् [ ३ ] मनुष्याः स्वयं संति कर्त्तारः पापस्य ॥ २७३. अमीभिस्त्रिभिः प्रकारैः इअजदः उपरि स्वीयासु सृष्टिषु विभिन्नरीत्या साक्ष्यं ददाति ॥ २७४. [ १ ] एकंच इदं यत् स्वयं आहर्म्मनः ॥ २७५. [ २ ] एकंच इदं यत् स्वयं अस्ति विमोहनाकरः सृष्टेः ॥ २७६. अन्येनच शृंगारेण स्वीयां सृष्टिं समं आहर्म्मनेन विमोहकारितया समभागिनीं कुरुते किल अस्ति यत् अहं करोमि अस्ति आहर्म्मनः ॥ २७७. [ ३ ] तेन यत् वक्ति यत् मनुष्याः पापं स्वयं कुर्व्वंति । तदसौ स्वीयं वपुः दूरतया पापात् समं आहर्म्मनेन समभागि चक्रे ॥ २७८. यतश्चेन् मनुष्याः पापं कुर्व्वंति निजरत्तत्वात् निजव्यामूढत्वात् । ततः इअजदः समं आहर्म्मनेन पापात् दूरे ॥ २७९. यतो यथा न इअजदात् नच आहर्म्मनात् ॥ ॥

२८०. द्वितीयंच तेभ्यो ये मुथजरीकाः[63] आकार्यंते ननु पृच्छेत २८१. यत् इअजदस्य समग्रान् मनुष्यान् स्वतंत्रकामतया पापात् परिरक्षितुं नरकाच्च शोधयितुं स्वर्गंच नयितुं [नेतुं] कामः किंवा नो ॥ २८२. चेत् वक्ति यत् नो । २८३. तदसौ निर्व्विवेज उपरि हीनोत्तमत्वे इअजदस्य । निकृष्टत्वं अस्य कामः । २८४. इति हेतोः इअजदत्वेन स्तोतुं न योग्यः॥ २८५. चेत् वक्ति यदस्य कामः। २८६. तदसौ निर्व्विवेज उपरि उत्तम कामत्वे इअदस्य। २८७. इति हेतोः इअजदत्वेन स्तोतुं योग्यः ॥—२८८. इदंच यदसौ कामकर्त्तुं शक्तः किंवा नो ॥ २८९. चेत् वक्ति यत् नो। २९०. ततो ऽसौ निर्व्विवेज उपरि अशक्तत्वे इअजदस्य तेन योऽस्य कामः । २९१. इति हेतोः इअजदत्वेन सर्व्वशक्तिना स्तोतुं न योग्यः ॥ २९२. चेत् वक्ति यत् कामकर्त्तुं शक्तः । २९३. तदसौ निर्व्विवेज उपरि शक्तित्वे [शक्तिमत्त्वे] तस्य योऽस्य कामः।२९४. इति हेतोः इअजदत्वेन सर्वशक्तिना स्तोतुं योग्यः॥ —२९५. द्वितीयंच इदं यश्चेत् असौ कामंकर्त्तुं शक्तः कुरुते किंवा नो ॥ २९६. चेत् वक्ति यत् कुरुते । २९७. ततः प्रकटीकृतं स्यात् उपरि सर्व्वेषु मनुष्येषु प्रतिरक्षणं यत् पापात् शोधनंच यत् नरकात् समानयनं स्वर्ग्गलोके ॥ २९८. इदं तत् यदस्य सत्तायाः अप्रकाशयितृ निजदीनेश्च असत्यकारं ॥ २९९. चेत् वक्ति यदसौ कामं कर्त्तुं शक्तः परं न कुरुते । ३००. ततोऽसौ निर्विवेज उपरि अप्रतिपालकत्वे इअजदस्य मनुष्यशत्रुत्वं निजकामाप्रवृत्तित्वे ॥ ३०१. यतश्चेत् कुरुते । अस्यात्मनो न हानिः मनुष्याणांच लाभः अस्यच निजकामप्रवृत्तिः ॥ ३०२. चेत् न कुरुते । अस्यात्मनो न लाभः मनुष्याणांच हानिः अस्यच निजकामाप्रवृत्तिः ॥—३०३. द्वितीयंच इदं यत् कामेन न कुरुते किंवा अकामः ॥ ३०४. चेत् वक्ति यत् कामेन न कुरुते । ३०५. ततोऽसौ निर्व्विवेज यत् इअजदः शुभकामी अस्य शुभं कर्त्तुं न कामः ॥ ३०६. इदं असंबद्धत्वात्

अवमंतुमपि कुत्सितं ॥ ३०७. चेत् वक्ति यत् अकामः इति हेतोर्न कुरुते । ३०८. ततोऽसौ निर्विवेज उपरि कृशत्वे इअजदस्य अंतः स्वतायां अथवा सत्तायांच विध्वंसयितुः अस्य कामं ॥ ॥

३०९. संक्षेपात् इदं यदस्य जगतः प्रवृत्तिकर्त्ता अप्रतिपक्षो ऽप्रतिद्वंद्वी संपूर्णो ज्ञानत्वेन [ज्ञानित्वेन] उत्तमत्वेन [शक्तिमत्त्वेन] शक्तित्वेन स्यात् । इदं सकलमपि अननुरूपकर्म्मत्वं उपद्रवो ऽन्यायश्च दुःखं कष्टंच प्रभूतं मनुष्याणां अपरासां च सृष्टीनां न भवेत् ॥ ३१०. यतश्चेत् प्रवृत्तिकर्त्ता अप्रतिपक्षो ज्ञानत्वेन च [ज्ञानित्वेनच] संपूर्णः । अशुभस्य असंभवने उपायं औषधंच अशुभं अपनेतुंच जानाति ॥ ३११. चेत् उत्तमत्वेन संपूर्णः प्रतिपालकश्च । अशुभसंभवने प्रथमत एव अकामी अभाविकामश्च ॥ ३१२. चेत् शक्तित्वेन [शक्तिमत्त्वेन] संपूर्णः । अशुभं लवस्यापि असंभवने शक्तः ॥ ३१३. ननु यथा अंत र्जगति यस्य प्रवृत्तिकर्त्ता इअजदो ऽस्ति अशुभस्य सत्ता निःसंदेहतया दृश्यतरा । पश्चात् एतस्मादपि एतावत् न पृथक् यदथवा प्रवृत्तिकर्त्ता प्रतिपक्षवान् अथवा अप्रतिपक्षः ॥ ३१४. चेत् अशुभस्य असंभवने उपायं औषधंच अशुभं अपनेतुं न जानाति । प्रकटायते ततो ऽपूर्णज्ञानत्वं इअजदस्य ॥ ३१५ अथ चेत् अस्य अशुभं अस्ति उत्तमः कामः । प्रकटायते अपूर्णोत्तमत्वं यदस्य कामस्य ॥ ३१६. अथ चेत् अशुभस्य असंभवने अपनयनेच न शक्तः । प्रकटायते असंपूर्णशक्तित्वं इअजदस्य ॥ ३१७. चेत् ज्ञानत्वेन [ज्ञानित्वेन] अथवा उत्तमत्वेन अथवा शक्तित्वेन [शक्तिमत्त्वेन] एकेनापि न संपूर्णः । ततः इअजेदत्वेन सर्व्वशक्तिना सर्व्वोत्तमेन सर्व्वज्ञानिना स्तोतुं अर्चितुंच न योग्यः ॥ ॥

३१८. इदंच ननु जानीयात यत् यथा कश्चिदपि विद्यमानः पदार्थो यः कर्त्ता कामवान् विना यथास्थकियत्तया न शक्तो बभूव । ३१९. तच्चेत् दातुः [धातुः] मूलसत्ता इअजदत्वं अस्य यथास्थताच उद्योतत्वं सुरूपत्वं सुगंधत्वं पवित्रत्वं उत्तमत्वं ज्ञानत्वं [ज्ञानित्वं] । ततस्तत् यत् यथा तिमिरत्वं कुरूपत्वं दुर्गंधित्वं मलिनत्वं निकृष्टत्वं अज्ञानत्वं स्वयं देवीयं यथास्थत्वं एतस्मात् दूरे उपयुज्यते भवितुं ॥ ३२०. चेत् अस्य मूलसत्ता काचित् देवत्वं अस्य यथास्थताच तिमिरत्वं कुरूपत्वं दुर्गंधित्वं मलिनत्वं निकृष्टत्वं अज्ञानत्वं । ततस्तत् यत् इअजदीयं यथास्थत्वं एतस्मात् बहिरास्ते ॥ ३२१. चेत् एको ऽस्ति यस्येदं सकलं अस्यैव अंतः स्वतायां अविक्तायां समाश्लिष्टं । ततो ऽस्य अविभक्तत्वात् शुभेन अंत र्निजे ऽन्याये विभक्तत्वं नास्ति ॥ ३२२. ननुच आशाकराणां आशा विलीना ॥ ३२३. यतो ऽसौच यः पुण्यकर्म्मत्वात् स्वर्गे प्रयाति तत्रापि अशुभेन अन्यायेन ॥ ३२४. यतस्तत्रापि शुभस्य अशुभात् पृथक् विभक्ति र्नास्ति ॥ ३२५. चेत् किंचित् शुभं अस्ति यत् विभिन्नं अन्यायात् । ततो ऽन्यायो ऽप्यस्ति यः शुभात् पृथक् विभक्तः ॥ ३२६. इदंच प्रसिद्धमेव यत् शुभस्य अन्यायस्यच विभिन्नत्वं विभिन्नरत्नात् ॥ ३२७. यत्तयोः विभिन्नत्वं विभक्तिश्च द्वितीयाद्विभिन्नरत्नत्वात् द्वयो-

मूलयोः। प्रकटा ततः आशाकराणां आशा सत्या ॥ ३२८. तेषांच ज्ञानता [ ज्ञानिता ] सहायिनी ॥ ॥

३२९. इदंच ननु जानीयात यत् सकलमपि वाक्यं यत् न निजेन सीम्ना । अशृंगारं अनभिलषणीयंच ॥ ३३०. इदंच यत् सीमा इअजदत्वस्य मुख्यतरा ज्ञानता [ ज्ञानिता ] ॥ ३३१. सीमाच ज्ञानतायाः [ ज्ञानितायाः ] एका लाभवत्कर्म्मता ॥ ३३२. लाभवत्कर्म्मता अहानिकारिता ॥ ३३३. हानिकारिता प्रकारैस्त्रिभिः ॥ ३३४. एकाच सा यदात्मनो न लाभः अन्येषांच हानिः ॥ ३३५. एकाच सा यदन्येषां न लाभः अस्यात्मनो हानिः ॥ ३३६. एकाच सा यदात्मनश्च हानिः अन्येषांच हानिः ॥ ३३७. इअजदस्यच ज्ञानकार्यिणः आरचनात् आहर्म्मनस्य देवानांच आत्मनो न लाभः अन्येषांच हानिः ॥ ३३८. अस्यैव निजकामस्य निजकर्म्मत्वात् अप्रवृत्तिः सदैव प्रकटायते ॥ ॥

३३९. इदंच यत् चेत् इअजदस्य कामः उत्तमत्वं। ३४०. अस्यच कामो नित्यः। ३४१. अनुरूपिणाच कामेन शक्तः आस्ते । ३४२. किल मूलात् यावत् निर्व्वाणं अंत जगति सर्व्वं उत्तमत्वं सदाचारत्वं [ ०रित्वं ] इअजदकामस्य प्रदास्ते [ प्रदत्तमास्ते ]। ३४३. तन्ननु प्रकटमेव यत् निकृष्टत्वं अनाचारत्वं [ ०रित्वं ] प्रभूतं विस्फीतं सदैव प्रचरति। ३४४. पश्चात् अस्मादेकस्मादेव। अथवा कामेन इअजदस्य सदैव प्रचरति अथवा अकामेन ॥ ३४५. चेत् कामेन इअजदस्य सदैव प्रचरति । तत् स्पष्टमेव यदस्य कामश्च निकृष्टत्वे एवं यथा उत्तमत्वे। ३४६. अथवा कामेन शक्तो विपर्ययीच॥ ३४७. यथा कामः ऋते हेतोः अथवा ऋते विभ्रामयितुः न विपर्ययति । ३४८. तत् एतस्मात् द्वितयात् एकं । अथवा हेतुत्वात् अथवा अन्योऽस्ति विभ्रामयिता अस्य कामं ॥ ३४९. चेत् न कामेन इअजदस्य सदैव प्रचरति । ३५०. ततः स्पष्टमेव यत् इअजदः अंतः स्वीये कामे पीडितः। अस्य कामो न पूर्णः। ३५१. अथवा अस्य अस्ति विरोधी यो निबंद्धा कामं ॥ ॥

३५२. इदंच ये वदंति यत् इअजदः आदमाय आदिदेश यत् अस्मादेकस्माद्वृक्षात् यः अंतः स्वर्गे मा भक्षेः। ३५३. तेभ्यो ननु पृच्छेत ३५४. यत् आदेशो यं इअजदः आदमाय ददौ किल एतस्मात् वृक्षात् मा भक्षेत शुभो ऽभूत् किंवा अशुभः ॥ ३५५. चेत् आदेशः शुभो ऽभूत्। तत् स्पष्टमेव यत् वृक्षो ऽशुभो ऽभूत् ॥ ३५६. तन्न युज्यते इअजदस्य किंचित् अशुभं आरचितुं ॥ ३५७. चेत् वृक्षः शुभोऽभूत् आदेशश्च अशुभो ऽभूत्। तन्न युज्यते इअजदस्य अशुभं आदेशं दातुं ॥ ३५८. चेत् वृक्षः शोभनो ऽभूत् असौ आदेशंच अखादने ददौ। तत् उत्तमत्वे प्रतिपालत्वेच इअजदस्य अननुरूपं शुभं दासेभ्यो ऽपापेभ्यः स्वीयेभ्यो ऽवगोपितुं ॥ ॥

३५९. इदंच ये वदंति यत् इअजदः सर्व्वं यं समीहते प्रबोधे मार्ग्गेच सत्ये समानयति असौ तेनच प्रसाददानेन शुभप्रवृत्तौ अनंतायां प्रापयति ३६०. यंच न समीहते

तं अदीनित्वेन इअजदापरिज्ञानत्वेन समुत्सृजति। असौच तेन हेतुना नरके अभ्यायेच अनंते अवकिरति [ अवपतति ]। ३६१. तेभ्यो ननु पृच्छेत। ३६२ यत् असौ उत्तमो यस्य रुचितं कामश्च दीन्या प्रबोधेनच इअजदस्य मार्गेणच सत्येन। किंवा असौ यस्य रुचितं कामश्च अमार्ग्गत्वेन अदीनित्वेन इअजदापरिज्ञानत्वेन॥ ३६३. चेत् वक्ति यदसौ उत्तमो यस्य रुचितं कामश्च दीन्या इअजदस्य मार्ग्गेणच सत्येन। ३६४. तन्ननु एतं मनुष्यं यस्मिन् इअजदस्य कामो ऽयं यत् अदीनित्वेन अमार्ग्गत्वेन इअजदापरिज्ञानत्वेन समुत्सृजति आचार्यः अथवा अन्यो मनुष्यः सखा दीनौ इअजदस्य मार्ग्गेच सत्ये आव्हानयति। ३६५. ततः इअजदस्तस्य उत्तमो लाभमत्तरः किंवा स आचार्यो ऽसौच मनुष्यः॥ ३६६. चेत् वक्ति यत् कामः इअजदस्य तस्य उत्तमः। ततः उक्तं भवति यत् इअजदापरिज्ञानत्वं दीनेः अप्रतिकरणं अमार्ग्गत्वंच उत्तमं॥ इदं कुत्सितत्वात् अप्रतिकर्त्तव्यं आस्वाद्यंच [ अनास्वाद्यंच ]॥ ३६७. चेत् वक्ति यत् दीनौ सत्यायां समागमनं इअजदपरिज्ञानं तस्य उत्तमं लाभमत्तरंच। ३६८. ततः परिस्फुटं उक्तं भवति यत् आचार्यो मनुष्यश्च तस्य उत्तमः इअजदात्॥ ३६९. यतो मनुष्यो यः उपरि मनुष्ये सत्यमार्ग्गत्वं इअजदपरिज्ञानत्वं च समीहते अस्य कामः तस्य बहुतरं उत्तमः एतस्मात् यः इअजदस्य॥ ३७०. यस्य अपमार्ग्गत्वं अपरिज्ञानत्वंच अदीनित्वंच उपरि तेषु कामः। इअजदः प्रचुरं निकृष्टतरः एतस्मात् मनुष्यात्॥ ॥

३७१. इदंच यच्चेत् पापि मनः पापिकर्म्मत्वं मनुष्यस्य कामेन इअजदस्य। तन्ननु यः इअजदः पापि मनो ददौ असौ पापं अंत र्मनसि वापयामास। ३७२. असौ आहर्म्मनं [ आहर्मनः ] केवलं पापकरणे आघोषयति विरुद्धयतिच। तत् पापि मनः इअजदस्य रुचितंच तस्य अलीकमत्तरं निकृष्टतरं च आघोषात् आहर्म्मनस्य॥ ३७३. चेत् कर्णश्रावणंच यत् आहर्म्मनात् करणंच पापस्य सर्व्वं पापिमनसः इअजददत्तात् रुचिताच्च तस्य। तन्ननु परिस्फुटमेव यत् इअजदः आहर्म्मनात् प्रचुरं निकृष्टतरः पापकारितरश्च॥ ॥

३७४. उपरि एतस्मिन् वाक्ये अस्माभि र्विमर्शितं। ३७५. एतस्मात् द्वितयात् एकं शक्नोति भवितुं॥ ३७६. अथवा यत् सर्व्वं सत्यं। अथवा यत् सर्व्वं अनृतं। ३७७. अथवा अस्ति यत् सत्यं अस्ति यत् अनृतं॥ ३७८. चेत् सर्व्वं सत्यं। सर्वं वाक्यं एतस्मिन् वाक्ये न शोभते अनृतं किंचित् द्वितयंच सत्यं अनृतं॥ ३७९. चेत् सर्व्वं अनृतं। सर्व्वं वाक्यं एतस्मिन् वाक्ये न शोभते सत्यं किंचित् सम्मिश्रं द्वितयं॥ ३८० चेत् अस्ति यत् सत्यं अस्ति यत् अनृतं। ३८१. ततः तच्च यत् सत्यं रत्नात् नाभेश्च सत्यतायाः। ३८२. तच्च यत् अनृतं रत्नात् नाभेः मूलास्पदाच्च अनृतस्य॥ ३८३. मूले द्वे। एवं एकं यस्मात् सत्यं एकं यस्मात् अनृतं॥

---

# [ १२ ]

१. अन्यच्च उपरि परस्परविरोधिन्यां तेषां वाचि वाक्यं कियच्चित् दीनिकर्दलिखितात् ॥

२.[66] "तच्च यत् ब्रुवंति यत् इअजदस्य परिवर्त्तुलं सर्व्वं किंचित्। किंचिदपि नांतराले ऽस्य ॥ ३. अंतश्च सर्व्वं किंचित्।किंचिदपि न परिवर्तुलं अस्य ॥ ४. उपरिष्टात् सर्व्वं किंचित्। किंचिदपि न अधस्तादस्य ॥ ५. अधस्तात् सर्व्वं किंचित्। किंचिदपि न उपरिष्टादस्य॥ ६. उपरिच आसने उपविशति नच स्थानवान्॥७ अंतश्च आकाशे नच किंवान् [कवान्?]॥ ८. अंतश्च कस्मिंश्चित् स्थाने नास्ति अस्तिच ॥९. सर्व्वास्मिंश्च स्थाने ऽस्ति। अस्य स्थानं नास्ति ॥ १०. अस्य सर्व्वं किंचित् कामेन स्वीयेन स्वीयं भवति ॥ ११. मूलास्पदं द्वेषः उत्तमश्च॥ १२. अनंतकालं अक्षमी कृपालुश्च ॥ १३. बलात्काररचयिता नच बलात्कारकरः ॥ १४. अनेनादिष्टो यः कर्त्तुं स्खलितुं अशक्तः इअजदीयमादेशं ॥ १५. असौ तं यं अपापं नरकीयमारचत् [ आरचयत् ?] नच बलात्कारकरः ॥ १६. दुर्गतित्वात् नरकिभूतान् मनुष्यान् वेत्ति। अस्य कामश्च तेषु ॥ १७. उत्तमकामी अथवास्य न कामो ऽभूत् ॥ १८. उपायेन ददौ [ दधौ ]। नच स्वयं आबाधी ॥ १९. अथवा न उपायेन किंतु अनुपायेन ददौ [ दधौ ]। नच प्रतिपक्षवान् ॥ २०. विमर्शदरिद्री। सर्व्ववेत्ताच ॥ २१. आदेशस्खलिता असौ स्वकामस्य। २२. एनंच यः स्खलति बंधग्रहीतं [० गृहीतं] कुरुते। सुराजाच ॥ २३. अस्यादेशः सर्व्वप्रवृत्तः। २४. आदेशस्खलिताच योऽस्यापेक्षी ॥ २५ अस्य कामोऽस्ति यत् न प्रवृत्तः। २६ अस्य स्खलिता कामस्य न विरोधी कामस्य ॥ २७. अनेनादिष्टः स [ आदेशो ]यस्य [ योऽस्य] न कामः ॥ २८. अस्य कामः आदेशे नान्योन्यविरोधी। अस्यादेशश्च कामे अन्योन्यविरोधी। द्वितयमपि सदाचारि ॥ २९. असौ शुभकामी न अप्रवृत्तकामः। ३०. असौ अशुभकामीच यश्च किंचित् अशुभं कुरुते। सो ऽस्ति न्यायी ॥ ३१. अन्यच्च प्रभूतं परस्परविरोधत्वं [ ०धित्वं ] यदंत वचसि दर्शनानां ॥ ३२. चेत् प्रमाणतो। दीनिः एतस्मात् बहुप्रकारात् परस्परविरोधिवाक्यात् न शक्नोति भवितुं स्वभावेनैव ॥ ३३. अन्यथातु तच्च यत् वदंति यत् द्विमूलास्पदसमालोचिनां कार्यं इअजदस्य कृशं अप्रधानवच्च। ३४. न यथा महत्त्वेन इअजदस्य अनुरूपं ब्रुवंति" ॥ ॥

३५. उपरिच एतस्मिन् निवेशे अस्ति यत् ब्रवीमि निर्म्मलतया ननु समादिष्टं परिज्ञातंच ३६. किल किंचित् यत् इअजदीयं असौ कृशतरं अप्रधानवत्तरंच कुरुते ३७. यत् यो ब्रूते यत् सृष्टयः स्वीयाः याः अनेन आरचिताः सर्व्वाः अंतः अकृतादेशे ऽश्रुतनिरोपे संजाताः संति ३८. अन्यथा तु लघुतनुतमापि सृष्टिः प्रत्यभिमुखं कामस्यास्य युध्यति। ३९. एवंच तान् प्रभूतान् प्रवीणान् आचार्यान् असौ यान् विनिर्म्मितवान् निजघान शूले चकार ४०. अस्तिच यत् हीनान् लघून् अगौरवितान् चकार। ४१. इदंच यत् न केवलं राज्यं निजं निकृष्टेभ्यः स्वयमारचितेभ्यो

न पपौ किंतु राजानंच स्वं स्वयमेव सप्रतिघातिनं कुरुते ४२. कर्त्तृत्वंच निजं स्वभावेनैव स्वयं विध्वंसते ४३. सृष्टिंच स्वीयां स्वयं विनाशयति ४४. पापकारितयाच निजया दासान् अपापान् स्वीयान् स्वयं निहंति ४५. मित्रान् केवलभाविनो निजान् स्वयमेव दुर्बलान् दरिद्रिणः पापकर्म्मिणो विमोहितान् कुरुते ४६. कोपेनैकेन दासस्य अपापस्य यथा आहर्म्मनस्य असंख्यां सृष्टिं स्वीयां विकलां विमुग्धां कुरुते ४७. उपरि पापे सीमावति यत् स्वीयात् कर्म्मणः अन्यं निग्रहं निस्सीमं उपरि अपापेषु निदधाति ४८. द्वारंच क्षमायाः पर्यंतमत्तया निबध्नाति ४९. अस्यच छेदात् दुःखात् अन्यायाच्च स्वीयानां सृष्टीनां ऽतिः नास्ति ५०. सदैव अंतः कर्म्मणि प्रवृत्तौच दधाति ५१. मूले मध्ये निर्व्वाणेच आदेशस्य यं ददाति उपरि स्थातुं न शक्यते। ५२. अथवा असौ यो वक्ति यत् असौ इअजदो यः सदैव राजा सर्व्वज्ञानी सर्व्वशक्तिश्च ५३. यस्य राज्यं ज्ञानं शक्तित्वंच [शक्तिमत्त्वंच] नित्यं अनंतकालं ५४. यस्मात् शुभं उत्तमत्वमेव ५५. यस्य कर्म्मच कारणेन आदेशाश्च लाभमत्तया ५६. उपरि स्वीयानां दासानां दयालुः क्षमाकरश्च ५७. एतस्मिन् यो विजयत्वविधाता दासः संपूर्ण प्रसाददाता ५८. उपरि एतस्मिन् यः पापकारी यः स्वीयपापकारित्वात् हस्तग्राहे दुष्टमनसो भवति संशोधनेन पातकत्वस्य [पातकित्वस्य] स्नापयनेन दोषत्वात् [सदोषत्वात्] मलिनत्वाच्च क्षमाकरः ५९. निदाने कांचिदपि उत्तमां सृष्टिं अंतः हस्तग्राहे दुष्टमनसां न विमोक्ता ६०. आसां अंतः सैन्ये संग्रामेच यः समं शत्रुभिः तनो जीवस्यच पाता धर्त्ता पालयिताच ६१. राज्यस्यच निजस्य प्रतिपक्षात् पृथक्कृरत्वात् संपूर्ण प्रहरककर्त्ता [पाता] ॥ ६२. अस्य वृंदं सैन्यंच संग्रामेण सम्मर्दन विजयितरं जायते ६३. निर्व्वाणेच विजयत्वविधाता [विजयविधाता] स्वीयानां सृष्टीनां समस्तेभ्यः पातकेभ्यः ॥ ॥

६४. यदिच रोचिः ज्ञानं विलोकनत्वं [विलोकनित्वं] जीवितं आरोग्यंच अपराच इअजदीया दातिर्निरीक्षते। [विजयति] उपरि तमिस्रे अज्ञाने अंधत्वेच मृत्यौच मांद्येच अन्यस्मिंश्च देवीये चंचलत्वे संपूर्ण प्रधानवती गुर्व्वीच ॥ ६५. यतः इदं प्रसिद्धमेव यत् रोचिः प्रस्थापका अस्ति समग्रस्य तिमिरस्य। ६६. ज्ञानंच उपरि अज्ञाने विजयि ६७. जीवितंच उपरि मृत्यौ बलवद्बृहच्च। ६८. यतो बलवत्त्वात् बृहत्त्वाच्च जीवितस्य असंख्या प्रवृत्तिः सृष्टेः द्वाभ्यां मनुष्याभ्यां बभूव। ६९. अनेकानांच तेन प्रत्ययः। ७०. एवंच विलोकनस्य आरोग्यस्यच उपरि अंधत्वे मांद्येच कियतीच विजयताच बलवत्ताच प्रकटा ॥—७१. इदंच निरीक्षितुं युज्यते यत् प्रतिपक्षो द्रूजः किं समीहते सैन्यानिच इअजदस्य उपरि कस्मिन् युध्यंति ॥ ७२. असौच यः प्रतिपक्षः इदं समीहते यत् एनां जगतीं आकाशंच सृष्टिंच रोचिष्मतां असतीं करोमि ७३. अथवा स्वकीयत्वे समानयामि स्वीयरत्नात् विभ्रामयामि। ७४. किल मा इअजदः शवोत्थानं अक्षयत्वंच कर्तुं सृष्टिं स्वीयां पुनः समारचितुं शक्तो भूयात्। ७५. सैन्यानिच इअजदस्य उपरि एतस्मिन् युध्यंति यत् असौ प्रतिपक्षो रुचितेन कामे मा प्रयातु। ७६. इदंच यत् सैन्यं होर्मिज्दस्य मूलस्थित एव युद्धेन बलिष्ठं कामेनच विजयि ॥ ॥

७७. एतस्मात् प्रकटं यत् अस्ति इयं जगती आकाशंच विनिर्म्मितं ॥ ७८. चेत् समग्रां सृष्टिं दातिंच असतीं कर्त्तुं शक्तः । तर्तिक एकामपि लघुतनुतमां सृष्टिं इअजदस्य असतीं कर्त्तुं न शक्नोति ॥ ७९. यतो यद्यपि हेतुना मृत्योः तनु जीवात् विभिन्नायते । न असत्ता व्यत्ययताच रत्नस्य स्वत्वात् । किंतु क्षीणत्वं लोलतायाः ऊनत्वंच पृथक् स्थानात् स्थाने कार्यात् कार्ये ॥ ८०. अन्यथा तु तनुजीवरत्नस्य एकैकशो निजरत्नतया पुनः अन्यस्मिन् सत्कार्ये संस्थानं कथं प्रकटं ॥ ८१. अस्याः सृष्टेः दातेश्च संपूर्णप्रवृत्तितया नित्यकार्यतयाच यावत् कालं अभीप्सायाः लाभमत्तया सत्ता प्रकटा ॥

८२. यावच्च अत्र उपरि एतस्मिन् निवेशे संपूर्ण रुचितं ॥ ॥

---

## [ १३ ].

१. द्वितीयंच उपरि मिथोविरोधिन्यां कुत्सितवाचि पूर्व्वागमीकानां ॥ २. ये स्वतंत्रं आकार्यंते ॥ ३. एते सर्व्वेऽपि तेन एकमताः संति यत् इअजदः स्वहस्तेन लिखितं मूशाय ददौ ॥ ४. यत् यथा संपूर्णं अजयत्वं सर्व्वदुष्टत्वात् प्रभूताश्च यदंतः स्वल्पे । प्रबोधाय युष्माकं अत्र प्रकटयामः ॥ ॥

५. ब्रूते मूलागमेन ६. यत् "प्रथमं आसीत् पृथ्वी या पयोरुधिरा विस्तीर्णा तमिस्रंच उदकंच कृष्णं । ७. लोचनाभ्यां इअजदः उपरि ह्रदे तस्योदकस्य कृष्णस्य सदैव पश्यति ॥ ८. पश्चात् इअजदः उक्तवान् यत् भूयात् रोचिः ॥ ९. समुद्भूताच रोचिः ॥ १०. असौ अधोऽधोमुखः समीहे तां रोचिषं ॥ ११. असौ विवेज रोचिषं दिने तमिस्रंच निशायां ॥ १२. असौ षड्भिश्च दिनैः समारचत् [ समारचयत् ] इदं जगत् आकाशंच जगतींच ॥ १३. यतः अंतः सप्तमे अह्नि विश्रामः समाधानंच बभूव ॥ १४. तेन सर्व्वरहस्यतया [ ननुच ] जुहूदानां दिने शनैश्चरीये विश्रामि [ विश्रामः ] ॥ १५. इदंच यत् आदमं नारींच निजां हउआनाम्नीं आरचत् [ आरचयत् ] १६. अंतश्च उद्याने स्वर्गलोकस्य चकार ॥ १७. किल आदमः अंतस्तत्र उद्याने कृषिं करोतु प्रहरकेणच निपातु ॥ १८. आदीनः यः स्वयं इअजदो ऽस्ति आदमाय अवोचत् १९. यत् सर्व्वेभ्यो वृक्षेभ्यो ये अंतरस्मिन् उद्याने भक्षेः । ऋते तस्मात् वृक्षात् यो ज्ञानस्य । २०. यतश्चेत् एतस्मात् खादिष्यसि मरिष्यसि ॥ २१. असौ पश्चात् सर्प्पमेकं अंतः उद्याने चकार ॥ २२. सच सर्प्पो हउआं विप्रततार । उक्तवान् यत् एतस्मात् वृक्षात् चिनु । भक्षाम आदमायच ददाम ॥ २३. साच इत्येवमकरोत् ॥ २४. आदमोऽपि सर्व्वं तथैव अखादत् ॥ २५. ज्ञानंच एवं समुत्पन्नं यदेते विवेजुः शुभं अशुभात् । नच मृताश्च ॥ २६. एतैर्दृष्टं परिज्ञातं यत् विनग्नाः संति ॥ २७. अधस्तात् वृक्षस्य गुप्ताः बभूवुः ॥ २८. एते पत्रैश्च वृक्षस्य स्वीयं वपुः समावृण्वन् लज्जया विनग्नत्वस्य ॥ २९. पश्चात् आदीनः उद्याने समाययौ आदमंच नाम्ना समाकारयत्

यत् कासि ॥ ३०. आदमश्च प्रत्युत्तरं ददौ यदयं अस्मि अधस्तात् वृक्षस्य। इति हेतोः यतो विनग्नोऽस्मि ॥ ३१. आदीनश्च क्रोधं चक्रे ॥ ३२. उक्तं यत् केन परिज्ञातं ते यत् विनग्नोऽसि ॥ ३३. मा कदाचित् त्वया तस्मात् वृक्षात् ज्ञानस्य यस्मादस्माभिरुक्तं यत् मा भक्षेः भक्षितं ॥ ३४. आदमश्च उवाच यत् अनया नार्या या त्वया मे दत्ता विप्रतारितो ऽहं अखादं ॥ ३५. आदीनश्च हउआं अपृच्छत् यत् त्वमपि किमिति एवं चकृषे ॥ ३६. हउआच उवाच यत् अनेन सर्प्पेण विप्रतारिताहं ॥ ३७. असौ आदमं हउआंच सर्प्पंच त्रितयमपि शापेन स्वर्गोद्यानात् बहिश्चक्रे ॥ ३८. असौ आदमाय अवोचत् यत् ते[70] खाद्यं आस्तरणेन निद्रायाः श्वासेनच नासिकायाः भूयात् ३९. यावत् निर्व्वाणं ते जीवितस्य ॥ ४०. तवच पृथिव्यां सर्व्वं मूत्रं पुरीषंच प्रवहतु ॥ ४१ असौ हउआयैच अवोचत् यत् ते गर्भो दुःखेन विषादत्वेन [ विषादित्वेन ] जननिश्च ते महोपतापत्वेन भूयात् ॥ ४२. असौ सर्प्पायच अवोचत् यत् मध्ये चतुष्पदानां मृगाणां अरण्यीयानां पार्व्वतीयानांच गर्हितो भव ॥ ४३. तेच पादाः मा भवंतु ॥ ४४. तेच प्रवृत्तिः उदरेण खाद्यंच पांशु भूयात् ॥ ४५. मध्येच जातकानां ते समं कलत्रेण द्वेषो दुष्टंच मानसत्वं एवं भूयात् यत् तेषां जातकानां शिरांसि खादेत् [खादेयुः] ॥ ४६. इदंच वदंति यदिदं जगत् समं सकलेन केनचित् अंतः सर्व्वस्मिन् कस्मिंश्चित् मनुष्येभ्यः कृतं दत्तंच ॥ ४७. असौ मनुष्यं उपरि सर्व्वासु सृष्टिषु दातिषु सार्द्रे शुष्केच राजानं चकार" ॥ ॥

४८. ननु ब्रवीमि किंचित् उपरि अंतश्च एतेषां प्रलापस्य कुत्सिततायांच एतेषां वाचि ॥ ४९. यत् सा पृथ्वी या पयोरुधिरा विस्तीर्णा तमिस्रंच इअजदश्च अस्यच चक्षुषी उदकं च कृष्णं। क्व केन सीम्ना आसीत् ॥ ५०. अथवा स्वयं इअजदश्च केन प्रकारेण आसीत् ॥ ५१. प्रकटंच यत् न रोचिष्मान् आसीत् ॥ ५२. यतश्चेत् रोचिषं ददर्श। ५३. तस्मात् यत् न दृष्टा आसीत् अधोमुखं समीहे ॥ ५४. चेत् वदंति यत् तमोमान् आसीत् तत् परिस्फुटमेव यत् तमो मूलं वचः शिक्षापनायाः रोचिष्मत्याः अस्ति ॥ ५५. चेत् वदंति यत् न तमोमान् किंतु रोचिष्मान् आसीत्। ५६. तच्चेत् स्वयं रोचिष्मान् आसीत् किमिति यत् रोचिषं ददर्श सचमत्कारं समीहे ॥ ५७. चेत् वदंति यत् न रोचिष्मान् आसीत् न तमोमान्। ५८. तत्तेषां तृतीयं प्रकटयितुं युज्यते यत् न रोचिष्मान् नच तमोमान् ॥—५९. अन्यथा तु यस्य स्थानं निवासश्च अंतस्तमसि उदकेच कृष्णे आसीत् येनच सदैव रोचिः न दृष्टा आसीत् स रोचिषं द्रष्टुं कथं शशाक ॥ ६०. अस्य इअजदत्वं कस्मात् ॥ ६१. यतो ननु सर्व्वोऽपि यः अंतस्तमसि निवसति स रोचिषं द्रष्टुं न शक्नोति ॥ ६२. इदं च यच्चेत् मूलं निवासश्च तमिस्रमासीत्। ततः प्रत्यभिमुखं रोचिषं स्थातुं कथं शशाक ॥ ६३. यतः इदं प्रसिद्धमेव यत् तमिस्रं प्रत्यभिमुखं रोचिषं स्थातुं न शक्नोति। यतः प्रतिस्खल्यते प्रच्छादयतेच ॥—६४. द्वितीयंच इदं यत् सा जगती या पयोरुधिरा विस्तीर्णा सीमावती आसीत् किंवा निःसीमा ॥ ६५. चेत् सीमावती आसीत्। ततो बहिरस्याः

किमासीत् ॥ ६६. चेत् निःसीमा आसीत्। ततो निःसीमत्वं क ययौ ॥ ६७. किल यथा सदैव पश्यामः इयं जगती जगच्च न तत् यत् आद्यमस्ति ॥ ॥

६८. तच्च यत् आदीनेन उक्तं ६९. किल भूयात् रोचिः । समुद्भूताच ॥ ७०. पश्चात् परिज्ञातुं युज्यते यत् आदीनः प्राक् तस्मात् [यत्] रोचि र्बभूव ॥ ७१. चेत् रोचिषं सदैव समीहे कर्त्तुं । असौ आदेशंच संभवने ददौ । पश्चात् मनसा अमंस्त यत् रोचिः केन प्रकारेण । सुरूपा भविष्यति किंवा दुष्टरूपा ॥ ७२. चेत् रोचिः स्वीययथास्थतया अंत र्ज्ञाने स्मरणेच आदीनस्य अभीप्सिता । तत् परिस्फुटमेव यत् रोचिः सदैव आसीत् सर्व्वत्र अंत र्ज्ञाने मनसिच्च आदीनस्य ७३. सर्व्वत्रच बहिरे-तस्मात् ॥ ७४. यतः किंचिदपि न शक्यते परिज्ञातुं अभीप्सितुंच विना सत्तायाः प्रकटत्वेन ॥ ७५. चेत् रोचिः सदैव आसीत् । ततः आरचितं आदीनस्य अस्ति ॥ ७६. चेत् वदंति यत् रोचिः स्वीययथास्थतया अंत र्ज्ञाने नासीत् । ततः रोचिषं समीहे याच्च [यन् न] विवेद यत् केन प्रकारेण । अतीव अज्ञानतरः ॥ ७७. अथवा कथं शक्यते तत् यत् न कदाचित् मतं ज्ञातंच मनसा अवमंतुं ॥ ॥

७८. इदंच यत् तमादेशं यं संभवनेन रोचिषः कस्यचित् ददौ किंवा न कस्यचित् ॥ ७९. यतः इदं अवितर्क्यमेव यत् आदेशं आदेशकरे शक्यते दातुं ॥ ८०. चेत् सत्तायै ददौ या रोचिष्मती । ततो रोचिष्मान् स्वयं आसीत् ॥ ८१. चेच्च आदेशं असत्तायै ददौ । ततो ऽसत्ता आदेशं आदीनस्य कथं अशृणोत् ८२. अथवा कथं विवेद किल आदीनस्य एवं कामो यत् रोचिष्मती भवामि ॥ ८३. यतो ऽसत्ता आदेशं आदीनस्य सर्व्वं एवं न शुश्राव यथा किल न ददौ ॥ ८४. यतो ऽसत् केनापि प्रकारेण अवमंतुमपि न शक्यते ॥ ८५. तच्च यत् असत् विनिर्म्मितं किल असत् [.....?] अस्ति ज्ञानिनः पुरो दृष्टेश्च बभूव येनच परिज्ञातं किल आदीनः केन प्रकारेण सदैव समीहते किल भवामि तेन प्रकारेण येन समीहितं समुद्भूतंच ॥ ८६. चेत् वदंति यत् रोचि र्वाचः आदीनस्य समुद्बभूव यत् उक्तं किल भव समुद्भूताच । ८७. तच्चेत् आदीनोऽस्य स्वताच तमोवती आसीत् । अनेन कदाचित् रोचि र्न दृष्टा आसीत् । तत् रोचि र्वाचः केन प्रकारेण शक्नोति भवितुं ॥ ८८. यतः इदं प्रसिद्धमेव यत् वाचो जननि र्मनोऽस्ति ॥ ८९. चेत् वदंति यत् वाक् रोचिष्मती आसीत् । ततः अतीव अद्भूतं । यतः पश्चात् रोचिः फलं तमसः । तमश्च बीजं । अस्य रोचिश्च चिह्नं । अथवा इदं यत् रोचिः अंतस्तमसि पिहिता आसीत् ॥ ९०. यथाहं अवोचं किल आदेशं विना आदेशकरेण दातुं न शक्यते । परिस्फुटमेव ९१. यत् तत्कालं रोचिः समुद्बभूव पश्चात् आदेशंच अनुरूपे ददौ ॥ ॥

९२. द्वितीयंच इदं यत् एनां सृष्टिं दातिंच आकाशंच पृथ्वींच किमिति मध्ये षड्दिनानां समारचत् ददौ ९३. सप्तमेच विश्रांतः एतस्मात् ॥ ९४. तच्चेत् इदं जगत् न कस्माच्चित् ददौ [दधौ] किंतु केवलं आदेशात् समुद्बभूव किल भव समद्भूतंच ।

९५. तत् षड्दिनदीर्घत्वं कस्मात् ॥ ९६. यतो यस्य कष्टं केवलं एतावन्मात्रं भवति यावन्मात्रं भवेति उक्तेन तस्य षड्दिनदीर्घत्वं संजातमिति भूरि विसदृशं ॥ ९७. अस्य कष्टंच एतस्मात् न युज्यते भवितुं ॥ ९८. चेत् असत् सत् कर्त्तुं शक्नोति शक्तश्च। विना दीर्घत्वेनच दातुं शक्नोति ॥ ९९. चेत् विना दिनेन कालं दातुं अशक्तः। ततोऽसत्तायाः दत्तमिति वक्तुमपि न युज्यते ॥—१००. द्वितीयंच इदं यश्चेत् गणना दिनानां सूर्यात् परिज्ञायते । ततः पूर्व्वं आरचनात् सूर्यस्य दिनसंख्या नामच दिनानां कस्मात् परिज्ञायते। १०१. यतो वदंति यत् सूर्यं दिने ननर्थे स्वयं चतुःशनैश्चरीये[71] ददौ ॥— १०२. इदं च यत् दिने सप्तमे समाधानं विश्रामं च कस्मादियेष कर्त्तुं ॥ १०३. चेत् आरचनेन दानेन जगतः दीर्घत्वं कष्टंच एतावन्मात्रं बभूव यावन्मात्रं उक्तं यत् भव। १०४. ततो दिनं कथं गण्यते किल विश्रामं इयेष कर्त्तुं येन कष्टं विजीर्यते ॥ १०५. यतश्चेत् भवेति तत्कालेन उक्तं। ततः कष्टंच समाधानंच तत्कालमेव युज्यते भवितुं ॥ ॥

१०६. द्वितीयंच इदं यत् आदमं समं हउअया किमर्थं कस्मै हेतवे ददौ॥ १०७. यश्चेत् कामं समाचरंति। तत्किमिति एवं न ददौ यदस्य कामकारित्वात् न विपर्ययंति ॥ १०८. यतश्चेत् पूर्व्वं कर्म्मणो ऽजानीत यत् आदेशश्रोतारो न भविष्यंति। असौ निदानेच ददौ। तन्ननु विलक्षीभवितुं क्रोधंच उपरि तेषां कर्त्तुं निरर्थकं॥ १०९. यतः परिस्फुटमेव यत् स्वयं आदीनः संपूर्णप्रवृत्तौ नासीत् निजेन कामेन। कामवान् निजे कामेच प्रतिद्वंद्वी प्रतिघातीच प्रकटः॥ ११०. चेत् पूर्व्वं कर्म्मणो नालोकत। असौ नचाजानीत यत् आदेशमस्य नश्रविष्यंति। पश्चात् अज्ञानोऽशुभावलोकीच अस्ति॥ १११. चेत् वदंति यदस्य स्वकामो ऽकरणेन आसीत्। तत् पश्चात् आदेशं करणेन किमिति ददौ ११२. अस्यच अकरणेन किं पापं कथंच प्रचरति ॥ ११३. अश्वंच यं रशनाभरेण नियोजयंति तंच चर्म्मलतया उत्तापयंति ११४. एतस्मात् वाक्यात् साभिज्ञानं लक्षणं विप्रतारकाणां प्रकटायते ११५. येषां कामः आदेशश्च अन्योन्यं विरोधी अननुरूपश्च ॥ ११६. चेत् कामो रुचितंच इदं आसीत् यत् कामात् न विपर्ययंति। ११७. तन्ननु प्राणो [ बलं ] रुचितंच तेषां विपर्ययेणास्य कामात् भूरि बलवत्तरं प्राधान्यवत्तरंच तस्मात् योऽस्य अविपर्ययेण॥ ११८. चेत् कामः तेषां विपर्ययेणास्य कामात् ज्ञानाच्च तस्यासीत्। असौ आदेशमेव अविपर्ययेण ददौ। तन्ननु वराकः आदमः कथं शक्नोति यत् न विपर्ययंति। ११९. अस्य मूलसृष्टिश्च न युज्यते भवितुं ॥ १२०. यतो विपर्ययेण आदेशात् केवलं आदेशो द्रुह्यते। अविपर्ययेण तु कामो ज्ञानंच द्वितयमपि द्रोहितं भवति ॥ ॥

१२१. द्वितीयंच इदं यत् तत् उद्यानं समारचत् [ समारचयत् ] किमर्थं कस्मैलाभायच ददौ ॥ १२२. स्वयंच वृक्षं ज्ञानस्य यः आदिष्टो यत् मा भक्षेः असौ निरोपंच अखादनेन चक्रे। तमारचितुं किमिति समीहे॥ १२३. अस्य निरोपात् आदेशाच्च परिस्फुटमेव यत् किंचिज्ज्ञानत्वं अज्ञानत्वंच मिश्रितरं। १२४. कामश्च तस्मिन् प्रभूतो

ज्ञानात् ज्ञापनत्वाच्च। १२५. अस्य लाभश्च अज्ञानत्वात् भूरिरासीत्॥ १२६. यतो यावदेते वृक्षं ज्ञानस्य अखादंतः आसन्। अज्ञानाश्च समभवन्। अंतरस्य अकृतादेशे अशुभेच नो १२७. यथैते ज्ञाने समुत्पन्ने अंतरकृतादेशे बभूवुः॥ १२८. असौ अज्ञानत्वात् तेषां विषादितो नाभूत् यथैषां ज्ञानात् बभूव॥ १२९. उपरि एषां विलक्षः कोपालुश्च बभूव॥ १३०. असौ महदशुभत्वेन अवल्लभत्वेनच स्वर्गलोकात् बहिश्चक्रे भूमौच न्यपातयत्॥—१३१. संक्षेपात् इदं यत् इदं ज्ञानोत्पत्ते मनुष्याणां अंत जगति कारणं सर्प्पात् विप्रतारणत्वात् बभूव॥—१३२. इदंच वदंति यत् सर्व्वं किंचित् मनुष्येभ्यः आरचत् [ आरचयत् ]। ततः परिस्फुटमेव तमपि वृक्षं मनुष्येभ्यः समारचितं॥ १३३. असौ मनुष्यं सकलासु सृष्टिषु दातिषु राजानं चकार॥ १३४. चेत् इत्येवं। तन्ननु तस्मात् वृक्षात् यो ऽमीषां स्वाधीनो ऽभूत् कामविभ्रंशनं किमिति॥ ॥

१३५. एतस्मात् वाक्यात् इदंच प्रकटं यदस्य स्वल्पमपि ज्ञानं नाभूत्॥ १३६. यतश्चेत् उद्याने समागतो ऽसौ शब्दं चकार आदमंच नाम्ना समाकारयत् यत् क्वासि। एवं यथा किल क्वस्थाने सत्ता इति अवेत्ता आसीत्॥ १३७. चेत् अप्रत्युत्तरो जातो ऽभविष्यत्। क्वस्थाने सत्ता आदमस्येति अवेत्ताभूत्॥ १३८. चेत् अस्य शब्दः पुरो दृष्टे नाभूत् किल तस्मात् वृक्षात् अखादन् किंवा नो। इदंच यत् कः कथं कश्च अखादत् कश्च विप्रततार इति अवेत्ताभूत्॥ १३९. यतश्चेत् वेत्ता आसीत्। ततो मा कदाचित् त्वया तस्मात् वृक्षात् यस्मादस्माभिः समादिष्टं यत् माभक्षेः भक्षितमिति प्रश्नकरणं किमिति॥ १४०.तथा प्राक् यत् समागतः न विलक्षो ऽभूत्। पश्चात् चेत् परिज्ञातं। उपर्येषां विलक्षो बभूव कोपालुश्च बभूव॥ १४१. अस्य किंचिज्ज्ञानत्वंच एतस्मात् यत् सर्प्पं यं आत्मप्रतिद्वंद्विनं समारचत् [ समारचयत् ] समंतैश्च उद्याने चकार॥ १४२. अथवा किमिति उद्यानं एवं सप्राकारं नाकरोत् यत् सर्प्पो ऽन्योऽपि वा दुष्टमनाः तत्रांत र्न प्रयाति॥ १४३. अस्य अलीकत्वंच एतस्मात् प्रकटं यदुक्तं किल चेत् एतस्मात् वृक्षात् खादिष्यसि मरिष्यसि। एतेच अखादन् परं न मृताः किंतु ज्ञानवंतश्च बभूवुः १४४. एते शुभं अशुभात् विवेजुः॥ ॥

१४५. इदंच यत् कथं विरोधि द्वंद्विच ज्ञानंच समं कामेन आदेशेनच॥ १४६. यतश्चेत् इयेष खाद्यं तस्मात् वृक्षात्। असौ आदेशंच अखादनेन ददौ। ज्ञानंच तेन समुद्बभूव यत् खादितं॥ १४७. तन्ननु प्रकटमेव त्रितयमपि अन्योन्यं विरोधि। कामो ज्ञानंच आदेशश्च॥—१४८. इदंच यत् किल आदमः पापं चक्रे शापश्च यः कृतः उपरि सर्व्वेषु मनुष्येषु युगे युगे प्राप्नोति। अन्यायतया॥ १४९. सर्व्वप्रकारतया यत् समालोचामहे। अचेतनो ऽज्ञानो ग्रहिलवाक्च॥ १५०. अनेन संबंधेन दीर्घत्वात् इदं एतावदेव पूर्णमीहितं॥ ॥

# [ १४. ]

१. मे कामः किल किंचित्तरं सर्व्वस्मादसंबंधत्वात् संपूर्णादशुद्धित्वात् सर्व्वांगानां संलिखामि २. यत् पूर्णं सर्व्वपापत्वात् देवत्वाच्च सहस्रादेकं यत् तेभ्यः प्रकटं संक्षेपेण निगदामि ॥ ३. तैश्च समादिष्टं निरीक्ष्य ॥ ॥

४. आदौ इदं यदुद्गिरति उपरि निजे यथास्थत्वे ५. यदहं अस्मि आदीनो द्वेष-कांक्षी ६. द्वेषशोचयिताच [ शोधयिताच ] । ७. द्वेषंच सप्तैवयत्यं[72] [ सप्तैतावत्यं? ] जातकेषु शोधयामि ॥ ८. मे मूलद्वेषो न विलीयते ॥—९. अन्यस्मिन् स्थानेच निगदति यत् अभीप्सितः क्रोधो गरिष्ठंच मनः ॥ १०. अस्यौष्ठः संपूर्णविषः । ११. जिव्हा यथा वह्नि ज्योतिष्मान् । १२. लोचनं[73] यथा स्रोतः सरत्प्रवाहः ॥ १३. अस्याघोषः आक्रंदोपमो देवाघोषतुल्यतरश्च ॥ १४. अस्य सन्निवेशनं अंतस्तमसि धूमलत्वे अग्नेच ॥ १५. अस्यवाहनं वायु र्यः शोषकः ॥ १६. अस्य प्रवर्त्तनात् पादयोः पांशुभ्रमः समुदेति ॥ १७. चेत् प्रचरति । ततः पश्चात् उत्थानं अग्नेः ॥—१८. अन्यच्च उपरि क्रोधत्वे [ क्रोधित्वे ] निजे निगदति १९. यत् चत्वारिंशत् वर्षाणि उपरि असरासरेषु[74] कोपेन अभूवमहं ॥ २०. अनेन उक्तं यत् विमुग्धचेतसः संति असरासराः ॥—२१. अन्यच्च निगदति यत् योऽस्ति दरिद्री । चेत् दासो मे २२. यश्च ऋद्धः [ समृद्धः ] आराधको । यं सदैव संसृजामि ॥ २३. योऽस्ति दरिद्री चेत् यथा राजा। प्रकटंच यत् राजा तेषां स्वयं आदीनः ॥—२४. अन्यच्च इदं निगदति यत् आराधकाः अग्नेः विमुग्धाः संति ॥—२५. इदंच यदस्य कर्म्म धूमं अंगारकान् समुद्वहति २६. युद्धंच रक्तं प्रवाहि ॥—२७. इदंच यत् मनुष्यं एकं उपरि द्वितीये उत्सारयामि ॥ २८. उपर्याकाशे सन्निविशामि उपर्येषामंगेषुच ॥—२९. इदंच यदसौ एकया निशया शतषष्टिसहस्राणि समूहात् सैन्यात् माजंदरीयाणां निकृष्टेन मृत्युना निजघान ३०. अन्यस्मिंश्च समये षट्शतसहस्राणि मनुष्याणां विना नारीभिः डिंभैश्च अपूर्णनरैः असरासरेभ्यः अंतः शून्ये निजघान ३१. विना द्वाभ्यां मनुष्याभ्यां यौ अशुधतां [ अशुध्यतां ] ॥ ॥

३२. द्वितीयमपि निदर्शयति यत् निर्व्वाणकाले सकलमपि पश्चात्तापत्वं [ पश्चात्तापित्वं ] ॥ ३३. यथा इदं यदुद्गिरति यत् जरीगाः[74a] यावत् बभूवुः तेच ऊचुः यत् पश्चात्तापिनः स्मः [ सच उवाच यत् पश्चात्तापी अस्मि ] करणेन मनुष्याणां जगत्यां ॥ —३४. इदंचोद्गिरति यत् उपरि आसने सन्निविशति यं चत्वारो गणाः उपरि स्कंधे धरंति येभ्यः शिलाभारात् एकैकशो नदी ज्वलनीया सदैव प्रवहति ॥ ३५. ननु चेत् असौ अदृश्यो ऽस्ति न तनुकृतः । ततस्तेषां चतुर्णां वराकाणां लघूनां महाभारः कष्टधारणेन किं ॥—३६. द्वितीयंच इदं यत् सर्व्वेषु दिनेषु स्वीयेन हस्तेन नवतिसहस्राणि आराधकानां समारचति [ ०रचयति ] एनंच यावत् निशावसानं सदैव समाराधयंति अमून् पश्चात् स्रोतसा ज्वलनीयेन नरके समुत्सृजति ॥ ३७. चेत् इष्टो

बलात्कारी अनाचारीच अनेन प्रकारेण। कार्ये पुण्येच सुकर्म्मत्वेच संसारिणां भवितुं कथं संयुज्यते ३८. चेद्यासौ वराकान् आराधकान् भक्तिशीलान् आदेशश्रोतृन् निर्म्मलकर्म्मिणः सह अपरैः पापकारिभिः नरके अनंतकालीये अवकिरति ॥ ३९. यथा तथ यत् अपरे समुदायीकाः समुद्गिरंति यत् इअजदो दिने शवोत्थानीये सूर्यं चंद्रंच सह अपरैः पापकारिभिः नरके ददाति तेन हेतुना यदस्ति मनुष्यैः तेषां प्रणामः सम्मुखं कृतः ॥ ॥

४०. अन्यस्मिन् स्थाने इदं निगदति यच्चेत् मेहादरो[75] ऽब्राहीमो मिश्रः आदीनस्य लोचनव्यथापीडितः। ततः स्वयं आदीनः प्रच्छनत्वे [ प्रश्नित्वे ] समाययौ ॥ ४१. अस्योच्छीर्षकेच उपविवेश कुशलंच पप्रच्छ ॥ ४२. अब्राहीमः आसीनकं[76] यमस्य सहोदरं पुत्रं प्रच्छन्नतया आकार्य अवोचत् ॥ ४३. यत् स्वर्गे प्रयाहि मधुं लघुतरं पवित्रतरंच समानय ॥ ४४. गतो ऽसौ समानीतश्च ॥ ४५. अब्राहीमश्च प्रचुरां प्रार्थनां आदीनाय चकार ४६. यत् अंत गृहे मे मधुं क्षणेन[77] भक्ष ॥ ४७. आदीनश्च प्रत्यवोचत् यत् न खादामि। यतो न स्वर्गात् नच पवित्रतरः ॥ ४८. पश्चात् अब्राहीमः साक्ष्यं ददौ यत् पवित्रो ऽयं मधुः स्वर्गात् आसीनकेन मत्पुत्रेण समानीतः ॥ ४९. पश्चात् आदीनः असंशयत्वात् यत् आसीनकेन साक्षित्वात् यत् अब्राहीमेण मधुं क्षणेन अखादत् ॥ ५०. पश्चात् चेत् प्रयातुं समैहत। न विनिर्म्मुक्तो। यावत् असौ शपथै र्बहुभिः एकं द्वितीयं अखादत्[78] ॥ ५१. पश्यत एनं संपूर्णं अशुद्धं प्रलापं यं एकमपि इअजदे न योग्यं ॥ ५२. यथा समागमनं यदस्य तनुमत्तया गृहे अब्राहीमस्य अन्नखादनंच मधुखादनंच यदस्य एकमपि सम्मुखं नानुरूपायते ॥ ५३. इदंच एतस्मात् प्रकटं यत् तत् दुःखं यत् अब्राहीमस्य न आदीनात् समुद्भभूव ऋते ऽन्यस्मात् कर्त्तुः ॥ ५४. अस्य वैकल्यंच ज्ञानात् अचैतन्यंच एवं समुद्भभूव यदसौ पवित्रत्वं कस्माच्च मधुरिति न विवेद ॥ ५५. अस्य अनृतत्वंच इदं यदसौ नखादनाय मधोः उवाच निदानेच खादितः ५६. पश्चाच्च सुनिश्चितीकृतो यत् निर्म्मलः पवित्रश्च आस्ते ॥ ५७. नन्वसौ यस्येदं यथास्थत्वं इअजदत्वेन सर्व्वज्ञानिना सर्व्वशक्तिना समाराधितुं कथं युज्यते ॥ ॥

५८. अन्यस्मिन् स्थानेच निगदति यत् अभूत् एको रोगिभ्यो यः समं स्वीयैः कलत्रजातकैः अतीव दुःखितो दुर्बलश्च अपेतर्द्धिरभूत् ॥ ५९. सर्व्ववारं नमस्करणे नक्के[79] आराधनायांच इअजदस्य अतीव व्यवसायी कर्त्ताच अभूत् ॥ ६०. असौ एकस्मिन् दिने अंत र्नमस्करणे गुप्तमभीप्सितमयाचत यन्मह्यं समृद्धत्वमर्थेन देहि ६१. मेच जीवितं समाधानितरं भूयात् ॥ ६२. अस्यच गणकः उपरिष्टादधः समाययौ उवाचच यत् तुभ्यमर्थः एतस्मात् बहुः चक्रपादे[80] इअजदेन न विभक्त आस्ते ६३. नूतनाच्च विभक्तुं न शक्यते ॥ ६४. परं मया तुभ्यं प्रसाददानेन पूजायाः प्रणामस्यच आसनमेकं यस्य चत्वारः पादाः रत्नात् अंतः स्वर्गे दत्तमास्ते ॥ ६५. चेत्

रोचते। तत् तुभ्यं तस्मात् आसनात् एकं पादं ददामि ॥ ६६. सच आराधकः शिक्षापकः तस्मात् यत् स्वीयं कलत्रं प्रार्थयत् ॥ ६७. कलत्रं अवोचत् यन्मे किंचित्तरेणापि अर्थेन दुःखितेनच जीवितेन इहलोकतया संतोषीभवितुं उत्तमं ६८. यच्चेत् मे स्वर्गलोके मध्ये सहायिनां आसनं त्रिपादं ॥ ६९. चेत् शक्नोषि तन्मह्यमर्थे अन्यस्मात् स्थानात् समादेशय ॥ ७०. पुनः स गणः समागत्य निजगाद यच्चेत् चक्रं विघटयामि आकाशंच जगतींच नूतनत्वात् ददामि प्रवृत्तिंच तारकाणां नूतनत्वात् समारचामि [०रचयामि] ददामिच तस्मादूर्ध्वमपि न प्रकटं यत् तुभ्यं भाग्यं उत्तमं निपतति किंवा निकृष्टं ॥ ७१. एतस्मात् वाक्यात् एवं प्रकटं यत् न स्वयमसौ अस्ति विभक्ता अर्थस्य भाग्यस्यच ॥ ७२. विभंजनमपि न कामेनास्य भाग्यंच व्यस्तयितुं न शक्नोति ॥ ७३. परिभ्रमणंच चक्रस्य सूर्यस्य चंद्रस्य तारकाणांच नांतः प्रवर्त्तितं ज्ञाने कामे आदेशेचास्य ॥ ७४. इदंच यत् आसनं यत् निवेदितं यत् अंतः स्वर्गे ददामि न कर्म्मणो दानाच्चास्य ॥ ॥

७५. अन्यस्मिन् स्थानेच उपरि प्रलापे निजे निगदति ७६. यदहं सह संघातेन पापकारिणां कियतो ऽप्यसंख्यान् अपापान् निजघान ॥ ७७. यदिच आराधकैः निःकारणकर्म्मत्वं प्रभूतैः उक्तं। तदसौ उवाच यदहं अस्मि आदीनः कामराजा ७८. उत्कटतरो ऽप्रतिपक्षः कामकारी। कोऽपि न समर्थीयति उपरि मत्प्रलापे वक्तुं ॥ ॥

७९. विस्फीतं प्रभूतं प्रलापं यत् पूर्णाशुद्धितया अस्माकं लिखितुं प्रलंबतरं प्रतिभासितं ॥ ८०. यो ऽवलोप्ता व्यस्ताचारः एतस्मात् वाक्यात् तस्मै वाक्स्वतंत्रस्य गुरो भूयात् ॥ ८१. यावत् भवति सुप्रबुद्धो यथास्थत्वात् सर्व्वागमानां सत्याच्च तस्मात् यदस्माभिरुक्तं ॥ ८२. ननु चेत् स इअजदो यस्येदं साभिज्ञानं लक्षणंच। ततः सत्यं एतस्मात् दूरे ८३. प्रतिपालनंच एतस्मात् वहिस्तरं ८४. अस्य ज्ञानत्वंच उपरि न विभक्तं ॥ ८५. यतो ऽयं स्वयं अस्ति द्रूजो यो नरकाधिपतिः तिमिराकरः तमोबीजः ८६. यस्य व्यामुग्धाः देवत्वदुष्टाः आदीननाम्ना स्तुवंति प्रणामंच कुर्व्वते ॥ ८७. उपरि एतस्मिन् पदे अत्र परिपूर्णं ॥ ॥

---

## [१५].

१. अन्यच्च उपरि अनिबद्धत्वे निःसीम्नि वाक्ये निरलंकारप्रतिवादे [81]तर्शाप्रबोधिनां स्तोकं किंचित् प्रकटयामि ॥ २. यतो यथा त्रयोऽपि एकस्मात् मूलात् [82]जुद्दतायाः ॥ ३. तच्चेत् अंतः एकस्मिन्नुक्तं। ततस्ते सर्व्वेऽपि एकयसहायतया अशुद्धस्वाधीनाः ॥ ४. अहो पश्येत यत् मूलदर्शनं तर्शाकजातीनां कस्मात् मूलात् समाययौ ॥ ५. यत् अंतः [83]दुरशर्म्मग्रामे सर्व्वजुद्देभ्यो योषिदेका दुश्चारितया प्रसिद्धा आसीत् ६. गर्भश्च तस्यां प्रकटीबभूव ॥ ७. यदिच ते पप्रच्छुः यत् तवायं

गर्भः कस्मात् ८. साच प्रत्युत्तरेण अवोचत् यन्मे स्परगरो[84]गणः उपरि समाययौ। अनेनोक्तं यत् वायोः पवित्रात् गर्भितासि ॥ ॥

९. तदहो पश्येत यत् स्परगरो गणः ऋते तस्याः योषितः केन दृष्टः कस्माच्च सा योषित् सत्या युज्यते परिज्ञातुं ॥ १०. चेत् निगदंति यत् तं गणं अदृश्यत्वात् कोऽपि द्रष्टुं न शक्नोति। ११. तच्चेत् कारणं अनिरीक्षणस्य तस्य गणस्य अदृश्यरूपित्वं अस्ति। इति हेतोः साच योषित् द्रष्टुं न क्षमा ॥ १२. चेत् निगदंति यत् इअजदः तस्यै योषिते दृश्यतरमकरोत्। अनुरूपंच तस्यै योषिते १३. असौ अन्यस्मै कस्मैचित् अनुरूपं न चक्रे। १४. इदंच यत् सा योषित् सत्यमुवाचेति प्रकटता कस्मात् ॥ १५. अथ चेत् सा योषित् सत्यतया प्रकटाभूत्। ततः अन्येभ्यः केभ्यश्चित् निदर्शयितुं युज्यते यथा तेषां तस्मात् साक्षित्वात् अधिकतरं सत्यतरा परिज्ञाता भवेत् ॥ १६. अस्य ननु केवलं तस्यैव [तस्यायैव] योषिते निदर्शनं कोऽपि सत्येन न दधौ ॥ १७.ननु इदंच पश्येत यत् मूलं यत्तेषां दीनैः सकलमपि एतस्मात् साक्षित्वात् योषितः एकस्याः समाययौ यत् इयं उपरि आत्मनि ददौ ॥ ॥

१८. द्वितीयंच यच्चेत् मशिआकं[85] वायोः पवित्रात् इअजदस्य समुद्भूतं निगदंति। तच्चेत् केवलं वायुः पवित्रो यः इअजदात् स एकोऽस्ति। तदपरे वायवो ये ऋते तस्मात् न इअजदात् न पवित्राः। १९. अन्यश्चारचयिता प्रकटायते अनुमानेनैव ॥ २०. चेत् वायवः सर्व्वे इअजदात् इअजदीयाः संति। सर्व्वैरपि पवित्रैः संयुज्यते भवितुं ॥ २१. चेत् केवलं स एको वायुः पवित्रः अपरे वायवो मलिनाः न इअजदीयाः। २२. यथा विना इअजदेन कोऽपि आरचयिता नास्ति। तत् मलिनत्वं अपवित्रत्वं यत् अपरेषां वायूनां सर्व्वं इअजदात् ॥ २३. चेत् अपरे वायवः तेऽपि इअजदस्य इअजदीयाः संति। सर्व्वैरपि पवित्रैः संयुज्यते भवितुं ॥ २४. ननु तमेकं पवित्रतया दधौ अपरेच मलिना बभूवुः किमिति ॥ ॥

२५. द्वितीयंच इदं यच्चेत् मशिआकः पुत्रः इजजदस्य अभूत्। तेन हेतुना यत् इअजदः पिता सर्व्वेषां दातृतया आरचनतया पालनतयाच। २६. ततो मशिआकः पुत्रतया इअजदस्य न विभिन्नो लघुतरायाः अपि सृष्टेः या इअजदेन दत्ता आरचिताच ॥ २७. चेत् शश्वत्वात् नरीयात् नारीयात् समुत्पन्नः। २८. तच्चेत् उपरि इअजदे जननिः नरत्वात् नारीत्वात् अनुरूपायते। ततश्च उपरि अमराणां गुरूणां अदृश्यानां इत्येवं जनने जातायाः मरणस्यच संभूतिरनुरूपायते ॥ २९. एवंच उपरि सर्व्वे [०स्मिन्] इअजदे भवितुं नहि संदेहः ॥ ३०. यतस्तत्र यत्र जननिस्तेन प्रकारेण खाद्यं खादनं मरणंच निःसंदिग्धं ॥ ॥

३१. अस्ति यत् कश्चिच्च वक्ति यत् मशिआकः स्वयं इअजदोऽस्ति ॥ ३२. ननु इदं अद्भुततरं यत् इअजदो यो महान् उभयो र्भुवनयोः धाता पालयिता रूपेण मानुषीयेण समुद्बभूव, उदरेच योषितः क्षुद्रायाः ययौ ॥ ३३. राज्यं स्थानं आ

काशं जगतीं चक्रंच अपरंच सर्व्वं प्रवृत्तिकारित्वात् रक्षणत्वात् समुत्सृज्य प्रच्छन्नतया मलिने विषमे स्थाने निपपात ३४. निदानेच निजां तनुं निरसनाय शूलावेशनाय हस्ते दुष्टमनसां संपादयामास ३५. यावत् ते ऋते मृत्योः प्रभूतां कष्टतां अनाचारतां उपरि समारचयन् ॥ ३६. यदि चांतः उदरे योषितः समुद्बभूव । तेन हेतुना निगदंति यत् इअजदः सर्व्वेषु स्थानेषु अस्ति । ३७. तत् सर्व्वेषु स्थानेषु सत्ता अंतः उदरे तस्याः योषितः न विभिन्ना मलिनतमात् दुर्गंधितमात् स्थानात् ॥ ३८. समं तेन यत् सर्व्वेषु स्थानेषु सता इअजदस्य बभूवेति वक्तुं कुत्सितत्वं भूरितरं ॥ ३९. यतश्चेत् इत्येवं । ततः किंचिदपि ऋते इअजदात् अस्ति इति ब्रुवंति अनृतं ॥ ॥

४०. द्वितीयंच तत् यत् निगदंति यत् मरणं शूलावेशनंच शवोत्थानं मनुष्याणां निदर्शयितुं असौ प्रत्यकरोत् । ४१. तच्चेत् शवोत्थानं मनुष्याणां निदर्शयितुं विना तेन रज्जुबंधेन मरणेन कष्टेन निजेन अन्यथा न शक्तो ऽभूत् तदसौ [तदस्य] सर्व्वशक्तेः अननुरूपं ॥ ४२. अथ चेत् कोऽपि प्रतिपक्षः प्रतिघाती नाभूत् । ततो मनुष्यान् किमिति एवं निर्म्मलज्ञानिनः शवोत्थाननिरीक्षणे निःसंदिग्धान् न चकार यथा अस्य निहीनत्वं अमुना प्रकारेण कष्टतया रज्जुबंधतया हानितया दुष्टमनसां कामतया निदर्शयनं न संभूतमभूत् ॥ ४३. चेत् तं मृत्युं नूतनप्रकारतायै निजेन कामेन असौ प्रत्यकरोत् । ४४. ततो ननु निंदया शापेनच अवघातकेषु आकारणं तेषां जुहूदानांच क्रोधेन धारणं निःकारणं ॥ ४५. नच शापं निंदांच उपरि तेषां कर्त्तुं किंतु तेषां तेन कर्म्मणा प्रसाददानवद्भिः युज्यते भवितुं ॥ ॥

४६. द्वितीयंच इदं यत् पिता पुत्रश्च वायुश्च पवित्रः त्रीणि नामानि अन्योन्यस्मान्न विभिन्नानि ४७. न पूर्व्वमेकमपि ॥ ४८. इदंच यच्चेत् पुत्रो न लघुः पितुः सर्व्वज्ञतया तुल्यः पित्रा । ततो ननु नाम्ना विभिन्नेन आकारणं किमिति ॥ ४९. चेत् त्रयः एकः शक्नोति भवितुं । ततः त्रयो भवितुं नव । नवच त्रयो भवितुं शक्नुवंतीति निर्व्विकल्पमेव ॥ ५०. अपराच गणना अनेन प्रकारेण निर्म्मर्यादतया शक्यते वक्तुं ॥ ५१. इदंच यच्चेत् पुत्रो न लघुः पितुः । तत् पिताच पुत्रात् न महान् ॥ ५२. तच्चेत् पिता पुत्रात् अथवा पुत्रो न पितुः उद्दीर्यते अधिकरोतिच । ५३. इदं निःसंदिग्धमेव यत् सर्व्वं एतस्मात् तस्मात् यस्य अस्येति यत् स्वमातु र्बीजं लघु शक्नोति भवितुं । ५४. यदि कालेन यदि वान्वयेन ॥ ५५ चेत् पुत्रो न लघुः पितुः । तत्कर्त्ताच कृतात् नादि र्न महान् । द्वावपि मूलास्पदं शक्नुतः भवितुं ॥ ५७. सृष्टिश्च स्रष्टु र्न लघ्वी स्रष्टाच सृष्टे र्न महान् ॥ ५८. सर्व्वं यथा उद्दीर्यते उपमर्यादितरं ॥ ५९. इदंच यच्चेत् पुत्रः सकलेन ज्ञानेन तुल्यः पित्रा । तत् पिताच एवं अज्ञानी यथा पुत्रो यो मरणात् शूलावेशनाच्च स्वीयात् अवेत्ता बभूव ॥ ६०. याव त्तै र्विंधृत्य निकृष्टेन मृत्युना कष्टतयाच निबंध्य निहतः ॥ ६१. न विज्ञातवान् तेन यतस्तैः एतस्मात् पृष्टं यत् दिनं उत्थानस्य कदा असौ प्रत्यवोचत् यत् इदं न को ऽपि वेत्ति विना पित्रा ॥ ६२. यथा किल पुत्रो ऽज्ञानत्वेन सुनिश्चितः पिताच तथैव ॥ ॥

६३. इदंच यदसौ समग्रां सृष्टिं दातिंच आत्मनिच प्रतिघातं न-कस्माश्चित् आरचत् [ ०रचयत् ] ददौच अपघातकांश्च यान् अस्य पुत्रं विनाशितवतः ॥ ६४. चेत् इअजदो ऽपघातकान् यानस्य पुत्रस्य आत्मनिच प्रतिघातं निरर्थकं निष्कारणं स्वयं ददौ। ६५. तेच पुत्रं सर्व्वज्ञानतया अस्य निजघ्नुः। ६६. तन्ननु निःसंदिग्धं युज्यते भवितुं यत् अपहंता यो ऽस्य पुत्रस्य स्वयं बभूव ॥ ६७. चेत् विवेद यत् पुत्रं यदि संसृजामि ततो हनिष्यंति निदानेच असृजत्। ग्रहिलतरो ऽज्ञानतरश्च ॥ ६८. चेत्न विवेद। किंचिज्ज्ञतरः ॥—६९. द्वितीयंच इदं यच्चेत् इअजदः एनां सृष्टिं दातिंच न-कस्माश्चित् आरचत् [ ०रचयत् ] असौ प्रतिघातंच सर्व्वं न-कस्माश्चित् आरचत् [०चयत् ] ददौच। तत्तेषां रत्नं एकं युज्यते भवितुं ॥ ७०. ननु किमिति प्रतिघातं एवं नाशोधयत् यथा अपरां सृष्टिं ॥ ॥

७१. अन्यच्च उपरि अनिबद्धत्वे यत्तेषां वाचः आचार्यनिबंधेभ्यश्च ॥ ७२ तच्च यत् निगदति यत् न निपतति न किंचित् वृक्षात् न भवेदाघोषो नगरे न द्वौ विहंगौ अन्योन्यं युध्यतः विना आदेशेन पितुः ॥ ७३. यो निदर्शयिता अस्ति अस्याः वाचः यत् मूलास्पदं एकं। अस्य सर्व्वं कामेन ॥ ७४. ननु मशिआकः यो ऽस्य पुत्रः केन कार्येण विनिर्मितः। असौ कं मार्गं निदर्शयितुं यमस्य न कामः ॥ ७५. चेत् सर्व्वं कामः। असौ किमपि अकामि नावोचत् ॥ ७६. इदंच सर्व्वस्मात् विचारात् यत् जुहूदाः मशिआकं यमस्य पुत्रं कामेन पितुः निजघ्नुः ॥ ॥

७७. द्वितीयंच अनिबद्धतया उपरि स्वतंत्रकामत्वे प्रवीणतरं निगदति ७८ यत् मनुष्याः स्वतंत्रकामाः दत्ताः संति ॥ ७९. एवं दोषाः पापानां यान् मनुष्याः कुर्व्वंति स्वतंत्रकामीयाः संति ॥ ८०. असौ स्वतंत्रकामत्वं स्वयं मनुष्येभ्यो ददौ । ८१. तत् सर्व्वत्र एनं पापकारिणं युज्यते परिज्ञातुं यो मूलकारणं पापस्य ॥ ८२. चेत् मनुष्याः पापं दोषं स्वतंत्रकामत्वेन निजेन कुर्व्वंति न कामेन इअजदस्य। ८३. तद्व्याघ्रव्यालवृश्चिकमत्कुणादिक्षुद्रजंतवो[86] ये दंशकाः अपघातका रूपकर्म्माणः पापं दोषश्च यत्तेभ्यः सदैव प्रभवति केन स्वतंत्रकामत्वेन कस्यच पापं ॥ ८४. एवंच विषस्य यत् अपहंतृणो यदंत विषवृक्षे अपरेषुच वनस्पतिजातिषु यत्तेषां न स्वतंत्रकामत्वात् कारणं। कस्य मूले दधौ ॥ ८५ चेत् निगदंति यत् तत् विषं प्रभूतानां औषधेन रोगिणां रोगस्खलयितृ लाभवत् अभीष्टंच। ८६. तदहो पृच्छत यत् स्वयं मांद्यं हानिंच अस्य को ददौ तस्यच का अभिप्सा ८७. यस्य पश्चात् अनेन औषधं विषं यत् अपहंतृ समारचितमभीप्सितं ॥ ८८. अथवा तत् मांद्यं चेत् अपनेतुं अमृतौषधं दत्तमासिष्यत अनुरूपितरमभविष्यत् विषौषधात् ॥—८९. इदंच यत् स्वयं नाम हानिकारितेति कस्मात् मूलात् कस्याश्च लाभवत्कार्यतायाः प्रत्यभिमुखं अभिप्सा ॥ ९०. उपरि एतस्मिन् संबंधे बाहुल्येन शक्यते वक्तुं संक्षेपत्वे निदर्शितं ॥

९१. अन्यच्च वाक्यात् पावरोशस्य[87] यत्तेषामाचार्यः ९२. तत् यत् तेषां निजे मूले अनिबद्धं इदं निगदंति ९३. यत् न पुण्यं यत् कामयामि विना पापेन ॥ ९४. यत्

न कामयामि करोमि ९५. नाहं करोमि किंतु स कुरुते योऽन्तर्मे उदरे आस्ते ॥ ९६. यतः सदैव पश्यामि यन्मे अहश्च रात्रिश्च समं युद्धेन ॥ ॥

९७. द्वितीयंच वाक्यात् मशिआकस्य निगदंति यत् इअजदो मूलास्पदं रोचिषः उत्तमतायाश्च। ९८. निकृष्टत्वं तमिस्रंच एतस्मात् पृथक् ॥ ९९. इदंच यत् यथा पशुपाता यः पशूनां शतैकस्यांतः रक्षां कुरुते १००. एकं तस्मात् दुष्टश्वापदाः अपहरंति १०१. पश्चाच्च तस्यैकस्य धावति दुष्टश्वापदापहृतस्य यावत् व्यावृत्य यूथे समानयति १०२. असौ तान् नवति-च वने विमुंचति। १०३. एवं चाहमनुग्रहीतुं व्यामुग्धानामागतो ऽस्मि नच सत्यानां ॥ १०४. यतो ऽसौ यः सत्यो मार्ग्गे समानयतामनाबाधकः [समानयितुमनाबाधकः] ॥ १०५. चेत् मूलास्पदं एको ऽस्य सर्व्वं कामः। तत् मूलास्पदं कोऽपि न अपमार्ग्गेण व्यामुग्धः १०६. दुष्टश्वापदेन पशुनिर्द्दशनंच सर्व्वमस्यकामः ॥ १०७. असौ दुष्टश्वापदं स्वयमारचत् [आरचयत्] ॥ ॥

१०८. वाक् मशिआकस्य प्रभूतानिबद्धतया उपरि द्वयो र्मूलास्पदयो र्निदर्शयित्री ॥ १०९. यथा निगदंति सर्व्वस्मात् वचसो मशिआकस्य इदमेव एकं यत् अस्ति अन्यो मूलास्पदं शत्रुश्च मत् पितुः। अहमस्य इअजदस्य पुण्यकरस्यास्मि ॥ ११०. एतस्मात् वाक्यात् स्फुटमेव यत् निजं पितरं एतस्मात् शत्रोः विविनक्ति पृथक् कुरुते। १११. इदंच यत् इअजदेन सत्यत्वे सत्यतयाच विनिर्म्मितोऽहं। ११२. मां आहर्म्मनः पातककरो व्यत्ययितुं समागतः। ११३. अनेनच बहुप्रकारतया प्रतारयितुं समीहितो ऽहं ॥ ११४. ननु चेत् मूलास्पदं एको ऽस्य कोऽपि प्रतिपक्षो नास्ति। आहर्म्मनः किमिति एवं समर्थो यत् पुत्रं इअजदस्य समीहे व्यामोहयितुं ॥ ११५ चेत् स्वयं इअजदो ददौ तं पातककरं। ततस्तत् व्यामोहनकरणं ज्ञानेन कामेन निजेन। ११६. व्यामोहकर्त्ताच पुत्रस्य सर्व्वथा स्वयं ॥ ॥

११७. इदंचोद्गिरति यत् यदि जुहूदाः प्रत्यभिमुखं संवादं संतस्थुः। ततो जुहूदान् जगाद यत् यूयं एतस्मात् अधश्चरात् अहं ऊर्ध्वचरादस्मि। ११८. यूयं एतस्मात् नगरात् स्थ। अहं न तस्मादस्मि ॥ ११९. असौ इदं च जगाद किल जानामि यत् यूयं बीजात् अब्राहीमस्य स्थ। स यः आदितो मनुष्यहंता बभूव १२०. मांच समीहे निहंतुं ॥ १२१. अहं तदेव विदधामि यन्मे पिता ददर्श। यूयं तन्नु कुरुथ यत् युष्माकं निजेन पित्रा दृष्टं ॥ १२२. इदंच यच्चेत् इअजदो ऽस्ति स पिता यो युष्माकं। तत् यूयं मन्मित्राः स्थ ॥ १२३. इति हेतोः यतो ऽहं इअजदात् समुद्गतो ऽस्मि नच निजकामादागतो स्मि ॥ १२४. अनेन इअजदेन पुण्यकरेण विनिर्म्मितो ऽस्मि। तत् यूयं किमिति वाक्यं मे न शृणुथ ॥ १२५. किंतु इति हेतोः यतः पापकरात् स्थ। तत् यूयं न शक्ताः श्रोतुं १२६. कामंच निजस्य पितुः कामयथ कर्त्तुं ॥ १२७. अनेनच सत्यं नोक्तं। सर्व्वंच यत् निगदति तदनृतं निगदति। इति हेतोः यतो ऽलीकाः स्थ निजेन समं पित्रा यूयं। १२८. अहं यः सत्यं समुद्गिरामि तन्मे प्रधानं न विधत्थ ॥ १२९. सत्र यः

इअजदात् वाक्यंच इअजदस्य शृणोति। यूयं इति हेतोः यतो न इअजदात् स्थ वाक्यं मे न शृणुथ ॥ १३०. असौ अनया गिरा सर्व्वं तत् यत् न्यदर्शयत् यदस्ति द्वौ मूलास्पदे। एको येनाहं विनिर्म्मितः एकश्च येन जुहूदाः। १३१. असौ तन्न पुण्यकरं किंतु पातककरमाकारयत् ॥ ॥

१३२. असौ इदंच निजगाद यत् न क्षमो वृक्षं [ वृक्षः ] पुण्यस्य फलंच पापस्य नच तं [ सः ] पापस्य फलंच पुण्यस्य प्रदातुं ॥ १३३. इदंच यत् अथवा समग्रं वृक्षं समं फलेन पुण्यस्य कुरुते अथवा समग्रं वृक्षं समं फलेन पापस्य कुरुते ॥ १३४. यतः सर्व्वेऽपि वृक्षाः फलात् प्रकटीभवंति यदि पुण्यस्य यदिवा पापस्य ॥ १३५. असौ समग्रं वृक्षं जगाद नचार्द्धं वृक्षं ॥ १३६. ननु कथं संभवति अर्द्धो वृक्षः तेजसः अर्द्धश्च तमसः १३७. अर्द्धः पुण्यस्य अर्द्धश्च पापस्य १३८ अर्द्धश्च सत्यस्य अर्द्धश्च अनृतस्य ॥ १३९. यदि इमानि द्वितयानि अन्योन्यं प्रतिद्वंद्वीनि संति । १४०. एको वृक्षो भवितुं न शक्नुवंति ॥ ॥

१४१. असौ द्वितीयंच जुहूदानां सर्प्पाः पार्व्वतीया जुहूदा इत्याकारयत् ॥ १४२. तान् उवाच यत् कथं यूयं पुण्यं शक्ताः कर्त्तुं यदि पातककरा जुहूदाः स्थ ॥ १४३. असौ न निजं पितरं पातककरमाकारयत् ॥ १४४. इदं चोद्गिरति यत् सर्व्वेऽपि वृक्षाः ये पित्रा न उप्ताः। खनिष्यंते अग्नौच अवकरिष्यंते ॥ १४५. यस्य एतस्मात् वाक्यात् शक्यते परिज्ञातुं यत् संति वृक्षाः ये पित्रा न उप्ताः खनितुं अवकरितुंच योग्याः ॥ १४६. द्वितीयंच इदं यत् स्वीयेभ्यः समागतो ऽहं स्वीयैः न प्रतिकृतो ऽहं ॥ १४७. यस्मात् शक्यते परिज्ञातुं यत् स्वीयत्वं अस्वीयत्वंच द्वितयमास्ते ॥ ॥

१४८. इदंचोद्गिरति यत् पित मे आकाशे। ते भूयात् राज्यं। तवैवं भूयात् कामो जगत्यां यथा आकाशे ॥ १४९. मह्यं देहि अन्नं संततीयं। मां मा समुत्सृज संशयत्वे ॥ १५०. एतस्मात् वाक्यात् परिस्फुटं यदस्य कामो जगत्यां न एवं विमलं [ विमलः ] यथा आकाशे । १५१. इदंच यत् संशयत्वं मनुष्याणां न इअजदात् ॥ १५२. असौ इदंच निजगाद आदौ यत् न तेन आगतो ऽस्मि यत् आचारं मूशाकस्य[३३] विभ्रंशयामि। १५३. किंतु तेन आगतोऽस्मि यत् संपूर्णतरं करोमि ॥ १५४ अस्य समग्रा वाक् आदेशश्च स यः आचारे ज्ञातौच [ नीतौच ? ] मूशाकस्य विभ्रंशयिता प्रतिद्वंद्वीच बभूव ॥ १५५. उपरि एतस्मिन् पदे यावत् अत्र परिपूर्णं ॥ ॥

---

# [ १६ ].

१. द्वितीयंच समालेखिष्यते उपरि अशुद्धौ मानेयस्य[३४] सहस्रात् दशसहस्रेभ्यश्च एकं ॥ २. यतो ऽशुद्धिं प्रलापंच प्रतारणंच मानेयस्य मानेयीयानांच[३५] संपूर्णतया समालिखितुमशक्तोऽहं ॥ ३. अहं क्लेशेन बहुना दिवसैश्च दीर्घैः मध्यं अवाप ॥ ॥

४. ननु जानीयात माज्दइअस्नाः जरथुस्त्रीयाः यत् मूलवाक् मानेयस्य उपरि निःसीमत्वे मूलास्पदयोः ५. मध्याच उपरि समाश्लेषे ६. निर्व्वाणेच उपरि विभक्तित्वे रोचिषस्तमिस्नात् ॥ ७. तत् यत् अविभक्तिकर्तृत्वे बहुप्रतिमतरं ॥ ॥

८. द्वितीयंच इदं यत् पृथ्वी शरीरकृत्ता [०कृता ?] आहर्म्मनादीनां ॥ ९. शरीरकृत्ता [०कृता] सृष्टिः आहर्म्मनस्य ॥ १०. अस्याः व्यक्तिश्च इयं यत् आकाशं अजिनात् ११. पृथ्वीच पिशितात् १२. अद्रयश्च अस्थिभ्यः १३. वनस्पतयश्च केशेभ्यः कूनीदेवस्य[01] ॥ १४. वृष्टिश्च वीर्यं माजंदरदेवानां ये चक्रपदे निब... संति ॥ १५. मनुष्याः देवाःद्विपदाः गोपशवश्च चतुष्पदाः ॥ १६. कूनीदेवश्च सैन्याधिपतिः आहर्म्मनस्य १७. यो नखैः प्रथमं संग्रामे रोचिषं होर्म्मिज्दात् दातुः अवालिख्य अगिलत् ॥ १८. तैश्च द्वितीये संग्रामे कूनीदेवः समं बहुभि र्दैवैः गृहीतः ॥ १९. अस्तिच यत् चक्रपदे निबद्ध्य कूनीदेवो निहतः ॥ २०. इयं सृष्टिः गुर्व्वी तस्मात् धृता कृताच ॥ २१. सूर्यश्चंद्रश्च बहिराकाशे उच्चैस्तरं विनिर्म्मितः । २२. यत् यावत् तां रोचिषं देवै र्गिलितां स्तोकस्तोकं आकर्षणेन गालनेन सूर्यचंद्रयोः गालयंति आकर्षंतिच ॥ २३. पश्चात् आहर्म्मनः पुरोनिरीक्षणतया विवेद यत् एनां रोचिषं सूर्यचंद्रयोः आकर्षणेन क्षिप्रं गालयिष्यंति विवेजयिष्यंति ॥ २४. क्षिप्रं न विभक्तये रोचिषस्तमिस्नात् एनां सृष्टिं लघ्वीं या यथा मनुष्याः गोपशवश्च अपराणि जीवमंति समग्राणि तथैव प्रतिरूपाणि सृष्टेः गुर्व्याः समं अपरया सरिण्या [ शरीरिण्या ] सृष्टया समारचत् [ ०रचयत् ] । २५. जीवं रोचिषंच अंत र्वपुषि बबंध गुह्यां चिक्षेप । २६. यत् यावत् सा रोचिः या सूर्येण चंद्रेण आकृष्यते पुन र्मैथुनेन जननेनच जीवमतां प्रतिस्खलयते । २७. विभक्तिश्च दीर्घतरा भवेत् ॥ ॥

२८. वृष्टिश्च वीर्यं माजंदरदेवानां बभूव २९ तेन हेतुना यत् माजंदरदेवाः चक्रपदे निबद्धाः संति ३०. ये रोचिषं अगिलन् ३१. नवप्रकारतया विवेकतया विचित्रतया कालस्य रोचिषं तेभ्यो विभक्तुं द्वादशराशीः [ ०राशयः ] दुहितरः कालस्य उपकंठं माजंदरदेवानां नराकृतीनां निदर्शयंति ३२. यत् यावत् तेषां माजंदरदेवानां दर्शनात् तासां कामः समुदेति ३३. वीर्यंच तेभ्यो विभज्यते ॥ ३४. सा रोचिः या अंत र्वीर्ये जगत्यामवकीर्यते । ३५. वनस्पतयो वृक्षाः धान्यानिच तेभ्यः समुद्भवंति ॥ ३६. रोचि र्या अंत र्माजंदराणां वीर्येण विभज्यते ३७. साच या अंतर्जगतीषु हेतुना वनस्पतीनां जगतीभ्यो विभज्यते ॥ ॥

३८. द्वितीयं उपरि विभिन्नरत्नत्वे जीवस्य तनोश्च इदं यत् जीवः अंत र्वपुषि निबद्धो गुह्यां क्षिप्तः ॥ ३९. यथा दाता धाताच [ धर्ताच ] सर्व्वेषां सृष्टिमतां शरीरिणां आहर्म्मनो ऽस्ति ४०. इति हेतो र्न युज्यते जननिं कर्त्तुं अन्वयं प्रचारयितुं ॥ ४१. यतः सर्व्वं सहायि समं आहर्म्मनेनास्ति धातृतया मनुष्याणां गोपशूनां स्खलनकारितयाच जीवस्य रोचिषः अंतस्तनूनां नचोप्तव्यानि वनस्पतिधान्यानि ॥—४२. द्वि-

तीयंच अनिबद्धतया इदंच निगदंति ४३. यत् मृत्युकर्त्ता सृष्टेः सदैव आहर्म्मनो ऽस्ति ४४. इति हेतो र्न युज्यते कामपि सृष्टिं निहंतुं ॥ ४५. यतः आहर्म्मनकर्म्मता अस्ति ॥ ॥

४६. द्वितीयंच इदं यत् यथा सृष्टिं आहर्म्मनो दधौ निर्व्वाणे विजयी इअजदो ऽस्ति ४७. विभक्तिकर्तृतया जीवानां तनुभ्यः ४८. इयं पृथ्वी निदाने विलयिष्यति ४९. पुन र्न आरचयिष्यते ५०. नच भविष्यति शवसम्मार्ज्जनत्वं तनोः अक्षयत्वं ॥—५१. द्वितीयंच इदं यत् तयो र्द्वयो र्मूलास्पदयोः समग्रतया संस्थितिः समसीमतया एवमभूत् यथा आतपस्य छायायाश्च ॥ ५२. तयो र्नाभूत् किमपि आसनत्वं विश्लेषत्वंच मध्ये ॥ ॥

५३. ननु ब्रवीमि आदौ उपरि भवितुं अशक्यं यत् किमपि संतिष्ठमानं किंचित् अमर्यादं ५४. विना केवलं तेन यत् अमर्यादमाघोषयामि रिक्तत्वं कालंच ॥ ५५. तेच ये संति अंतः स्थाने कालेच विद्यमानाः। पदार्थाः सीमावंतो दृश्यंते ॥ ५६. इदंच यत् यदि तयोः एकत्वं द्वित्वंच उपरि समुद्गीर्यंते। तस्मात् यथा एकत्वं विना सर्व्वप्रवर्त्तनतया कस्यचित् अन्यथा भवितुं न शक्नोति ॥ ५७. यतः एकं इदं यत् अद्वितीयं ॥ ५८ द्वेच इमे यत् मूलमेकं विभिन्नं अन्योन्यतः ५९. यत् न द्वे आकार्यंते ॥ ६० यदि एकं विना सर्व्वप्रवर्त्तनतया एकत्वस्य न परिज्ञायते। ६१. द्वित्वंच विभिन्नत्वेन एकैकस्य न शक्नोति भवितुं ॥ ६२. एकं तत् यत् एकत्वेन एकं प्रवीणतरंच एकत्वेन ॥ ६३. एकं द्वितयंच अंतर्बीजं कियत्तायाः संख्यामत्तायाश्च ॥ ६४. कियत्ताच संख्यामत्ताच समताच विभिन्नताच यथाहं अवोचं विना सीमामत्तया भवितुं न शक्नोति ६५ मध्येच ज्ञानिनां निर्म्मलतरं ॥ ॥

६६. द्वितीयंच इदं यत् निःसीमत्वं तत् भवति यत् ज्ञानेन न प्रवर्त्तते ॥ ६७. यदिच केनापि ज्ञानेन प्रवर्त्तितुं न शक्नोति। अंत र्ज्ञाने इअजदस्य प्रवर्त्तितुं न शक्तमनुमानेन ॥ ६८. तत् इअजदस्य स्वत्वं स्वीयं तच्च यत् तमोमूलास्पदस्य समग्रतया अंत र्ज्ञाने न प्रवर्त्तते ॥ ६९. चेत् अस्य स्वीयं स्वत्वं अंत र्निजे ज्ञाने न प्रवर्त्तते। तत् विश्वोत्तमो विश्वदर्शीति वदतामनृतं ॥ ७०. यत् विश्वं सर्व्वत्वं विभनक्ति ॥ ७१. सर्व्वत्वं हि सर्व्वपक्षप्रवर्त्तनत्वात् सर्व्वं समाकार्यंते ॥ ७२. सर्व्वपक्षप्रवृत्तस्य सीमामत्ता स्वभावेन ॥ ७३. तत् इअजदश्चेत् सर्व्वप्रवर्तनत्वात् स्वीयात् वेत्ता। सीमामान् संयुज्यते कलयितुं ॥ ७४. चेत् निःसीमो। न वेत्ता ॥ ७५. आदौ ज्ञानं ज्ञानिनो ऽस्य सूक्ष्मतरं। परिज्ञानं यत् स्वीयस्वतायाः यथास्थतायाः कियत्तायाश्च ॥ ७६. यश्च तस्याः स्वीयायाः समग्रायाः स्वतायाः यथास्थतायाः कियतायाश्च अवेत्ता उपरिच अपरायाः यथास्थतायाः कियत्तायाश्च ज्ञानी बभूवेति वदतामनृतं ॥ ७७. इदंच यत् यथा निःसीमः अप्रवर्त्तनत्वात् ज्ञानेन न प्रवर्त्तते। ७८. तत् इदं यदसौ समग्रः स्वयं ज्ञानी किंवा अस्ति अज्ञानः। समग्रो रोचिष्मान् किंवा अस्ति तमिस्री। समग्रो जीवन् किंवा अस्ति मृतः। इदमपि अवेत्ता ॥ ॥

७९. द्वितीयंच इदं यत् रोचिषं जीवंच यदत्र अवलोकयामि विभागः सर्व्वकालादस्ति किंवा नो ॥ ८०. चेत् विभागः स्वत्वात् कालस्यास्ति [सर्वकालादस्ति] । तदहो विचारयथ यत् किंचित् यस्मात् विभागं विभक्तुं शक्यते विभागवान् शक्नोति भवितुं ॥ ८१. विभागवान् चेत् सम्मिलितः । अन्यथा नाधिकरोति ॥ ८२. सम्मिलितश्च ऋते मेलयितुः येन स सम्मिलितो मिलितः अन्यथा न संवदति ॥८३ चेत् विभागः खंडं सीमावान् अवलोक्यते । मूलेनापि यस्मात् विभागः अमुना प्रकारेण खंडेन सीमावता भवितव्यं न हि संदेहः ॥ ८४. तेन यतो निगदंति यत् सर्व्वे ऽपि फलभागाः मूले साक्ष्यदातारः । तच्चेत् विभागं खंडं सीमावंतं पश्यामि । तत् मूलमपि चेत् खंडं विभागेभ्यः सम्मिलितं सीमावत् । अन्यथा भवितुं न शक्नोति ॥ ८६. इदंच यत् निःसीमो न विभज्यते ॥ ८७. यतो विभागः समवायात् विभज्यते । ८८. समवायश्च उपरि सीमामत्तायांसाक्षी । ८९ यथाहं उपरि न्यदर्शयं ॥ ९०. यत् सत्तां यथास्थतांच मूलस्य ऋते उपमानात् प्रतिरूपाच्च फलस्य अन्यथा नावलोकयामि । ९१. सर्व्वं किंचित् फलेनावलोक्यते ९२. मूलेनापि अमुना प्रकारेण भवितव्यमेव ॥ ९३. तच्चेत् खंडत्वं सीमामत्त्वंच [सीमावत्त्वंच] फलेन दृश्यतरं । सर्व्वस्मात् विचारात् मूलमपि यस्मात् फलं सीमामत्तया निःसंदिग्धं ॥ ॥

९४. द्वितीयंच इदं यत् निःसीमः स भवति यो ऽपरिरेषितस्थानो ऽमर्यादस्वरूपः ॥ ९५. अस्य अन्यत् स्थानं आसनंच अस्य परिरेषणे नास्ति ॥ ९६. तच्चेत् द्वौ मूलास्पदीयौ निःसीमौ अमर्यादस्वरूपौ उच्यते । आकाशपृथ्वीप्रभृतीनि तनुकृतानि वर्द्धिष्णूनि जीवाश्च रोचिषश्च दातारश्च अमराः गुरुतराः प्रचुराः सहसंचाराः येषां विभिन्ननामत्वं विभिन्नत्वात् एकैकस्य अन्योन्यतो न सीमामंतः [सीमावंतः] शक्नुवंति भवितुं ॥ ९७. तत् सर्व्वं अंतः कस्य कुत्रच ददौ ॥ ९८. चेत् द्वौ मूलास्पदीयौ सर्व्वकालं अपरिरेषितस्थानौ बभूवतुः । ९९. चेत् तौ स्वतां निःसीमां सीमावतींच चक्रतुः स्थानंच इदं सर्व्वेषां वर्त्तमानानां भविष्याणां चक्रतुः । भवितुं कथं शक्नोति ॥ १००. चेत् रत्नं यत् सदैव निःसीमं सीमावत् भवितुं शक्नोति । तत् नास्तिच भवितुं शक्नोत्येव । १०१. तत् यत् उपरि अपरिवृत्तौ रत्नस्योद्गिरंति अनृतं ॥ ॥

१०२. इदंच अहो आनीयात यत् निःसीमः स भवति यस्मात् परिरेषा पूर्व्वं न विभक्ता १०३. किंचिदपि वस्तु ऋते तस्मात् पृथक् तस्मात् भवितुं न शक्नोति ॥ १०४. ऋते सीमायाः निःसीमत्वस्य न परिज्ञायते ॥ १०५. अथवा स्तब्धतया तत् किंचित् यत् न वेत्ति यत् किं सदैवोद्गिरति युध्यति वचश्च उपरि प्रचारयति लघून् लघुज्ञानिनः तं प्रति विमोहितमार्गं कस्मै ॥१०६. यदिच जडतया इदंचोद्गिरति यदसौ स्वयं निःसीमः अस्य ज्ञानंच निःसीमं निःसीमज्ञानतया वेत्ति यत् निःसीमो ऽस्ति । १०७. तत् अनृतं द्विवारंच अनृतं ॥ १०८. एकंच इदं यत् ज्ञानं उपरि कस्यचित् तस्य यत् ज्ञानेन

अवलोकितं अंतर्ज्ञानेच प्रवर्त्तितं ॥ १०९. किंचिदपि विना तत् यदंतर्ज्ञाने समग्राय प्रवर्त्तितं दृष्टंच अन्यथा संपूर्णं न परिज्ञायते ॥ ११०. कस्यचित् पदार्थस्य परिज्ञानं समग्रावलोकनेन पदार्थस्य भवति ॥ १११. समग्रावलोकनंच पदार्थस्य समग्राप्रवृत्त्याच पदार्थस्य अंतर्ज्ञाने भवति ॥ ......................................

[All MSS. hitherto examined break off here].



